नरकेषु अनुभवन्ता बहू दुःखा संजीवे निरये ऊर्ध्वपादा अधोशिरा वासीहि च परशूहि च क्षीयन्ता। अपरे पि परस्परं प्रदुष्टमनसंकल्पा आयसेहि नखेहि पाटेन्ति तीक्ष्णानि च असिपत्राणि हस्तेषु प्रादुर्भवन्ति येहि परस्परं गात्राणिच्छिन्दन्ति न च कालं करोन्ति यावत् सानं पापका कर्मा न परिक्षीणा। कालसूत्रे महानरके अद्राक्षीत् सत्वां कालसूत्रेण सूत्रिताङ्गा निहतक्षीयन्तां परशूहि पि विपाटीयन्तां करपत्रेहि विपाटीयन्तान्। तक्षितपटितो च सानं कायो पुनरुहचति असाता वेदना वेदयन्ति न चैवं कालं करोन्ति कर्मोपस्तब्धत्वात्। संघाते पि महानरके अद्राक्षीत् सत्वसहस्राणि पर्वतेहि पीडियन्ता आदीप्तसंप्रज्वलितसज्योतिभूतेहि शोणितनद्यो च प्रसवन्ति भूयो च,तानि पर्वतानि ते च संक्रमन्ति न चैवं तावत् कालं करोन्ति कर्मोपस्तब्धत्वात्। आद्राक्षीदेकान्तरौरवे सत्वसहस्रियो ताम्रमयघनेषु आदीप्तसंप्रज्वलितसज्योतिभूतेषु धूमसमाकुलेषु प्रक्षिप्ता दुःखसहस्राणि अनुभोन्ता। महारौरवे आदीप्तसंप्रज्वलिते सज्योतिभूते अग्निस्मिं संप्रक्षिप्तानां महारावं रवन्तानां च शब्दो चक्रवाडमहाचक्रवाडेहि पर्वतेहि प्रतिहन्यते येहि चतुर्हि महाद्वीपेहि जम्बुद्वीपपूर्वविदेहअपरगोदानीयउत्तरकुरुषु मनुष्याणां श्रोताभासमागच्छति। अद्राक्षीत्तपने अनेका सत्वसहस्रियो एकान्तकदुःखवेदना वेदयन्तां पार्ष्णि उपादाय यावदधिक्ककाटिका अयोकुट्टनेहि कुट्टीयन्ता अपराणि च दुःखसहस्राणि समनुभवन्ता न चैवं ताव कालं करोन्ति कर्मोपस्तब्धत्वात्। तस्मिं महानरके आदिप्तसंप्रज्वलिते सज्योतिभूते अनेकायो सत्वसहस्रियो उपपन्ना दुःखा वेदनां वेदेन्ता। तस्मिं महानरके समन्तायोजनशतिके पूर्वाय भित्तीय अर्चिसहस्राणि उत्पत्तित्वा पश्चिमाये भित्तीये प्रत्यहन्यन्ति। पश्चिमाये भित्तीये अर्चिसहस्राणि उत्पत्तित्वा पूर्वाये भित्तीये प्रत्यहन्यन्ति। दक्षिणाये उत्पत्तित्वा उत्तराये प्रत्यहन्यन्ति। उत्तराये उत्पत्तित्वा दक्षिणायं प्रत्यहन्यन्ति। भूमीये उत्पत्तित्वा तले प्रत्यहन्यन्ति। तलातो उत्पत्तित्वा भूमौ प्रत्यहन्यन्ति। तायो सत्वसहस्रियो समन्ततो परिपतन्ति

Sen. 6

न चैवं तावत्[a] कालं करोन्ति कर्मो[b]पस्तब्धत्वात्[c]। प्रतापस्मिं महानरके पर्वता[d] प्रज्वलिता आदीप्ता[e] सज्योतिभूता[f]। नैरयिकेहि[g] सत्वेहि शूलोपेतेहि[h] तानि पर्वतानि परिचारितानि[i]। एदृशानि दुःखानि समनुभवन्ति न चैवं[j] ताव कालं करोन्ति कर्मोपस्तब्धत्वात्। अतो महानरके मुक्ताः कुक्कुलन्ते वगाहन्ति। ते च तत्र कुक्कुले दह्यमानायो जना प्रधावन्ति न चैवं[k] कालं करोन्ति कर्मोपस्तब्धत्वात्। कुक्कुलातो मुक्ताः[l] कुणपं 5 Sen. 7

अवगाहन्ति[m]। तत्र कृष्णेहि[n] प्राणकेहि[o] अयोमुखेहि[p] खज्जन्ति न चैवं[q] कालं करोन्ति[r] कर्मोपस्तब्धत्वात्। कुणपातो[s] मुक्ता[t] नरकोत्सदा[u] द्रुमाणि रमणीयानि च वनप्रान्तानि[v] पश्यन्ति तेन सुखार्थिनो[w] तानि वनप्रान्तानि धावन्ति। तत्रापि[x] सानं कुलला चं गृध्रा[y] च काकोलूका[z] च अयोमुखा आर्द्र[a] वृक्षे वा वर्जयित्वा[b] मान्सानि खादन्ति। यं[c] तेषामस्थीनि[d] अवशेषाणि भूयो[e] पि मान्सच्छवि[f] मान्सशोणितमुपजायति[g] न चैवं[h] कालं कुर्वन्ति[i] कर्मोपस्तब्धत्वात्। 10

ते[j] तेषां पक्षिणां[k] भीता अलेने[l] लेनसंज्ञिनो असिपत्रवनं[m] नरककुम्भं[n] च प्रविशन्ति। तत्रापि संप्रविष्टानां वातानि उपवायन्ति[o] यैस्तानि[p] असिपत्राणि[q] पतन्ति[r] तीक्ष्णानि। तेषां सत्वानां गात्राणि प्रत्याहन्यन्ति[s] नैवं[t] सानं कश्चित्काये प्रदेशो यो अक्षतो भवति[u] अन्तमसतो[v] बालाग्रकोटिनिष्क्रममात्रोऽपि[w][x], न चैवं[y] कालं[z] करोन्ति कर्मोपस्तब्धत्वात्। ते क्षता च शयाना[a] रुधिरम्रक्षित[b]शरीरा[c] वैतरणीं नदीं[d] अवगाहन्ति[e] सत्वा कठिनां क्षारनदीं[f][g] 15

याव सानं श्लक्ष्णितानि अंगानि प्रतिविध्यन्ति[h], न चैवं[i] कालं[j] करोन्ति कर्मोपस्तब्धत्वात्। ततोऽपि सानं नरकपाला[k] आयसेहि अङ्कुशेहि उद्धरेत्वा[l] नदीतीरे[m] आदीप्ताये भूमिये[n] संप्रज्वलितसतेजोभूताये[o] आविद्धानां[p] एवमाह[q]। अहह[r] भो पुरुषाः किमिच्छथ[s]। ते Sen. 8

एवमाहन्सुः[t]। परिबुभुक्षिता[u] स्म संपिपासिता[v] स्म। ततो[w] सानं नरकपालाः[x] अयोविष्कंभनेभि मुखं विष्कंभयित्वा आदीप्तसंप्रज्वलितसतेजोभूतेहि[y][z] अयोषण्डं धमेन्ति 20

मुखं[a] स्वकं विवरयित्वा आदीप्तानि संप्रज्वलितानि[b] सतेजोभूतानि अयोगुडानि मुखे[c] संप्रक्षिपन्ति। तं[d] भुंजन्तां भवन्तो[e]। ताम्रलोहं[f] च सानं विलीनकं पाययन्ति[g]।

पिबन्तां[a] भवन्तो[b]। यो[c] सानं धममान एव ओष्ठं[d] दहति ओष्ठं दहित्वा[e] जिह्वां दहति जिह्वां दहित्वा तालुकं दहति तालुकं दहित्वा कण्ठं दहति कण्ठं[f] दहित्वा अन्त्रं[g] दहति अन्त्रं[h] दहित्वा अन्त्रगुणमादाय अधोभागेन[i] गच्छति न चैवं[j] तावत्[k] कालं करोन्ति[l] कर्मोपस्तब्धत्वा[m]।

एवं स्थविरो महामौद्गल्यायनो[n] अष्टसु महानरकेषु सत्वा दुःखसहस्राण्यनुभवन्ता[o] दृष्ट्वानहो[p] कृच्छ्रन्ति[q] जेतवनमागत्वा चतुर्णां[r] परिषदां विस्तरेणारोचयति[s]। एवं सत्वा अष्टसु महानरकेषु[t] षोडशोत्सदेषु विविधानि दुःखसहस्राणि[u] प्रत्यनुभवन्ति। तस्माज्ज्ञातव्यं[v] प्राप्तव्यं बोद्धव्यं अभिसंबोद्धव्यं[w] कर्तव्यं कुशलं कर्तव्यं[x] ब्रह्मचर्यं[y] न च वा[z] लोके किञ्चित्पापं कर्म करणीयं[a] ति वदेमि। एवं स्थविरस्य महामौद्गल्यायनस्य[b] श्रुत्वा बहूनि[c] प्राणिसहस्राणि देवमनुष्याणां[d] अद्भुतं प्राप्नुवन्ति।

Sen. 9 एवं समासतो नरकवर्णः[e]। विस्तरतो प्युपवर्णयिष्यामि।

इमं[f] लोकं पारलोकं सत्वानामागतिं[g] गतिं।
च्युतिउपपत्तिसंसारं[h] संबुद्धो स्वयमद्दसा[i] ॥१॥
आवज्जन्तो[j] सफलतां कर्मणां[k] प्राणसंश्रितां[l]।
यथास्थानं[m] विपाकं च स्वयमवबुध्ये[n] मुनिः[o] ॥२॥
सो अभिज्ञाय[p] आख्यासि नरकानष्ट गौतमः[q]।
प्रत्यक्षधर्मा[r] भगवां[s] सर्वधर्मेषु चक्षुमां ॥३॥
संजीवं कालसूत्रं च संघातं[t] च द्वौ च रौरवौ।
अथापरा[u] महावीची तपनो[v] च प्रतापनो ॥४॥
इत्येते अष्टौ निरया आख्याता दुरतिक्रमा[w]।
आकीर्णा[x] रौद्रकर्मेभिः प्रत्येकषोडशोत्सदा[y][z] ॥५॥

चतुःकला[a] चतुर्द्वारा[b] विभक्ता[c] भागशो मिता ।
उद्गता योजनशतं[d] समन्ताच्छतयोजनं[e] ॥६॥
अयः[f]प्राकारपरिक्षिप्ता[g] अयसा[h] प्रतिकुब्जिताः[i] ।
तेषामयोमयी[j] भूमिः[k] प्रज्वलिता तेजसायुता ॥७॥
सदा[l]यसफालास्फारा[m] आवसथा दुरासदा । 5
रोमहर्षणरूपा[n] च भीष्मा प्रतिभया[o] दुःखा ॥८॥
महद्भयंकरा[p] सर्वे अर्चिशतसमाकुला । Sen. 10
एकैको योजनशतं[q] आदाये संप्रभासति[r] ॥९॥
यत्र सत्वा[s] बहू[t] रौद्रा[u] महाकिल्विषकारका ।
चिरं[v] कालं पतप्पन्ति[w] अपि च वर्षशतान्यपि[x] ॥१०॥ 10
अयोमयेहि[y] दण्डेहि[z] स्थूलनरकपालकाः[a] ।
हनन्ति प्रत्यमित्राणि[b] ये[c] भोन्ति कृतकिल्विषा[d] ॥११॥
तेषामहं[e] कीर्तयिष्यामि गिरायमनुपूर्वशः ।
श्रोतुमादाय सत्कृत्य शृणोथ[f] मम भाषतः[g] ॥१२॥
संजीवे[h] सत्वा निरये[i] ऊर्धपादा अधोशिराः । 15
प्रलंबयित्वा[j] तक्ष्यन्ति वासीहि[k] परशूहि च ॥१३॥
ततो नखेहि तीक्ष्णेहि आयसेहि स्वयंभुहि[l] ।
अन्यमन्यं[m] विवादेन्ति[n] क्रुद्धा[o] क्रोधवशानुगाः[p] ॥१४॥
असिनो[q] चापरा तेषां तीक्ष्णा[r] हस्तेषु जायिथ[s] ।
येहिच्छिन्दन्ति[t] अन्योन्यं प्रदुष्टमनसारका[u] ॥१५॥ 20
तेषां सीदन्ति गात्राणि[v] शीतलवातऊहता ।
सर्वाङ्गज्वलनस्तेषां[w] पूर्वकर्मविपाकतः ॥१६॥

एवं शास्ता यथाभूत[a]मभिज्ञा[b]य तथागतो[c]।
संजी[d]वमिति आख्यासि आवासं पापकर्मणां[e] ॥१७॥
Sen. 11 संजी[f]वातो च निर्मुक्ता[g] कुक्कुल[h]मवगाहिषु।
हन्यमाना समागम्य दीर्घ[i]मायतविस्तरं ॥१८॥
5 ते[j] खु तत्र प्रधा[k]वन्ति योजनानि अनेक[l]शो।
दह्यमाना कुक्कु[m]लेन वेदे[n]न्ता बहुदुःख[o]कं ॥१९॥
कुक्कुलातो च निर्मुक्ताः कुणप[p]मवगाहिथ।
दीर्घप[q]दातिविस्ती[r]र्णं ते विध्वंसि[s]तपौरुषा ॥२०॥
तमे[t]नं कृष्णप्राणका अग्नितीक्ष्णमुखा खरा[u]।
10 छविं[v] भित्त्वा[w]न खाद[x]न्ति मान्स[y]शोणितभोजनाः ॥२१॥
कुण[z]पातो च[a] उत्तीर्णा द्रुमा[b] पश्यन्ति शोभना[c]।
हरितान्[d]पत्रसंछन्न ास्ताना[e]यान्ति सुखार्थि[f]नः ॥२२॥
तमेनं[g] कुल[h]ला गृध्रा काकोला च अयोमु[i]खा।
आर्द्र[j] वृक्षे च वर्जि[k]त्वा खादन्ति रुधि[l]रक्षतां ॥२३॥
15 यदा च खादिता भोन्ति अस्थीनि अव[m]शेषिता।
पुनस्तेषां छ[n]विमा[o]न्सं रुधिरं चोपजायते ॥२४॥
ते[p] भी[q]ता उत्पति[r]त्वान अलेना लेनसं[s]ज्ञिनो।
असिप[t]त्रवनं घोरं हन्य[u]माना उपागमि ॥२५॥
Sen. 12 ततो क्षता[v] च आर्ता च बहु[w]रुधिरम्रक्षिता।
20 असिपत्रवना मुक्ताः यान्ति[x] वैत[y]रणीं नदीं ॥२६॥
तेन ता[z]मवगाहन्ति त[a]प्तां क्षारो[b]दकां नदीं।
ते[c]षां च अङ्ग[d]मङ्गानि क्षतानि प्रति[e]विध्यत ॥२७॥

ततोऽङ्कुशेहि[a] विद्धित्वा[b] आयसैः यमपौरुषाः[c] ।
उत्क्षिपित्वा[d] नदीतीरे भुंजावेन्ति अयोगुडां ॥२८॥
ताम्रलोहं च[e] शुल्वं च आपायेन्ति विलीनकं ।
तमेषामन्त्रमादाय[f] अधोभागेन गच्छति ॥२९॥
एतानि पापकर्मान्ता[g] नरकां प्रतिपद्यिथ[h] । 5
अकृत्वान कुशलं कर्म वाममार्गानुसारिणः[i] ॥३०॥
ये च पापानि कर्माणि परिवर्जेन्ति[j] योनिशः ।
एकान्तकुशलाचारा[k] न ते गच्छन्ति[l] दुर्गतिं ॥३१॥
तस्मा[m] द्विरूपपर्याया कर्मा[n] कल्याणपापका[o] ।
पापानि[p] परिवर्जित्वा कल्याणं आचरे[q] शुभं ॥३२॥ 10
कालसूत्रस्मिं[r] नरके आर्द्रवृक्षे[s] व वर्जिताः ।
सूत्रयित्वान तेषाङ्गा[t] वासीहि परशूहि[u] च ॥३३॥
ततो अयोमया[v] पत्रा[w] दीर्घकालसुतापिता[x] ।
दहन्ता पीडयन्ता[y] च गात्रेषु परिवेष्टिता[z] ॥३४॥
दहित्वा पीडयित्वा[a] च अयोपत्रा[b] विघट्टिता । 15 Sen. 13
आवृंहितं[c] छविमान्सं[d] रुधिरं च प्रसारये ॥३५॥
ततो[e] पार्ष्णीहि पाटेत्वा याव अधिकृकाटिकां[f] ।
कालसूत्रस्मिं[g] नरके बहू[h] अपि संघट्टति ॥३६॥
भैरवे[i] अन्धकारस्मि[j] वार्ता[k] यत्र न दृश्यति ।
धूमसंघातस्मि[l] तस्मिं नरके ओसरन्ति[m] च ॥३७॥ 20
ते च तत्र[n] प्रधावन्ति योजनानि अनेकशः[o] ।
अन्यमन्यं आक्रमन्ता बध्रेषु[p] परमन्त्रशः[q] ॥३८॥

एवं शास्ता यथाभूत[a] अभिज्ञाय तथागतः ।
कालसूत्रं इदं वक्षे[b] आवासं पापकर्मिणां ॥३९॥
संघातस्मि[c] च नरके महता[d] पर्वता अधो ।
तेषामन्त[e]रिकं[f] सत्वा मृगवशो[g] प्रवेशिता ॥४०॥
5 ते पि शैला समागम्य[h] सत्वानां कर्मप्रत्यया ।
पीडयन्ति बहु प्राणां अग्निस्क[i]न्धनि[j]भानिव ॥४१॥
पीडितानां[k] च गात्राणां बहुं स्रवति शोणि[l]तं ।
शरीरसंभ्रमे[m] चापि पूयनद्यो प्रवर्तिथ ॥४२॥
Sen. 14 आयसासु[n] च[o] द्रोणीषु अयोमुशलकोटिषु ।
10 सुभन्ति[p] प्रत्यमि[q]त्राणि अपि वर्ष[r]शतं बहुं ॥४३॥
एवं शास्ता यथाभू[s]तं अभिज्ञाय तथागतः ।
संघा[t]तमिदमाख्या[u]सि आवासं पापक[v]र्मिणां ॥४४॥
रौर[w]वस्मि च नरके ओरुद्धा[x] जनता[y] बहु ।
अग्निस्मि प्रज्व[z]लितस्मिं शब्दं कुर्वन्ति भैरवं ॥४५॥
15 यदा च अग्निर्नि[a]र्वाति अथ[b] तूष्णीभवन्ति ते ।
पुनरग्नि[c]स्मि प्रज्वलिते निर्ना[d]दन्ति महत्[e]स्वरं ॥४६॥
द्वि[f]तीयो पि च आख्यातो रौरवो रोमहर्षणः ।
निर[g]न्तकूलनरको गम्भीरो नसमु[h]त्तरो ॥४७॥
तत्र दण्डं गृही[i]त्वान स्थूलनरकपा[j]लका ।
20 सुभन्ति[k] प्रत्यमि[l]त्राणि अपि वर्ष[m]शतं बहुं ॥४८॥
एवं[n] शास्ता यथा[o]भूतं अभिज्ञाय तथा[p]गतो ।
रौरवं इति आख्यासि आवासं पाप[q]कर्मिणां ॥४९॥

तपन[a]स्मि च नरके त[b]प्तलोहो समुद्यतः।
नि:[c]स्वनन्ते च सं[d]तप्ता अ[e]ग्निस्कन्धसमा दुःखा ॥५०॥
त[f]त्र पा[g]पसमाचारा ओरुद्धा ज[h]नता बहु।
पच्यन्ति पापक[i]र्मान्ता ये भोन्ति कृतकिल्बिषाः ॥५१॥
तां पक्वमात्रा संखि[j]न्ना खा[k]देन्ति सुनखा बहु। 5 Sen. 15
प्र[l]वृद्धकाया बलिनो मान्सशो[m]णितभोजना ॥५२॥
यदा च खादिता भोन्ति अ[n]स्थीनि अव[o]शेषिता।
अथ तेषां छ[p]विमान्सं रुधिरं चोपजा[q]यति ॥५३॥
एवं शास्ता[r] यथाभूतमभिज्ञाय तथागतः।
त[s]पनमिद[t]माख्यासि आवासं पाप[u]कर्मणां ॥५४॥ 10
प्रता[v]पनस्मि नरके तीक्ष्ण[w]शूला अयो[x]मुखा।
म[y]हतो अ[z]ग्निस्कन्धस्य पर्व[a]तो भयभैरवः ॥५५॥
तत्र पापस[b]माचारा आवृता ज[c]नता ब[d]हु।
अ[e]ण्वन्ति पापक[f]र्मान्ता मच्छा कठ[g]ल्लगता यथा ॥५६॥
ए[h]वं शास्ता यथा[i]भूतं अभिज्ञाय तथाग[j]तः। 15
प्र[k]तापनन्ति आख्यासि आवासं पापक[l]र्मिणां ॥५७॥
ततो अवी[m]ची नर[n]को एका[o]न्तकटुको दुः[p]खो।
म[q]हन्तो तपोसं[r]तप्तो अ[s]र्चिसंघगणावृतः ॥५८॥
अयोगुडा हि[t] अग्निस्मि य[u]थरिव संतापिता।
ए[v]वं अवीची नरको हेष्टा उपरि पा[w]र्श्वतो ॥५९॥ 20
जा[x]तवेदोसमा का[y]याः तेषां नरकवासिनां।
प[z]श्यन्ति कर्मदृढतां न[a] तस्माद्भो[b]ति नो गतिः ॥६०॥ Sen. 16

ते च तत्र प्रधावन्ति[a] दृष्ट्वा द्वारमपावृतं।
अपि निष्क्रमणं यस्मा[b] अस्ति मोक्षगवेषिणां ॥६१॥
येषां च पापकं कर्म[c] अविपक्वं[d] पुरा कृतं।
न ते लभन्ति निर्गन्तुं निरयात् कर्म[e]प्रत्यया ॥६२॥
एवं[f] शास्ता यथाभूतं[g] अभिज्ञाय तथागतः[h]।
अवीचिमिति[i] आख्यासि आवासं पापकर्मिणां ॥६३॥

संजीवं[j] नाम। कस्य कर्मस्य विपाकेन[k] तत्र सत्वा उपपद्यन्ति। इह सपत्ना[l] ये वा भोन्ति[m] सापत्नका[n] वा वैरिणः[o] क्षेत्र[p]वैरिका वा वस्तु[q]वैरिका वा वप्र[r]वैरिका वा प्रतिराजानो[s] वा चौरा[t] वा संग्रामगता[u] अन्यमन्यस्मिं[v] सापत्नानि चित्तानि उपस्थापयित्वा[w] कालं[x] कुर्वन्ति तस्य कर्मस्य विपाकतो तत्र सत्वा उपपद्यन्ति। एवं खलु पुनः[y] आधिपतेयमात्रमेतं तत्रोपपत्तेः। तत्रोपपन्ना अन्येषां पि पापकानामकुशलानां कर्माणां विपाकं प्रत्यनुभवन्ति। कस्य[z] कर्मस्य विपाकेन तक्षीयन्ति[a]। येहि इह जीवन्तो[b] प्राणका तच्छिता[c] भवन्ति वासीहि परशूहि कुठारीहि[d] तस्य कर्मस्य विपाकेन तक्षीयन्ति[e]। कस्य कर्मस्य विपाकतो[f] तेषां शीतको वायु[g] [Sen. 17] उपवायति[h]। येहि इह निवापकभोजनानि[i] दत्तानि भोन्ति शृगाल[j]-महिषाण[k] शूकराण कुक्कुटान पोषितानि[l] मांसार्थाय[m] वधिष्यामि[n] त्ति तस्य कर्मस्य विपाकतो[o] तेषां ...... हस्तेषु नखा जायन्ति[p] दण्डा वा आयसा। यथा इह आयुधयानानि[q] दत्तानि भोन्ति[r] एवं यूयं[s] इमेहि आयुधेहि इत्थंनामं[t] ग्रामं वा नगरं वा निगमं वा हनध्वं[u] मनुष्यां[v] वा तिरच्छानगतां वा तस्य[w] कर्मस्य विपाकतो[x] तेषां हस्तेषु दण्डा[y] वायसा[z] जायन्ति असिनो[a] च। केनैष संजीवो[b]। तत्र तेषां नैरयिकानां[c] एवं भवति[d] संजीवं[e] कालसूत्रभूतिकं[f] तेनैष संजीवनिरयो[g]।

कालसूत्रं[a] नाम। सो नरको याव[b] आयुधहस्ता[c] याव[d] सज्योतिभूतो[e]। तत्र तां नैरयिका निरयपाला[g] आर्द्रं वृक्षे वा वर्जेत्वा कालसूत्रवशेन[h] तक्षन्ति[i] अष्टांशे[j] पि षडंशे[k] पि चतुरंशे[l] पि[m]। अन्येषां दानि[n] पार्ष्णि[o] उपादाय यावत्कृकाटिकातो[p] यथा[q] इक्षुगण्डिका[r] एवं छिन्दन्ता[s] गच्छन्ति[t] अन्येषां[u] पुनः कृकाटिकादुपादाय यावत्पार्ष्णि[v] यथा इक्षुगण्डिका एवं छिन्दन्ता गच्छन्ति[w]। ते तथाभूता[x] अतिमात्रं[y] दुःखा वेदना वेदेन्ति[z] न च पुनः कालं करोन्ति यावं[a] न तत्पापकं कर्मं[b] क्षीणं भवति[c]। कस्य[d] कर्मस्य विपाकेन तत्र सत्वा उपपद्यन्ति[e]। येहि इह बद्धा भवन्ति[f] हस्तिनिगडादिभिः[g] कर्मकारापिता[h] वा[i] भवन्ति[j] एत्तकानां[k] हस्तानि छिन्दथ[l] पादानि छिन्दथ एत्तकानां नासा[m] एत्तकानां[n] स्नायुमान्सं उत्पाटेथ[o] एत्तकानां बाहु[p] एत्तकानां[q] पृष्ठिमान्सं[r] उत्पाटेथ पंचवारं[s] वा दशवारकं[t] वा तस्य कर्मस्य[u] विपाकेन तत्र सत्वा उपपद्यन्ति। एवं खलु पुनः[v] आधिपतेयमात्रमेतं[w] तत्रोपपत्तोः[x]। तत्रोपपन्ना[y] अन्येषां[z] पि पापकानामकुशलानां[a] कर्मणां[b] विपाकं प्रत्यनुभवन्ति। तत्र ते नैरयिका निरयपालैस्ताड्यमाना[c] परिभाष्यमाणाः[d] सुभस्सू ति आहंसु[e]। ते[f] संभीता[g] बहूनि प्राणसहस्राणि[h] यथा[i] नैवजीवानि एवन्तिष्ठन्ति[j]। अथ[k] यमपालानां[l] पट्टानां तप्तानां संप्रज्वलितानां सज्योतिभूतानां[m] बहूनि पट्टसहस्राणि पुरतो[n] वैहायसा[o] गच्छन्ति। तेषां दानि आगच्छतां[p] शब्दं करोन्ति। एतानि[q] आगच्छन्तीति[r]। तानि तेषां आगत्वा प्रत्येकं गात्राणि परिवेष्टन्ति[s]। तत्र तेषां छविं[t] निर्दहन्ति चर्मं[u] पि मान्सं[v] पि स्नायुं[w] पि निर्दहन्ति यथा[x] सर्वं[y] पि निर्दग्धं[z] भवति[a]। अथ तेषां आवृंहितं[b] तच्छविमान्सलोहितं[c] व्यवदह्यति[d]। ते[e] तथाभूता अधिमात्रं दुःखा वेदनां वेदयन्ति, न च पुनः कालं करोन्ति[f] याव[g] सानं[h] तं पापकं[i] कर्मं व्यन्तीकृतं न भवति[j]। एवं खलु पुनः आधिपतेयमात्रमेतं[k] तत्रोपपत्तेः[l]। तत्रोपपन्ना[m] अन्येषां[n] पि पापकानामकुशलानां[o] कर्मणां[p] विपाकं[q] प्रत्यनुभवन्ति[r]। कस्य

5 · Sen. 18 · 10 · 15 · 20 · Sen. 19

कर्मस्य विपाकेन[a] तत्र सत्वा उपपद्यन्ति[b]। येहि[c] इह जीवन्ता[d] प्राणा[e] अनेकशो घाताविता[f] भवन्ति[g] येहि इह याचनकेहि वा पण्डकेहि वा सर्वदण्डेहि[h] वा दुःशीलेहि वा प्रव्रजितेहि[i] चीवराणि[j] वा कायबन्धनानि वा परिभुंजितानि भवन्ति[k], तस्य कर्मस्य[l] विपाकेन तत्र सत्वा उपपद्यन्ति। एवं खलु पुनः आधिपतेयमात्रमेतं[m][n] तत्रोपपत्तेः[o]। तत्रोपपन्ना[p] अन्येषां[q] पि[r] पापकानामकुशलानां कर्मणां[s] विपाकं प्रत्यनुभवन्ति। अन्येषां दानि[t] पार्ष्णि[u] उपादाय यावक्कृकाटिकातो[v] वध्री विदारेन्ति। अन्येषां दानि कृकाटिकातो उपादाय यावपार्ष्णि[w] वध्री[x] विदारेन्ति। अन्येषां[y] दानि[z] कृकाटिका उपादाय[a] यावकटीयो चीरकवध्रानि[b][c] करोन्ति[d]। ते तथाभूताधिमात्रां[e][f] वेदना[g] वेदयन्ति[h]। कस्य[i] कर्मस्य विपाकेनात्र[j] सत्वा[k] उपपद्यन्ति। येहि इध[l] एरकवार्षिका[m] व्रा कारापिता[n] चीरकवार्षिका[o] कारापिता[p] वा[q] तस्य कर्मस्य विपाकेन तत्र सत्वा उपपद्यन्ति[r]। यो[s] निरये[t] अन्धकारधूमसंघो[u] परितो[v] सो धूमो[w] तीक्ष्णो कटुको भयानको छविं[x] भित्त्वा चर्मं[y] भित्त्वा मान्सं भित्त्वा स्नायुं भित्त्वा अस्थि भित्त्वा अस्थिमर्जं मान्साद्यतिनिर्याति[z][a]। सर्वे[b] काया[c] मूर्छन्ता[d] तत्र संप्रक्षियन्ति[e]। ते तत्र[f] अनेकानि योजनशतानि[g] अन्वाहिण्डन्ता[h] अन्यमन्यं आक्रमन्ता[i] पटिसुभन्ति[j]। ते तथाभूता अधिमात्रा[k] वेदनां[l] वेदेन्ति[m] न च पुनः कालं[n] करोन्ति याव[o] सानं तं पापकं कर्म[p] व्यन्तीकृतं[q] न भवति[r]। कस्य[s] कर्मस्य विपाकतो[t] तत्र सत्वा उपपद्यन्ति[u]। येहि इध[v] रन्ध्रेषु वा गुत्तीषु वा कारासु[w] वा बन्धेषु वा साहिकानां[x] वा किंपुरुषकानां[y] वा उन्दुरूणां[z] वा विडालानां[a] वा अजगराणां[b] वा विले धूपं कृत्वा द्वारा[c] रक्षिता भवन्ति[d] मधुकरा वा धूमेन[e] बाधिता भवन्ति तस्य कर्मस्य विपाकतो तत्र सत्वा उपपद्यन्ति। एवं खलु पुनः[f] विविधानां पापकानां[g] अकुशलानां कर्मणां[h] विपाकतो तत्र सत्वा उपपद्यन्ति। एवं खलु पुनः आधिपतेयमात्रमेतं[i] तत्रोपपत्तेः[j]। तत्रोपपन्नाः[k] अन्येषां[l] पि विस्तरः[m]। केनेदं कालसूत्रं[n]। तत्र

नैरयिकान्[a]निरयपाला[b] आर्द्र[c] वृक्षे वा वर्जेत्वा[d] कालसूत्रवशेन[e] तक्षन्ति[f] तेनैष[g] कालसूत्र-[h]
निरयो यथाकर्तव्यो[i] ।

संघातो नाम[j] । सो नरको पर्वतान्तरिक[k]संस्थितो[l] आयसो आदीप्तसंप्रज्वलितो — Sen. 21
सज्योतिभूतो[m] अनेकानि योजनशतानि आयतो[n] । तत्र तेषां[o] नैरयिकानां[p] निरयपाला
आयुधहस्ता[q] उद्देशेन्ति[r] । ते दानि भीताः[s] तं[t] पर्वतान्तरिकं[u] प्रविशन्ति । तेषां[v] दानि — 5
पुरतोऽग्नि प्रादुर्भूतो[w] । ते[x] दानि भीताः प्रतिनिवर्तन्ति[y] । तेषां दानि पृष्ठतोऽग्नि[z]
प्रादुर्भवति[a] । ते दानि शैलाः परस्परं[b] समागच्छन्ति[c] । तेषु दानि आगच्छन्तेषु शब्दं[d]
करोन्ति[e] एतागच्छन्ति[f] एतागच्छन्तीति । ते समागता यथा इक्षु[g] एवं पीडयन्ति ।
ते दानि शैला वैहायसमभ्युद्गच्छन्ति[h] । ते तेषां[i] हेष्टा अनुप्रविशन्ति[j] । यदा[k] अनुप्रविष्टा
भवन्ति बहूनि प्राणिसहस्राणि[l] ते दानि[m] शैला सन्निविशन्ति यथा इक्षुगण्डा एवं — 10
पीडेन्ति[n] लोहितनदीयो प्रस्यन्दन्ति[o] । अस्थिसंकलिकाः[p] परिवर्ज्यन्ति[q] निर्मान्सा[r]
स्नायुसंयुक्ताः[s] । तथाभूता[t] वेदना[u] वेदेन्ति न च पुनः[v] कालं करोन्ति[w] यावसानं[x] न[y] तं
पापकं कर्म व्यन्तीकृतं भवति । कस्य कर्मस्य विपाकेन[z] तत्र सत्वा उपपद्यन्ति[a] ।
येहि इह कीटकमर्दनानि[b] वा कारापितानि भवन्ति तलमर्दनानि[c] वा असिपत्रे वा
देवानां[d] तथैवा जीवन्तका[e] एवं प्राणका पत्रयष्टीहि[f] पीडिता[g] भवन्ति[h] लिक्षा वा यूका[i] वा — 15
सांकुशा वा नखेहि[j] पिच्चिता भवन्ति[k] तस्य कर्मस्य विपाकेन तत्र सत्वा उपपद्यन्ति ।
एवं[l] खलु पुनः आधिपतेयमात्रमेतं[m] तत्रोपपत्तेः[n] । तत्रोपपन्नाः अन्येषां[o] पि पापकानाम-[p] — Sen. 22
कुशलानां कर्माणां[q] विपाकं प्रत्यनुभवन्ति । ता[r] अस्थिसंकलिकायो[s] आयसाहि[t] द्रोणीहि
आदीप्ताहि संप्रज्वलिताहि सज्योतिभूताहि[u] आयसेहि[v] मुशलेहि आदीप्तेहि संप्रज्वलितेहि
सज्योतिभूतेहि[w] अयोपाते[x] यथा पञ्चवर्षशतानि भवन्ति[y] । ते तथाभूता एवं दुःखां[z] — 20
तीव्रां[a] वेदना[b] वेदयन्ति । कस्य[c] कर्मस्य विपाकेन तत्र सत्वा उपपद्यन्ति[d] । येहि इह
जीवन्तका प्राणका[e] शक्तीहि विज्झिता[f] भवन्ति[g] वा गदासिहि[h] बाध्यन्ते वा येहि

संप्रज्वलितेहि[a] सजीवानि प्राणकानि[b] व्यापाद्य उदूखले[c] मुशलेहि[d] संक्लिष्टा भवन्ति[e] तस्य कर्मस्य विपाकतो तत्र सत्वा उपपद्यन्ति[f]। केनैष संघातो[g] ति वुच्चति। तत्र नैरयिका सत्वाः संघातमापद्यन्ते तेनैष[h] निरयो संघातो[i] ति वुच्चति।

...... तत्र ते नैरयिका बहूनि प्राणसहस्राणि[j] प्रत्येकप्रत्येकं वा घरकेहि ओरुद्धा[k] छिन्नईर्यापथा गच्छन्ति[l]। तेषां हस्ते[m] अग्नि प्रज्वलति। यथायथा[n] अग्नि प्रज्वलति[o] तथातथा शब्दं[p] करोन्ति। यथायथा[q] अग्निर्निर्वाति[r] तथातथा तुष्णीभवन्ति। ते तथाभूता[s] अधिमात्रां वेदना[t] वेदयन्ति। कस्य[u] कर्मस्य[v] विपाकतो तत्र सत्वा उपपद्यन्ति। येहि[w] इह अत्राणा[x] अनभिसरणा[y] कर्मकारापिता[z] भवन्ति[a] गेहदाघा वा कृता[b] भवन्ति वनदाघा कृता भवन्ति[c] रन्ध्रेषु[d] वा गुत्तीषु वा कारासु वा बन्धेषु[e] वा साहिकानां[f] वा किंपुरुषाणां वा उन्दुरूणां[g] वा विडालानां[h] वा अजगराणां[i] वा विलेषु अग्नि दत्वा द्वाराणि रक्षितानि[j] भवन्ति मधूनि[k][l] वा[m] ताम्बूलानि वा अग्निना[n] बाधितानि भवन्ति[o] तस्य कमस्य[p] विपाकेन तत्र सत्वा उपपद्यन्ति। एवं खलु पुनः आधिपतेय-मात्रमेतं[q] तत्रोपपत्तेः[r]। तत्रोपपन्नाः अन्येषां पापकानामकुशलानां कर्माणां[s] विपाकं प्रत्यनुभवन्ति[t]।......

महारौरवो नाम। सो नरको संचितो आयसो आदीप्तो संप्रज्वलितो सज्योति-भूतो अनेकानि योजनशतानि आयतो[u]। तत्र तेषां नैरयिकानां निरयपाला[v] मुद्गर-हस्ता उद्देशेन्ति। ते दानि[w] भीता[x] अप्येकत्या धावन्ति अप्येकत्याः पलायन्ति[y] अप्येकत्या न[z] पलायन्ति[a] अप्येकत्या[b] कुत्रापि[c] अवसक्कन्ति[d] अप्येकत्या[e] न अवसक्कन्ति[f] अप्येकत्या[g] अनुशक्यं[h] संज्ञापयमानाः[i] प्रत्युद्गच्छन्ति। ते दानि नरकपाला[j] कस्य दानि यूयं अत्र संज्ञापयमाना[k] प्रत्युद्गच्छथेति[l] तां प्रहरन्ति यथा दधिघटिका[m] एवं[n] शीर्यन्ति विशीर्यन्ति[o]। ये[p] च धावन्ति ये च न धावन्ति ते[q] तथाभूता दुःखां खरां कटुकां[r] वेदना[s]

वेदेन्ति[a]। कस्य[b] कर्मस्य विपाकेन[c] तत्र[d] सत्वा उपपद्यन्ति। येहि इह चन्द्रमसूर्याणि[e] Sen. 24
आवरित्वान बन्धनानि कृतानि भवन्ति[f] प्रवेशयित्वा[g] ओसिरन्ति[h] एत्थ[i] यूयं[j] मा
चन्द्रमासूर्यं[k] पश्यथ[l] तस्य कर्मस्य विपाकेन तत्र सत्वा[m] उपपद्यन्ति[n]। कस्य[o] कर्मस्य[p]
विपाकतो तेषां सत्वानां[q] शीर्षाणि पिच्चीयन्ति[r]। येहि इह जीवन्तकानां प्राणकानां[s]
शीर्षाणि पिच्चितानि[t] भवन्ति[u] अहीनां वृश्चिकानां[v] शतघ्नीनां तस्य कमस्य विपाकेन 5
तेषां शीर्षाणि[w] पिच्चीयन्ति। केन[x] तं रौरवं। तत्र ते नैरयिका[y] रोदन्ता न शक्नोन्ति[z]
अंबेति[a] वा तातेति वा बान्धवानुपेतुं[b]। तेनेदं[c] रौरवन्ति[d] संज्ञितं।

तपनो निरयो[e]। तत्र ते नैरयिका ओरुद्धा बहूनि प्राणिसहस्राणि तिष्ठन्ति[f]।
ते दानि आर्द्र[g] वृक्षे वा वर्जेत्वा[h] खादन्ति। यदा दानि भवन्ति निर्मान्सा अस्थि-
संकलिका[i] ओरुद्धा स्नायुयुक्ता[j] ते दानि संमूर्च्छित्वा[k] सहवेदना प्रपतन्ति। अथ तेषां 10
कर्मविपाकतो[l] शीतलको वातो उपवायति[m]। तेन तेषां छविमान्सलोहितं[n] उपजायति[o]।
अथ[p] ते पुरतो प्रवेशेन्ति[q] ते तथाभूता। कस्य कर्मस्य विपाकेन[r] तत्र सत्वा उपपद्यन्ति।
येहि इह[s] अद्वारका घरा प्रतियत्ता भवन्ति तेषां[t] भित्तियो लिस्तापत्तियायं[u] (?) भवन्ति
जीवन्तका[v] प्राणका तत्रापि[w] वा कर्तरिकाहि[x] प्रशस्ता[y] भवन्ति, तस्य[z] कर्मस्य[a] विपाकेन
तत्र सत्वा उपपद्यन्ति। तत्र कस्य कर्मस्य विपाकेन खज्जन्ति[b]। येहि इह जीवन्तका 15
प्राणका खादापिता[c] भवन्ति[d] सिंहेहि व्याघ्रेहि[e] द्वीपिहि[f] ऋक्षेहि तरक्षुहि[g] तस्य कर्मस्य Sen. 25
विपाकेन खज्जन्ति[h]। कस्य कर्मस्य विपाकतो तेषां[i] शीतको[j] वातो[k] उपवायति[l]। येहि
इध[m] निवापकभोजनानि[n] दत्तानि[o] भवन्ति[p] मृगाणां महिषाणां[q] सूकराणां[r] कुक्कुटानां
स्थूलमान्सार्थाय[s] वधिष्यामि[t] त्ति[u] तस्य कर्मस्य विपाकतो तेषां शीतको[v] वातो उपवायति[w]।
केनैष[x] तपनो[y]। नैरयिका[z] दह्यन्ति[a] तेनैषो[b] तपनो[c] नाम नरको आयसेहि[d] शूलेहि 20
सन्तप्तेहि[e] समन्ततो हि अनुप्रवारितो[f]। तत्र[g] ते नैरयिका[h] केचि एकशूलेनायुता[i] पच्यन्ति[j]
केचि[k] द्विहि केचि यावद्दशहि[l] शूलेहि[m] आयुता[n] पच्यन्ति। यदा दानि एकं पार्श्वं[o] पक्वं

भवति[a] विस्तीर्णमथ[b] द्वितीयेन[c] पार्श्वेन[d]। अप्येकत्या[e] नैरयिका[f] अधिमात्रत्वात्[g]पापकानाम-
कुशलानां कर्मणां विपाकतो स्वयमेव[h] अनुपरिवर्तयन्ति। ते[i] तथाभूता[j] अधिमात्रां[k]
वेदना[l] वेदयन्ति। कस्य[m] कर्मस्य विपाकतो तत्र सत्वा उपपद्यन्ति। येहि इह जीव-
शूलिका कारिता[n] भवन्ति एडकायो[o] ते[p] तस्य कर्मस्य विपाकतो तत्र सत्वा उपपद्यन्ति।
5 एवं खलु पुनः आधिपतेयमात्रमेतं[q] तत्रोपपत्तेः[r]। तत्रोपपन्नाः[s] अन्येषां[t] पि पापकानाम-
कुशलानां कर्मणां विपाकं प्रत्यनुभवन्ति।......

....केनैष[u] अवीचि नाम[v]। तस्य[w] पुरस्तिमातो कुड्डातो अर्चियो[x] पश्चिमे[y] कुड्डे
Sen. 26 प्रतिहन्यन्ति[z] पश्चिमातो कुड्डातो[a] अर्चियो[b] पुरस्तिमे कुड्डे[c] प्रतिहन्यन्ति दक्षिणातो कुड्डातो
अर्चियो उत्तरे[d] कुड्डे प्रतिहन्यन्ति[e] उत्तरातो कुड्डातो अर्चियो दक्षिणे कुड्डे प्रतिहन्यन्ति।
10 भूमिये[f] उत्पत्तिता[g] अर्चियो तले प्रतिहन्यन्ति[h] तला निपतितायो अर्चियो[i] भूमिये प्रति-
हन्यन्ति सर्वोर्च्चीहि[j] सो नरको प्रतिबद्धो[k]। तत्र ते नैरयिका बहूनि प्राणसहस्राणि[l] यथा
काष्ठानि एवं विचित्रं[m] पच्यन्ति[n]। ते तथाभूता[o] दुःखां तीव्रां खरां कटुकां[p] वेदना[q] वेदयन्ति
न[r] चैवं[s] तावत् कालं करोन्ति यावत्[t] सानं न तत्पापकं[u] कर्म[v] व्यन्तीकृतं[w] भवति[x]। एवन्तं[y] पूर्वे[z]
मनुष्यभूतेहि[a] अभिसंस्कृतं[b] अभिसमादियित्वा[c] नियतं[d] वेदनीयं[e]। एवं खलु पुन[f] आधिपतेय-
15 मात्रमेतन्[g]तत्रोपपत्तेः[h]। तत्रोपपन्ना[i] अन्येषां पि पापकानामकुशलानां कर्माणां विपाकं
प्रत्यनुभवन्ति। कस्य कर्मस्य विपाकेन[j] तत्र सत्वा उपपद्यन्ति। ये इह मातृघातका[k]
वा भवन्ति पितृघातका[l] वा[m] अर्हन्तघातका[n] वा[o] तथागतस्य वा दुष्टचित्ता[p] रुधिरोत्पादका[q]
वा सर्वेषामपि[r] ईदृशानामकुशलानां कर्मपथानां[s] विपाकेन तत्र सत्वा उपपद्यन्ति। एवं
खलु पुनर्विविधानां[t] पापकानामकुशलानां[u] कर्माणां[v] विपाकेन तत्र सत्वा उपपद्यन्ति।
20 तेनैष[w] अवीचि इति[x] वुच्चति[y]। तत्र ते नैरयिका अवीचि[z] कटुकां तीव्रां[a] खरां वेदना[b]
वेदयन्ति[c] नो यथान्येषु नरकेषु नरकपाला भीता[d] कर्माणि[e] कारापेन्ति शीतको[f] वातो

उपवायति[a] यथा[b] अन्यत्र न[c] एवं तत्र। अत्र खलु अवीचिं[d] महानरके[e] दुःखां[f] तीव्रां खरां कटुकां वेदना[g] वेदयन्ति तेनैषो[h] अवीची[i] नाम महानरको[j]।

इति श्रीमहावस्तुअवदाने नरकपरिवर्तं नाम सूत्रं समाप्तं। Sen. 27

आयुष्मान्[k] महामौद्गल्यायनो[l] अभीक्ष्णं[m] तिरच्छानचारिकां[n] गच्छति[o]। सो पश्यति[p] तिरच्छानयोनिषु[q] सत्वा उपपन्ना[r] विविधा[s] दुःखानि प्रत्यनुभवन्तो[t]। आयुष्मां[u] कोलितो[v] (5) स्थविरो[w] चरन्तो तिरच्छानचारिकां अद्राक्षीत्तिर्यग्योनिषु[x] सत्वां परमदुःखिता[y] शुष्कार्द्राणि[z] तृणानि मुखुल्लोचकं[a] परिभुजन्तां[b] शीतोष्णानि च पानीयानि[c] पिबन्तां न च सानं माता प्रज्ञायति न पिता न भ्राता न भगिनी न गुरु न गुरुस्थानीयो न मित्रज्ञाति-[d] सालोहितं[e]। अन्यमन्यं[f] खादन्ति[g] अन्यमन्यस्य शोणितं[h] पिबन्ति अन्यमन्यं घातेन्ति[i] अन्यमन्यं[j] विसुभन्ति। ते[k] तमातो तमं गच्छन्ति अपायातो[l] अपायं[m] गच्छन्ति[n] दुर्गतिहि[o] (10) दुर्गतिं[p] गच्छन्ति विनिपातातो[q] विनिपातं गच्छन्ति[r] विविधान्यपि[s] दुःखसहस्राणि प्रत्यनुभवन्ति[t] कृच्छ्रेण तिर्यग्योनिषु उच्छहन्ति[u]। सो तं तिर्यग्योनिषु[v] महन्तं आदीनवं[w] दृष्ट्वा जेतवनं गत्वा चतूर्णां[x] पर्षाणां[y] विस्तरेणारोचयसि। एवं[z] ये ते सत्वा तिर्यग्योनिषु[a] उपपन्ना विविधानि दुःखानि दुःखसहस्राणि प्रत्यनुभवन्ति[b] कृच्छ्रेण[c] तिर्यग्योनिषु[d] उच्छहन्ति। तस्मा[e] ज्ञातव्यं प्राप्तव्यं[f] बोद्धव्यं अभिसंबोद्धव्यं[g] कर्त्तव्यं ब्रह्मचर्यं[h] न च (15 Sen. 28) वा लोके[i] किञ्चित्पापं[j] करणीयन्ति वदामि।

आयुष्मान् महामौद्गल्यायनो अभीक्ष्णं प्रेतचारिकां गच्छति[k]। सो पश्यति सत्वां[l] प्रेतलोके उपपन्ना[m] विविधानि दुःखसहस्राणि[n] प्रत्यनुभवन्तो[o]। आयुष्मान् कोलितो[p] स्थविरो चरन्तो[q] प्रेतचारिकां[r] अद्राक्षीत्प्रेतलोकस्मि[s] प्रेतां[t] परमदुःखितां महाकायां[u] सूचीमुखां[v] सन्निरुद्धकण्ठां[w] सततमभ्यवहरन्तां तृप्तिं[x] नाधिगच्छन्तां[y]। किं पुनः[z] अकृत- (20) पुण्यातो येन किञ्चित् न लभन्ति दुर्वर्णा[a] दुर्दर्शना[b][c] दुर्गन्धा[d] दुरुपेता[e] अल्पेशाख्या प्रतिकूल-[f]

दर्शना[a] नग्नका अप्रतिच्छन्ना क्षुत्पिपासा[b]समर्पिता उच्चार[c]प्रस्राव[d]खेटसिंहाणिका[e]पुव्वरुधिरं[f] संपिपासन्ति। तेषां कर्मविपाकतो[g] वातो[h] वायति अस्ति पानीयन्ति[i] अस्ति पानीयन्ति[j] अस्ति कूरं, अस्ति य्वागू ति ते तं घोषं श्रुत्वा नदीयो च पर्वतां[k] च लङ्घयित्वा गच्छन्ति[l] एत्थ[m] वयं खादिष्यामः, एत्थ वयं[n] भुंजिष्यामः[o] एत्थ वयं पिबिष्यामो[p] ति। तथा[q] ते पूर्वं[r] आशां[s] कृत्वा निराशा[t] भवन्ति[u]। तेषां नास्ति नास्तीति[v] वातो वायति ते तं शब्दं श्रुत्वा निराशा[w] तेनैव[x] अवकुब्जा[y] प्रपतन्ति। प्रेती गाथां भाषते[z]—

पंचानां वर्षशतानां[a] अयं घोषो मया श्रुतं[b]।
पानीयं[c] प्रेतलोकस्मि[d] पश्य याव[e] सुदुर्लभं[f] ॥१॥

Sen. 29

अपरा[g] प्रेती गाथां[h] भाषते।

पञ्चानां वर्षशतानामयं घोषो[i] मया श्रुतो[j]।
कूरो[k] ति लोके प्रेतस्मि पश्य याव[l] सुदुर्लभं ॥२॥

अपरा[m] प्रेती गाथां[n] भाषे।

पञ्चानां वर्षशतानामयं[o] घोषो मया श्रुतं[p]।
य्वागूति प्रेतलोकस्मि[q] पश्य याव[r] सुदुर्लभं ॥३॥

अपरा प्रेती गाथां भाषे[s]।

नदीमुपेन्ति[t] तृषिता[u] सिकता परिवर्तति[v]।
छायामुपेन्ति[w] सन्तप्ता आतपो[x] परिवर्तति ॥४॥

अपरा प्रेती[y] गाथां[z] भाषति।

धिग्जीवितं आजीविषु[a] यमन्तस्मि[b] नदामथ।
विद्यमानेषु भोगेषु प्रदीपं[c] न करोथ व ॥५॥

सो तं प्रेतलोके महन्तं[d] आदीनवं[e] दृष्ट्वा जेतवनमागत्वा[f] चतुर्णा[g] पर्षदानामनेक[h]-पर्यायेण विस्तरेणारोचयति[i]। एवं सत्वा प्रेतलोके उपपन्ना[j] विविधानि दुःखसहस्राणि

प्रत्यनुभवन्ति। तस्मात्[a] ज्ञातव्यं प्राप्तव्यं बोद्धव्यं अभिसंबोद्धव्यं[b] कर्तव्यं[c] कुशलश्च[d]
कर्तव्यं ब्रह्मचर्यं[e] न च वा लोके किंचित्पापं कर्म करणीयन्ति[f] वदेमि। स्थविरस्य
श्रुत्वा अनेकप्राणसहस्राणि[g] देवमनुष्याणां[h] अमृतं प्रापुणेन्सु।

आयुष्मान् महामौद्गल्यायनो[i] अभीक्ष्णं असुरचारिकां गच्छति। सो पश्यति Sen. 30
असुरपुरे असुरां[j] प्रवृद्धमहाकाया उग्रदर्शना व्यापादबहुला असुरेषु[k] च्यवित्वा विनिपा- 5
तेन्ता[l]। आयुष्मान्कोलितो[m] स्थविरो चरन्तो असुरचारिकामद्राक्षीत्सुरेषु[n] व्यापादेन
सुदुःखितां पंच असुरगणान्[o]। तेषामेवं[p] भवति। वयं हेष्टा उपरि देवा[q]। ततः[r] कुप्यन्ति
व्यापद्यन्ति अभिष्यन्दन्ति[s] कोपं च रोषं[t] च अप्रत्ययं च आविष्करोन्ति[u]। ते चतुरङ्ग-
बलकायं[v] सन्नहित्वा हस्तिकायं अश्वकायं रथकायं[w] पत्तिकायं सन्नहित्वा देवगुल्मानि
प्रभजन्ति[x] यदिदं करोटपाणयो[y] नाम यक्षा मालाधारा नाम यक्षाः सदामत्ता[z] नाम यक्षाः[a]। 10
एतानि देवगुल्मानि[b] भंजित्वा देवेहि त्रायस्त्रिंशेहि[c] संग्रामेन्ति। ते[d] खु देवानां
त्रायस्त्रिंशानां[e] कृतपुण्यानां[f] महेशाख्यानामन्तिके[g] चित्तानि[h] प्रदूषयित्वा[i] कायस्य भेदात्परं
मरणादपायदुर्गतिविनिपातनरकेषूपपद्यन्ति[j]। सो तं असुराणां महान्तमादीनवं दृष्ट्वा
जेतवनमागत्वा चतुर्णां[k] पर्षाणां[l] विस्तरेणमारोचयति[m]। एवं सत्वा महासमुद्रे[n] असुर-
पुरे विविधानि दुःखानि प्रत्यनुभवन्ति[o]। तस्माज्ज्ञातव्यं[p] बोद्धव्यं[q] प्राप्तव्यं प्रतिसंबोद्धव्यं[r] 15
कर्तव्यं ब्रह्मचर्यं[s] न च किञ्चिल्लोके पापं कर्म करणीयन्ति वदामि। स्थविरस्य श्रुत्वा
बहूनि प्राणसहस्राणि[t] देवमनुष्याणाममृतं[u] प्रापयन्ति।

आयुष्मान् महामौद्गल्यायनो अभाक्ष्णं चतुर्महाराजिकेषु देवेषु चारिकां गच्छति।
तत्र पश्यति चतुर्महाराजिकदेवां[v] कृतपुण्यां[w] महेशाख्यां[x] दीर्घायुष्कां[y] वर्णवन्तां[z] सुखब
हुलां लाभी दिव्यस्यायुषः वर्णस्य सुखस्य ऐश्वर्यस्य परिवारस्य[a] लाभिनो दिव्यानां 20 Sen. 31
रूपाणां शब्दानां गन्धानां रसानां प्रष्टव्यानां दिव्यानां वस्त्राणां[b] दिव्यानां आभरणानां[c]।

अग्रतो[a] आभरणानि आबद्धानि पृष्ठितो[b] दृश्यन्ते पृष्ठितो आबद्धानि अग्रतो दृश्यन्ति छाया[c] पि सानं[d] न दृश्यति स्वयंप्रभा अन्तरीक्षचरा[e] येनकामंगमा प्रभूतभक्षा[f] प्रचुरान्नपाना[g] दिव्येषु रतनामयेषु[h] विमानेषु दिव्येहि[i] पंचहि कामगुणेहि[j] समर्पिता समंगीभूता[k] क्रीडन्ता रमन्ता प्रविचारयन्ता[l]। संपत्ति[m] स्थविरो[n] विपत्तिपर्यवसानं पश्यति[o]। स्वयंप्रभा ततो[p]
5 चातुर्महाराजिकेषु[q] च्यवमाना नरकेषूपपद्यन्ति[r] तिरच्छेषूपपद्यन्ते[s] प्रेतेषु असुरेषु कायेषु[t] उपपद्यन्ति[u]। स्थविरो दानि देवानां चातुर्महाराजिकानां तां विपरिणामदुःखतां[v] दृष्ट्वा[w] अहो कृच्छ्रं[x] ति जेतवनमागत्वा चतुर्णां[y] पर्षाणां विस्तरेणारोचयति[z]। एवं[a] सत्वा कुशलस्य कर्मस्य विपाकेन चातुर्महाराजिकेषु देवेषूपपद्यन्ति[b]। ते तत्र[c] दिव्यानि संपत्ती[d] अनुभवित्वा ततो[e] च्यवमाना नरकतिरिच्छप्रेतासुरेषु[f] कायेषु[g] उपपद्यन्ति। देवा पि
10 अनित्याः अध्रुवाः[h] विपरिणामधर्माणो[i]। तस्माज्ज्ञातव्यं[j] प्राप्तव्यं बोद्धव्यं[k] अभिसंबोद्धव्यं[l] कर्तव्यं कुशलं[m] च कर्तव्यं ब्रह्मचर्यं[n] न च वा लोके किञ्चित्पापं[o] कर्म करणीयन्ति वदामि[p]। स्थविरस्य श्रुत्वा बहूनि[q] प्राणसहस्राणि[r] देवमनुष्याणाममृतं[s] प्रापयन्ति[t]।

आयुष्मान्[u] महामौद्गल्यायनो[v] अभीक्ष्णं त्रायस्त्रिंशेषु देवेषु[w] चारिकां गच्छति[x]।
15 तत्र पश्यति[y] त्रायस्त्रिंशां[z] देवां कृतपुण्यां[a] महेशाख्यां दीर्घायुष्कां[b] बलवन्तां[c] सुखबहुलां[d]
Sen. 32 लाभी दिव्यस्यायुषः बलस्य सुखस्य ऐश्वर्यस्य परिवारस्य[e] दिव्यानां रूपाणां[f] शब्दानां गन्धानां रसानां स्पर्शानां वस्त्राभरणानां[g] कामगुणानां स्वयंप्रभा[h] अन्तरीक्षेचरा सुखस्थायिनो येनकामंगमा[i] प्रभूतभक्षा[j] प्रचुरान्नपानाः[k] दिव्येषु रतनामयेषु विमानेषु अष्टसु च महाउद्यानेषु वैजयन्ते[l] नन्दापुष्करिणीपारिपात्रे[m] कोविदारे महावने[n] पारुष्यके[o]
20 चित्ररथे नन्दने मिश्रकावने अपरेषु च रतनामयेषु[p] च विमानेषु दिव्येहि[q] पंचहि कामगुणेहि समर्पिता[r] समङ्गीभूता[s] क्रीडन्ता[t] रमन्ता परिचारयन्ता[u]। शक्रो पि देवानामिन्द्रो वैजयन्ते[v] प्रासादे अशीतिहि अप्सरसहस्रेहि[w] परिवृतः[x] दिव्येहि पंचकामगुणेहि समर्पितो

समंगी[a]भूतो क्रीडन्तो रमन्तो प्रवि[b]चारयन्तो। स्थविरो तां देवा[c]नां त्रायस्त्रिशानां तादृशीं समृद्धिं दृष्ट्वा दि[d]व्यां संपत्तिं दृष्ट्वा सुदर्शनं च देवनगरं दृष्ट्वा स[e]प्तरतनामयं सुदर्शनस्य देवनग[f]रस्य तं विधानं [g]दृष्ट्वा सुधर्म्मा[h]ं च देवस[i]भां सर्ववैडूर्यमयीं योजन-साहस्रिकां [j]दृष्ट्वा यत्र दे[k]वा त्रायस्त्रिशाः श[l]क्रो च देवानामिन्द्रो सन्नि[m]षण्णा सन्निपति[n]ता देवकरणीयेषु वाह्यतो देवसभायां [o]दृश्यन्ति देवा पि त्रायस्त्रिशाः सुध[p]र्माये देवसभाये निषण्णाः[q] सर्वं[r] सुद[s]र्शनं देवनगरं पश्यन्ति। एवं स्थविरो सर्वा त्राय[t]स्त्रिशानां देवानां समृद्धिं दृष्ट्वा जेतवनमागत्वा चतु[u]र्णां पर्षा[v]णां विस्तरेणा[w]रोचेति। एवं सत्वा कुशलस्य कर्मस्य विपाकेन देवेषु त्राय[x]स्त्रिशेषूपपन्ना दिव्यायो सं[y]पत्तीयो अनुभवन्ति। तं पि अनित्य[z]मध्रुवं विपरिणामध[a]र्मि। त[b]तो च्यवमाना नरकतिरि[c]च्छप्रेतेषु उपपद्य[d]न्ति। तस्मा[e]ज्ज्ञातव्यं प्राप्तव्यं बोद्ध[f]व्यं अभिसंबोद्ध[g]व्यं कर्तव्यं कु[h]शलं कर्तव्यं ब्रह्मचर्यं न च वा [i]लोके कि[j]ञ्चित्पापं कर्म [k]करणीयन्ति वदेमि।

आयुष्मान् महामौ[l]द्गल्यायनोऽभीक्ष्णं यामतुषितनिर्मा[m]णरतिपरनिर्मि[n]तवशवर्ति-ब्रह्मकायिका या[o]व शुद्धावासां दे[p]वां चारिकां गच्छति। सो पश्यति शुद्धावासकायिकां दे[q]वा कृतपुण्या[r] महेशा[s]ख्यां दीर्घायुष्कां वर्णव[t]न्तां सुखबहुलां स्वयं[u]प्रभा अन्तरीक्षा[v]वचरा प्रीतिभ[w]क्षा सुखस्थायिनो येनकामंगमा विगतरागा देवाह[x]न्तो अन्तरापरिनिर्वायी अनावर्ति[y]कधर्मा अस्मिं लोके अव्यवकी[z]र्णा सर्वबा[a]लपृथग्जनेषु। स्थवि[b]रो तान्तादृ[c]शीं समृद्धिं देवानां दृष्ट्वा जेतवनमागत्वा च[d]तुर्णा पर्षाणां विस्तरेणारोचयति। एवं सत्वा कु[e]शलस्य कर्मस्य विपाकेन दे[f]वेषु देवानां सं[g]पत्तीयोऽनुभवन्ति। त[h]ं पि अनि[i]त्यं दु[j]ःखविपरिणामध[k]र्म्मं।

स[l]र्वं आदीनवं लोकं सर्वं लोकं आदी[m]पितं।
सर्वं प्र[n]ज्वलितं लोकं सर्व[o]लोकं प्रकम्पितं ॥६॥

अचलं[a] अप्रकम्पितं सपृथग्जनसेवितं[b] ।
बुद्धा धर्मं[c] देशयन्ति[d] उत्तमार्थस्य प्राप्तये[e] ॥७॥

तस्माज्ज्ञातव्यं[f] प्राप्तव्यं बोद्धव्यं[g] कर्तव्यं कुशलं[h] कर्तव्यं[i] ब्रह्मचर्यं न च[j] वा
लोके किञ्चित्पापं[k] कर्म करणीयन्ति वदेमि । स्थविरस्य[l] श्रुत्वा अनेकानि प्राणसहस्राणि
5 देवमनुष्याणां[m] अमृतं प्रापयन्ति ।

Sen: 34 भगवान्सम्यक्सम्बुद्धो[n] यदर्थं[o] समुदागतो तदर्थमभिसंभावयित्वा[p] राजगृहे विहरति
गृध्रकूटे[q] पर्वते शास्ता देवानाञ्च[r] मनुष्याणां च सत्कृतो गुरुकृतो मानितो[s] पूजितो अपचितो
लाभाग्रयशोग्रप्राप्तः[t] लाभी चीवरपिण्ड[u]पात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां[v]
तत्र[w] अनुपलिप्तो पद्ममिव जले पुण्यभागीयां सत्वां पुण्येहि निवेशेन्तो[x] फलभागीयां[y] सत्वां
10 फलेहि प्रतिष्ठापयन्तो[z] वासनाभागीयां[a] सत्वां वासनायामवस्थापयन्तो[b] अमृतवर्षेण[c]
देवमनुष्या[d] संविभजन्तो प्राणसहस्राणि अमृतमनुप्रापयन्तो[e] अनवराग्रजातिजरामरण-[f]
संसारकान्तारनरकादिदुर्गसंसारकान्तारग्रहणदारुणातो[g] महाप्रपातातो[h] उद्धरित्वा क्षेमे
स्थले[i] शमे शिवे अभये निर्वाणे प्रतिष्ठापयन्तो[j] आवर्जयित्वा[k] अङ्गमगधां[l] वज्जिमल्लां[m]
काशिकोशलां[n] चेतिवत्समत्स्यां[o] शूरसेनां कुरुपंचालां[p] शिविदशार्णां[q] च अश्वकअवन्तीं[r]
15 ज्ञानेषु[s] पराक्रम्य[t] स्वयंभू दिव्येहि विहारेहि आनिंजेहि[u] विहारेहि सान्तत्येहि[v] विहारेहि
बुद्धो[w] बुद्धविहारेहि[x] जिनो जिनविहारेहि जानको जानकविहारेहि सर्वज्ञो सर्वज्ञविहारेहि
चेतोवशिप्राप्तो[y] च पुनर्बुद्धो[z] भगवन्तो[a] येहि येहि विहारेहि आकांक्षति विहरितुं तेहि
तेहि विहारेहि विहरति[b] । अथ सो आयुष्मान् महामौद्गल्यायनो[c] काल्यस्यैव[d] निवास-
यित्वा राजगृहं नगरं पिण्डाय प्रक्रमि[e] । अथ[f] खल्वायुष्मतो महामौद्गल्यायनस्य[g] अचिर-[h]
20 Sen. 35 प्रक्रान्तस्य[i] एतदभूषीत् । अतिप्रागेव[j] खलु तावदेतर्हि[k] राजगृहे नगरे पिण्डाय चरितुं[l]
यन्नूनाहं येन शुद्धावासो देवनिकायो तेनुपसंक्रमेयं । चिरं मे शुद्धावासं देवनिकायं[m]
उपसंक्रान्तस्य[n] । अथ[o] खल्वायुष्मान् महामौद्गल्यायन पदवीतिहारेण[p] ऋद्धीये[q] येन[r]

शुद्धावासं देवनिकायं तेन प्रक्रामि। अद्राक्षुः सम्बहुला शुद्धावासकायिका देवपुत्रा आयुष्मन्तं महामौद्गल्यायनं दूरतो येवागच्छन्तं दृष्ट्वा च पुनर्येनायुष्मान् महामौद्गल्यायनो तेन प्रत्युद्गतासुः। एत्थ एत्थ आर्यो महामौद्गल्यायनो। स्वागतमार्यमहामौद्गल्यायनस्य अनुरागमार्यस्य महामौद्गल्यायनस्य। चिरस्य पुनः आर्यो महामौद्गल्यायनो पर्यायमकार्षीत् यदिदं इह आगमनाय। अथ खलु ते संबहुला शुद्धावास- 5
कायिका देवपुत्रा आयुष्मतो महामौद्गल्यायनस्य पादौ शिरसा वन्दित्वा एकमन्ते स्थिता। तत्र अन्यतरो शुद्धावासकायिको देवपुत्रो आयुष्मन्तं महामौद्गल्यायनमेतदवोचत्। आश्चर्यमिदमार्य महामौद्गल्यायन अद्भुतमिदमार्य महामौद्गल्यायन यावद्दुःखसमुदानीया अनुत्तरा सम्यक्संबोधिः यदिदं कल्पानां शतसहस्रेण। अथ खलु भगवन्सो शुद्धावासकायिको देवपुत्रो आयुष्मन्तं महामौद्गल्यायनं अध्यभाषि। 10
कल्पान शतसहस्रं अभियो नाम भिक्षु सरागो अभूषि सदोषो समोहो। तेन खलु पुनः मौद्गल्यायन समयेन वसुमतं नाम नगरं अभूषि ऋद्धं च स्फीतं च क्षेमं च (Sen. 36) सुभिक्षं च आकीर्णजनमनुष्यं च सुखितजनमनुष्यं च बहुजनमनुष्यं च प्रशान्तदण्डडमरं सुनिगृहीततस्करव्यवहारसम्पन्नं। वसुमते खलु पुनर्मौद्गल्यायन महानगरे उत्तियो नाम श्रेष्ठी अभूषि कृतपुण्यो महेशाख्यो आढ्यो महाधनो महाभोगो 15
प्रभूतस्वापतेयो प्रभूतधनधान्यकोशकोष्ठागारो प्रभूतजातरूपरजतवित्तोपकरणो प्रभूतहस्त्यश्वगवेडको प्रभूतदासीदासकर्मकरपौरुषेयो भगवतो सर्वाभिभुस्य शासने श्रद्धाप्रसन्नो बुद्धधर्मसंघमङ्गलो नन्दादीनां भिक्षूणामभिप्रसन्नो। अथ खलु मौद्गल्यायन नन्दो च भिक्षुः अभियो च भिक्षुः उत्तीयस्य श्रेष्ठिस्य गृहमुपसंक्रमेयुः। नन्दो मौद्गल्यायन भिक्षुः तस्मि श्रेष्ठिकुले सत्कृतो अभूषि गुरुकृतो मानितः पूजितः अपचितः न तथा 20
अभियो भिक्षुः। उत्तियस्य खलु पुनः मौद्गल्यायन श्रेष्ठिस्य धीता वसुमते महानगरे अन्यतरस्य गृहपतिमहाशालस्य भार्या अभूषि। सा मौद्गल्यायन नन्दस्य भिक्षुस्य

अतीवाभिप्रसन्ना अभूषि। अथ खलु[a] महामौद्गल्यायन[b] अभियो[c] भिक्षुः नन्दं भिक्षुं[d]
ईर्ष्याप्रकृतेन अभूतेनाब्रह्मचर्यवादेन[e] अनुध्वंसेति[f]। अब्रह्मचारी नन्दो भिक्षुः पापधर्मा
असंयतो[g] प्रतिच्छन्नपापकर्मान्तो[h]। उत्तियस्य[i] श्रेष्ठिस्य[j] धीतुः सार्द्धं[k] विप्रदुष्टो। तं
Sen. 37 सेवितं[l] वसुमते महानगरे यं महाजनकायेन श्रोतव्यं[m] श्रद्धातव्यं मन्येन्सुः[n]। अथ[o] खलु
5 महामौद्गल्यायन[p] नन्दं भिक्षुं वसुमते महानगरे ब्राह्मणगृहपतिका[q] उत्तियो[r] च श्रेष्ठी[s] न
भूयो[t] तथा सत्करितव्यं[u] गुरुकर्तव्यं मानयितव्यं पूजयितव्यं मन्येन्सुः[v] यथा पूर्वं[w]।
लभ्यं सत्पुरुषा प्रत्यागच्छन्ति[x] अकुशलेन[y] कर्मणा[z] विप्रतिसारी[a] भवन्ति। अथ खलु
महामौद्गल्यायन[b] अभियस्य[c] भिक्षुस्य[d] एतदभूषि[e]। नन्दो भिक्षु वीतरागो विगतदोषो
विगतमोहो अरहो महाभागो[f] सो च मये[g] ईर्ष्याप्रकृतेन[h] अभूतेनाब्रह्मचर्यवादेन[i][j] अनु-
10 ध्वंसितो[k]। मया[l] बहुं अपुण्यं प्रसूतं[m]। यन्नूनाहं[n] नन्दं[o] भिक्षुं[p] क्षमापेयं[q] भगवतो च
सर्वाभिभुस्य[r] अन्तिके अत्ययं[s] देशेयं[t]। अथ खलु महामौद्गल्यायन[u] अभियो[v] भिक्षु[w]
नन्दं[x] भिक्षं क्षमापयामास[y] भगवतो[z] च सर्वाभिभूस्य[a] अन्तिके अत्ययं[b] देशेति[c]। अथ
खलु[d] महामौद्गल्यायन अभियो[e] भिक्षुः येन उत्तियो[f] श्रेष्ठिस्तेनोपसंक्रमित्वा[g][h] उत्तियं[i]
श्रेष्ठिमेतदवोचत्। इच्छेयमहं गृहपति भगवतो सर्वाभिभूस्य[j] सश्रावकसंघस्य अधिकारं[k]
15 कर्तुं देहि मे अर्थमात्रं। अदासि[l] महामौद्गल्यायन[m] उत्तियो श्रेष्ठि[n] अभियस्य
Sen. 38 भिक्षुस्य[o] प्रभूतं[p] हिरण्यं सुवर्णं[q] तदन्ये[r] पि गृहपतिमहाशालाः। अथ खलु महा-
मौद्गल्यायन[s] वसुमते महानगरे दुवे गन्धिकमहत्तरका[t] अभियस्य[u] भिक्षुस्य अभिप्रसन्ना[v]
अभूषि। अथ खलु महामौद्गल्यायनोऽभियो[w] भिक्षु शतसहस्रहस्तो[x] येन ते दुवे गन्धिक-[y]
महत्तरका[z] तेनोपसंक्रमित्वा[a] दुवे गन्धिकमहत्तरकां[b] एतदवोचत्। इच्छामि वासिष्ठाहो[c]
20 इमस्य शतसहस्रस्य[d] केशरं[e]। परिहरियाहं[f] भगवतो सर्वाभिभूस्य[g] सश्रावकसंघस्य
अधिकारं करोमि[h]। परिहरेन्सुः[i] महामौद्गल्यायन[j] ते दुवे गन्धिकमहत्तरका शतसहस्र-[k]
केशरं। अथ खलु[l] महामौद्गल्यायन अभियो भिक्षुः भगवन्तं सर्वाभिभूं[m] सश्रावकसंघं[n]

प्रभूतेन खादनीयभोजनीय[a]आस्वादनीयेन सन्तर्पयित्वा[b] संप्रचारयित्वा[c] भुक्ताविं[d] धौतपाणिं[e] अपनीतपात्रं विदित्वा तेन शतसहस्रकेशरेण[f] भगवन्तं सर्वाभिभूं[g] सश्रावकसंघं ओकिरेसि[h] अध्योकिरेसि[i] प्रकिरेसि ओकिरित्वा अध्योकिरित्वा अभिप्रकिरित्वा[j] एवं चित्तं[k] उत्पादेसि[l]। अहो[m] पुनरहं पि अनागतमध्वानं भवेयं तथागतो[n] अरहो[o] सम्यक्संबुद्धो[p][q] विद्याचरणसम्पन्नो[r] सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च यथायं[s] भगवां[t] सर्वाभिभू[u] एतरहेसि। एवं द्वात्रिंशतमहापुरुषलक्षणेहि[v][w] समन्वागतो[x] भवेयं अशीतिहि अनुव्यञ्जनेहि अनुविराजितशरीरो[y] अष्टादशावेणिकेहि[z] बुद्धधर्मेहि समन्वागतो दशहि[a] तथागतबलेहि[b] बलवां[c] चतुर्हि[d] वैशारद्येहि विशारदो यथायं भगवान्[e] सर्वाभिभू[f] एतरहेसि। एवं[g] च अनुत्तरं धर्मचक्रं[h] प्रवर्तेयं अप्रवर्तितं श्रमणेन[i] वा ब्राह्मणेन वा देवेन वा मारेण[j] वा[k] ब्रह्मणा वा केनचिद्वा पुनर्लोके[l] सह धर्मेण एवं च समग्रं[m] श्रावकसंघं[n] परिहरेयं[o] यथायं भगवां[p] सर्वाभिभू[q] एतरहेसि[r]। एवं[s] च देवमनुष्या श्रोतव्यं[t] श्रद्धातव्यं[u] मन्येन्सुः[v] यथा[w] वेदं भगवतो[x] सर्वाभिभूस्य[y] एतरहि[z]। एवं[a] तीर्णो तारेयं[b] मुक्तो मोचयेयं[c] आश्वस्तो[d] आश्वासेयं परिनिर्वृतो[e] परिनिर्वापयेयं[f] तं भवेयं बहुजनहिताय[g] बहुजनसुखाय लोकानुकम्पायै[h] महतो[i] जनकायस्यार्थाय[j] हिताय[k] देवानां च मनुष्याणां[l] च। अथ खलु[m] महामौद्गल्यायन[n] भगवां[o] सर्वाभिभू[p] अभियस्य[q] भिक्षो इदमेवरूपं[r] प्रणिधानं[s] विदित्वा एतदवोचत्। भविष्यसि[t] त्वं अभिय अनागतेऽध्वनि शतसहस्रकल्पे शाक्यमुनि[u] नाम तथागतोऽर्हन्[v]सम्यक्संबुद्धो विद्याचरणसंपन्नो सुगतो लोकविदनुत्तरः पुरुष[w]दम्य[x]सारथिः शास्ता[y] देवानां च मनुष्याणां[z] च यथाप्य[a]हमेतर्हि[b] द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतो[c] अशीतिहि अनुव्यञ्जनेहि[d] विराजितशरीरो अष्टादशेहि आवेणिकेहि बुद्धधर्मेहि समन्वागतो दशतथागतबलेहि बलवां चतुर्हि वैशारद्येहि सुविशारदो यथापि[e] अहं[f] एतर्हि[g]। एवं[h] च अनुत्तरं धर्मचक्रं प्रवर्तयिष्यसि अप्रवर्तितं[i] श्रमणेन[j] वा देवेन वा मारेण वा केनचिद्वा पुनर्लोके[k] सह धर्मेण[l]। एवं च

5 / Sen. 39 / 10 / 15 / 20

Sen. 40 समग्रं[a] श्रावकसंघं[b] परिहरिष्यसि[c] यथाप्यहमेतर्हि। एवं च ते देवमनुष्या श्रोतव्यं[d]
श्रद्धातव्यं[e] मन्येन्सुः यथापि मम[f] एतरहि। एवं तीर्णो तारयिष्यसि[g] मुक्तो मोचयिष्यसि
आश्वस्तो आश्वासयिष्यसि परिनिर्वृतो[h] परिनिर्वापयिष्यसि[i] यथापि[j] अहं[k] एतरहिं। तं
भविष्यसि बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय महतो जनकायस्यार्थाय[l] हिताय
5 सुखाय देवानां च मनुष्याणां[m] च। समनन्तरव्याकृतो[n] च पुनः[o] महामौद्गल्यायन[p] अभियो
भिक्षुः सर्वाभिभूना[q] सम्यक्संबुद्धेन[r][s] अनुत्तराये[t] सम्यक्संबुद्धाय[u] अथायं त्रिसाहस्रमहा-
साहस्रो[v] लोकधातुः[w] कंपे प्रकंपे अतीव[x] षड्विकारं[y]। पुरस्तिमा दिशा उन्नमति[z] पश्चिमा
दिशा ओनमति[a] पुरस्तिमा दिशा ओनमति[b] पश्चिमा दिशा उन्नमति दक्षिणा दिशा
उन्नमति उत्तरा[c] दिशा ओनमति[d] दक्षिणा दिशा ओनमति[e] उत्तरा[f] दिशा उन्नमति
10 मध्यातो[g] ओनमति अन्तेषु उन्नमति[h] मध्यातो उन्नमति अन्तेषु[i] ओनमति। भूम्या[j] च
देवा घोषमुदीरयेन्सुः[k] शब्दमनुश्रावयेन्सुः[l]। एषोऽभियो[m] भिक्षुः भगवता[n] सर्वाभिभूना[o]
सम्यक्संबुद्धेन[p] अनुत्तराये[q] सम्यक्संबोधये[r][s] व्याकृतो तं भविष्यति[t] बहुजनहिताय बहुजन-
सुखाय लोकानुकम्पाय[u] महतो जनकायस्यार्थाय[v] हिताय सुखाय देवानां च मनुष्याणां[w] च।
भूम्यानां[x] देवानां घोषं श्रुत्वा अन्तरीक्षेचरा[y] देवा[z] चतुर्महाराजिका देवा त्रायस्त्रिंशा[a]
15 देवा[b] यामा तुषिता निर्माणरतयो[c] परनिर्मितवशवर्तिनो[d] देवा याव ब्रह्मकायिका देवा[e]
Sen. 41 घोषमुदीरयेन्सुः शब्दमनुश्रावयेन्सुः[f]। एवं मार्षा[g] अभियो भिक्षु[h] भगवता सर्वाभिभूना[i]
अनुत्तराये[j] सम्यक्संबोधये[k][l] व्याकृतो[m] तं भविष्यति बहुजनहिताय बहुजनसुखाय लोकानु-
कम्पाय[n] महतो जनकायस्यार्थाय[o] हिताय[p] सुखाय[q] देवानां च मनुष्याणां च। अप्रमेयस्य
उदारस्य च महतो[r] अवभासस्य[s] लोके प्रादुर्भावो[t] अभूषि। या च ता लोके लोकान्तरिका[u]
20 अन्धकारा अन्धकारार्पिता तमिस्रा तमिस्रार्पिता अघा[v] असंविदिता असंविदितपूर्वा[w] यत्र
इमे पि चन्द्रमसूर्या[x] एवं महर्द्धिका[y] महानुभावा आभया[z] आभां नाभिसंभुणन्ति[a] आलोकेन
वा आलोकं अकाले[b] अपि तेनावभासेन[c] स्फुटा अभुन्सुः। ये पि तत्र[d] सत्वा उपपन्ना[e] ते

पि अन्यमन्यं[a] संजल्पेषु[b]। अन्ये पि किल भो इह सत्वा उपपन्ना[c] अन्ये पि[d] किल भो इह सत्वा उपपन्ना[e] अन्ये पि किल भो इह सत्वा उपपन्ना[f]। एकान्तसुखसमर्पिता च पुनस्तत्क्षणं[g] तत्मुहूर्तं[h] सर्वे[i] सत्वा अभुन्सुः[j] ये पि अवीचिस्मि[k][l] महानरके उपपन्ना अतिक्रम्य[m] येव[n] देवानां देवानुभावं[o] नागानां[p] नागानुभावं यक्षाणां[q] यक्षानुभावं[r]। ध्यामानि[s] च[t] अभुन्सुः मारभवनानि[u] निस्तेजानि[v] निरभिरम्यानि[w]। क्रोशिकानि[x] पि च खण्डानि[y] (5 Sen. 42) प्रपतेन्सुः[z] द्विक्रोशिकानि[a] पि च त्रिक्रोशिकानि[b] पि च खण्डानि प्रपतेन्सुः[c] योजनिकानि[d] पि च खण्डानि प्रपतेन्सुः[e] द्वे पंचयोजनिकानि[f] पि[g] च खण्डानि प्रपतेन्सुः[h]। मारो च पापीमां[i] दुःखी दुर्मनो विप्रतिसारी अन्तः[j]शल्यपरिदाघजातो[k] अभूषि।

अनुगीतगाथा।

सो तं दानं दत्वा प्रणिधेसि[l] लोकनायको अस्य[m]।<br>
देवमनुष्याचार्यो[n] आर्यं[o] धर्मं[p] प्रकाशेयं[q] ॥८॥

धर्मोल्कां[r] विचरेयं पराहणे धर्मभेरीं[s] सपताकां।<br>
उच्छ्रेयं[t] धर्मकेतुं[u] आर्यं[v] शंखं प्रपूरेयं ॥९॥

एवं च मह्यं अस्या प्रकाशना[w] देशना च धर्मस्य[x]।<br>
एवं च बहू[y] सत्वा आर्ये[z] धर्मे[a] निवेशेयं[b] ॥१०॥

एवं[c] च मे श्रुणेन्सुः[d] देवमनुष्या सुभाषितं[e] वाक्यं[f][g]।<br>
एवं च धर्मचक्रं प्रवर्तये[h] बहुजनहिताय[i] ॥११॥

कृच्छ्रापन्नैः[j] सत्वैः[k] जातिजरापीडितैर्मरणधर्मैः[l][m]।<br>
भवचक्षुकैः[n] अपायां[o] प्रज्ञास्कन्धं निवेशेयं ॥१२॥

संजीवे[p] कालसूत्रे[q] संघाते[r] रौरवे अवीचिस्मि[s]।<br>
षट्सु गतीहि[t] विकीर्णां भवसंसारात्प्रमोचेयं[u][v] ॥१३॥

Sen. 43 नरके[a] पक्व[b]विपक्वा अपायप्रपीडितां[c] मरणधर्मा[d] ।
अल्पसुखदुःखबहुलां भवसंसारात्[e]प्रमोचेयं ॥१४॥

अर्थं[f] चरेयं[g] लोके[h] देवमनुष्याणां[i] देशिय धर्मं[j] ।
एवं विनेय[k] सत्वां यथा[l] अयं लोकप्रद्योतो[m] ॥१५॥

5 एवं अहं[n] लोकमिमं चरेयं यथा[o] अयं चरति[p] असंगमानसो[q] ।
चक्रं[r] च वर्तेय अनन्यसादृशो[s] सुसत्कृतो[t] देवमनुष्यपूजितो ॥१६॥

प्रणिधिं[u] च ज्ञात्वा[v] सुसमुद्गतो[w] जिनो सर्वेहि[x] हेतूभि[y] उपस्थितेहि ।
अखण्डअच्छिद्रमव्रणं वियाकरे[z] अर्थदर्शी मतिमां ॥१७॥

बुद्धो[a] तुवं होहिसि लोकनायको[b] अनागते[c] कल्पशतसहस्रे ।
10 कपिलाह्वये[d] ऋषिवदनस्मि[e] शाकियो तदा[f] अयं 'प्रणिधिविपाकमेष्यति[g] ॥१८॥

अथ[h] सागरावलिमही[i] प्रकम्पते च दिवि देवसंघेषु[j] ।
व्याकरणं[k] तस्य द्युतिमतो[l] अभ्युद्गमि अभ्युद्गतं[m] घोषं ॥१९॥

Sen. 44 एष[n] अभियो भगवता[o] अत्यन्तसुभाषित[p]गीतध्वजेन ।
15 सर्वाभिभुना[q] मुनिना[r] वियाकृतो[s] होहिसि जिनो त्वं ॥२०॥

तं हितसुखाय[t] होहिसि[u] सब्रह्मसुरासुरस्य लोकस्य[v] ।
हायिष्यति[w] असुरकायं[x] नरमरुसंघो विवर्द्धन्ति[y] ॥२१॥

अथ खलु[z] महामौद्गल्यायन[a] ते दुवे गन्धिकमहत्तरका अभियस्य[b] अनुत्तराये[c] सम्यक्संबोधये[d] व्याकरणं श्रुत्वा हृष्टा[e] तुष्टाः प्रमुदिताः प्रीतिसौमनस्य[f]जाता[g] एवं
20 चित्तमुत्पादेन्सुः[h] । यदा[i] अभियो[j] भिक्षुः[k] अनुत्तरां[l] सम्यक्[m]संबोधि[n]मभिसंबुद्धो[o] भवेय तदा

वयमेतस्य[a] अग्रश्रावका[b] भवेयाम अग्रयुगो भद्रयुगो यथायं भवति सर्वाभिभूस्य[c] श्रावकयुगो[d]
एको अग्रो[e] प्रज्ञाये[f] एको[g] अग्रो ऋद्धीये[h]। अश्रोषीत्[i] महामौद्गल्यायन[j] उत्तियस्य[k] श्रेष्ठिस्य[l]
धीता अभियो[m] भिक्षुर्भगवता[n] सर्वाभिभूना[o] अनुत्तरायै[p] सम्यक्संबोधये[q] व्याकृतो। अथ
महामौद्गल्यायन[r] उत्तियस्य श्रेष्ठिस्य[s] धीता तं भगवन्तं[t] सश्रावकसंघं सत्कृत्वा गुरुकृत्वा
मानयित्वा पूजयित्वा अपचायित्वा एवं प्रणिधि मुत्पादेसि। मम अभियेन भिक्षुणा[u] 5
ईर्ष्याप्रकृतेन[v] अभूतो[w] अभ्याख्यानो[x] दिन्नो[y]। यन्मया भगवतो सर्वाभिभूस्य[z] सश्रावकसंघस्य
अधिकारं कृत्वा[a] कुशलमर्जितमहमेतेन[b] कुशलमूलेन[c] यत्र यत्र[d] अभियो भिक्षुरुत्पद्ये[e]य तत्र
तत्र[f] नं अभूतेन[g] अभ्याख्यानेन[h] अभ्याचिक्षेयं[i] यावत्परमसंबोधिप्राप्तं[j]। सिया ति Sen. 45
पुनर्[k]महामौद्गल्यायन[l] एवमस्य स्यात्[m]। अन्योऽसौ तेन कालेन तेन समयेन भगवतो
सर्वाभिभूस्य[n] अभियो नाम श्रावको अभूषि[o]। न एतदेवं[p] द्रष्टव्यं। तत्कस्य हेतोः[q] ? 10
अहं[r] महामौद्गल्यायन[s] तेन कालेन तेन समयेन भगवतो सर्वाभिभूस्य[t] अभियो नाम
श्रावको अभूषि[u]। सिया[v] ति पुनः[w] महामौद्गल्यायन[x] एवमस्य[y] स्यात्। अन्ये[z] ते तेन कालेन
तेन[a] समयेन वसुमते[b] महानगरे दुवे गन्धिकमहत्तरका[c] अभुन्सुः[d]। न खल्वेतदेवं[e] द्रष्टव्यं।
तत्कस्य हेतोः ? यूयं ते शारिपुत्र[f] महामौद्गल्यायन[g] तेन कालेन तेन समयेन दुवें
गन्धिकमहत्तरका[h] अभुन्सु[i]। तं[j] युष्माकं[k] मूलप्रणिधिं[l]। सिया ति पुनर्[m]महामौद्गल्यायन[n] 15
एवमस्य[o] स्यात्। अन्या[p] सा तेन कालेन तेन समयेन उत्तियस्य श्रेष्ठिस्य[q] धीता
अभूषि।.........। तेनषा[r] तीर्थिकांगना[s] प्रणिधानेन[t] यत्र यत्र उपपद्यामि[u] तत्र तत्र[v] अभूतं[w]
अभ्याख्यानं[x] देति यावत्परमसंबोधिप्राप्तस्य[y]। सिया ति[z] खलु पुनर्[a]महामौद्गल्यायन[b] एवमस्य[c]
स्यात्। अन्यो[d] सो तेन[e] कालेन तेन समयेन वसुमते महानगरे उत्तियो नाम श्रेष्ठि[f]
अभूषि[g]। न खल्वेतदेवं द्रष्टव्यं। एषो[h] सौ महामौद्गल्यायन शुद्धावासकायिको[i] देवपुत्रो[j] 20
तेन कालेन तेन[k] समयेन वसुमते महानगरे उत्तियो नाम श्रेष्ठि[l] अभूषि। एतेषां
कल्पानां[m] शतसहस्रं स्मरति धर्मं[n] समनुस्मरति।

इति श्रीमहावस्तुअवदाने अभियवस्तुं सानुगीतं समाप्तं[o] ॥

Sen. 46

इतो[a] भो[b] महामौद्गल्यायन अपरिमितासंख्येया कल्पा यं[c] मया बोधाय प्रणिहित[d] । अप्रमेयास्तथागता[e] अर्हन्तः[f] सम्यक्संबुद्धाः[g] पूजिता[h] नो[i] चाहं[j] व्याकृतो[k] । त्रीणि[l] मौद्गल्यायन[m] पुष्पनामकानां शतानि मया पूजितानि नो चाहन्तेहि[n] व्याकृतो[o] । अप्रमेया[p] असंखेया[q] कल्पा[r] संधाविता[s] संसरिता[t] अप्रमेया[u] च संबुद्धा[v] पूजिता[w] नो[x] चाहं तेहि[y] व्याकृतो[z] ।

चतस्रः[a] इह महामौद्गल्यायन[b] बोधिसत्वचर्याः[c] । कतमाश्चतस्रः[d] ? तद्यथा प्रकृतिचर्या[e] प्रणिधानचर्या अनुलोमचर्या अनिवर्तनचर्या ।

कतमा[f] च महामौद्गल्यायन[g] प्रकृतिचर्या[h] ? इह[i] महामौद्गल्यायन[j] बोधिसत्वप्रकृति[k]रेवं । भवन्ति मातृज्ञाः[l] पितृज्ञा[m] श्रामण्या[n] ब्राह्मण्याः[o] कुलज्येठापचायकाः[p][q] दशकुशलां कर्मपथां समादाय[r] वर्तन्ते परेषां च देशयन्ति दानानि देथ[s] करोथ[t] पुण्यानीति तिष्ठन्तां[u] च बुद्धां[v] पूजयन्ति श्रावकांश्च[w] नो च तावदनुत्तराय[x] सम्यक्संबोधये[y] चित्तमुत्पादेन्ति[z] ।

पूजयन्ति प्रथमं[a] तथागतां[b] गौरवेण[c] महता महायशां[d] ।
नैव[e] ताव[f] जनयन्ति[g] मानसं[h] अग्रपुद्गलगतं[i] नरोत्तमा[j] ॥१॥

Sen. 47

पूजयन्ति वशिभूतकोटियो[a] पुर्वमेव[k] वशिपारमिं[l] गता[m] ।
नैव[n] ताव[o] जनयन्ति मानसं ज्ञानसागरतराय[p] नायका[q] ॥२॥

ते च प्रत्येकबुद्धकोटियो[r][s] पूजयन्ति परमार्थपुद्गला[t] ।
नैव[u] ताव[v] जनयन्ति मानसं सर्वधर्मविदुताय[w] पण्डिता[x] ॥३॥

इयं[y] महामौद्गल्यायन[z] प्रकृतिचर्या ।

कतमा[a] च[b] महामौद्गल्यायन[c] प्रणिधिचर्या[d] ? इतो[e] महामौद्गल्यायन[f] अपरिमिता[g]

असंख्येया कल्पा[a] यं शाक्यमुनिर्नाम[b] तथागतोऽर्हं[c] सम्यक्संबुद्धो लोके उदपादि विद्या-
चरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः[d] शास्ता देवानां च मनुष्याणां[e] च ।
शाक्यमुनिस्य[f] खलु पुनः महामौद्गल्यायन[g] कपिलवस्तुं[h] नाम नगरं । विस्तरेण । तदाहं[i]
श्रेष्ठि[j] अभूषि । [k]य्वागूपानं[l] कृत्वा बोधाये प्रणिहितं[m] ।

ते[n] यदा विपुलपुण्यसंचया[o] 5
भोन्ति भावितशरीरमानसा[p] ।
ते उपेत्य वररूपधारिणो[q] Sen. 48
बोधये[r] उपजनेन्ति[s] मानसं ॥४॥
यं मया कुशलमर्जितं[t] पुरा[u]
तेन मे भवतु सर्वदर्शिता[v] । 10
मा[w] च मे प्रणिधी अवसीदतु[x]
यो यमेष[y] प्रणिधिः प्रवर्ततु[z] ॥५॥
यो ममं[a] कुशलमूलसंचयो[b][c]
सो[d] महा भवतु सर्वप्राणिहि[e] ।
यत्र कर्म अशुभं कृतं ममा 15
तं ममैव[f] कटुकं फलं[g] भवेत् ॥६॥
एवं[h] अहं लोकमिमं[i] चरेयं
यथा[j] अयं चरति असंगमानसो ।
चक्रं प्रवर्तेय[k] अनन्यसादृशं[l]
सुसत्कृतं[m] देवमनुष्यपूजितं ॥७॥ 20

[n]य्वागूपानं प्रथमं अदासि[o] लोकोत्तरस्य बुद्धस्य शाक्यमुनिनो भगवतो कल्पस्मि[p]
इतो[q] असंख्येये[r] । प्रथमा[s] प्रणिधि[t] तदा आसि ।

इतो[a] महामौद्गल्यायन[b] अपरिमिते असंख्येये[c] कल्पे[d] समितावि[e]र्नाम तथागतोऽर्हं[f]
Sen. 49 सम्यक्संबुद्धो लोके उदपादि विद्याचरणसंपन्नः[g] सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः[h]
शास्ता देवानां च मनुष्याणां[i] च। तेन खलु पुनस्समयेन[j] बोधिसत्वो राजा अभूषि
चक्रवर्ती[k] चातुर्द्वीपो[l] विजितावी[m] सप्तरत्नसमन्वागतो[n] धार्मिको[o] धर्मराजा[p] दशकुशलकर्मपथ-
5 समादायवर्ती[q]। इमानि सप्त रत्नानि अभुन्सुः[r], तद्यथेदं चक्ररत्नं[s] हस्तिरत्नमश्वरत्नं
मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नमेव सप्तमं। पूर्णं[t] चास्य पुत्रसहस्रं
अभूषि शूराणां[u] वीराणां वराङ्गरूपिणां[v] परसैन्यप्रमर्दकानां[w]। सो[x] इमानि चत्वारि
द्वीपानि सय्यथिदं[y] जम्बुद्वीपं[z] पूर्वविदेहं[a] अपरगोदानीयं उत्तरकुरुं[b] सागरगिरिपर्यन्ता-
मखिलामकण्ठकाम[c]दण्डेनाशस्त्रेणा[d]नुत्पीडेनादण्डेन धर्मेणेमां[e] पृथिवीमभिजित्वा[f] अध्या-
10 वसति। अथ खलु[g] महामौद्गल्यायन[h] राजा चक्रवर्ती[i] समिताविस्य[j] सम्यक्संबुद्धस्य
सश्रावकसंघस्य सर्वेण प्रत्युपस्थितो अभूषि[k] चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्य-[l]
परिष्कारेहि[m] सप्तरत्नमयं[n] च प्रासादं कारयेसि[o] सुवर्णस्य रूप्यस्य मुक्ताया वैडूर्यस्य
स्फाटिकस्य मुसारगल्वस्य[p] लोहितिकायाः[q] चतुरशीतिहि स्तम्भसहस्रेहि[r] एकमेकञ्च
स्तम्भं आवद्ध[s]हिरण्य[t]कोटिहि निर्मितो[u] उमार्धस्य[v]। चतुरशीति कूटागारसहस्राणि
15 कारयेसि[w] चित्राणि दर्शनीयानि[x] सप्तानां रत्नानां[y] तद्यथा सुवर्णस्य रूप्यस्य[z] मुक्ताया
वैडूर्यस्य[a] स्फाटिकस्य[b] मुसारगल्वस्य[c] लोहितिकाये[d]। तावल्लक्षणं[e] च महामौद्गल्यायन[f]
प्रासादं[g] कारयित्वा राजा चक्रवर्ती[h] समिताविस्य सम्यक्संबुद्धस्य[i] निर्यातेसि[j] एवं[k] च
Sen. 50 प्रणिधेसि[l]। अहो पुनरहमनागतमध्वानं[m] भवेयं[n] तथागतोऽर्हं[o] सम्यक्संबुद्धो[p] विद्याचरण-
संपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः[q] शास्ता देवानां च मनुष्याणां च
20 यथापीदं[r] भगवान्समिताविरेतर्हि[s] द्वात्रिंशतीहि[t] महापुरुषलक्षणेहि समन्वागतो[u] अशी-
तिहि अनुव्यञ्जनेहि उपशोभितशरीरो अष्टादशावेणिकेहि[v] बुद्धधर्मेहि समन्वागतो[w] दशहि[x]
तथागतबलेहि बलवां[y] चतुर्हि[z] वैशारद्येहि[a] सुविशारदो[b] यथायं[c] भगवान्समितावी[d] सम्यक्-[e]

संबुद्धो एतर्हि[a] एवञ्च तीर्णो तारयेयं आश्वस्तो आश्वासयेयं परिनिर्वृतो[b] परिनिर्वाप-
येयं । तं भवेयं बहुजनहिताय[c] बहुजनसुखाय लोकानुकंपाय[d] महतो जनकायस्यार्थाय[e]
सुखाय हिताय देवानां च मनुष्याणां[f] च । एवं महामौद्गल्यायन[g] तथागतस्य[h] अयं[i]
प्रणिधिः ।

एवं[j] अहं लोकमिमं[k] चरेयं 5
यथा[l] अयं चरति[m] असंगमानसो ।
चक्रं[n] प्रवर्तेय अनन्यसादृशो[o]
भवेयमहं[p] देवमनुष्यपूजितो ॥८॥

अथ खलु समिताविनो[q] सम्यक्संबुद्धस्य[r] एतदभूषि[s] । किं नु खलु मयि परिनिर्वृते[t]
इमेहि[u] च श्रावकेहि[v] परिनिर्वृतेहि इमस्मिं[w] धर्माख्यानेऽन्तरहिते[x] इतो केत्तकस्य नु खलु[y] 10
कालस्य बुद्धो भगवान्[z]लोके उपपदिष्यति[a] । एकस्मिं[b] कल्पे नाद्राक्षीत् । द्विहि[c] कल्पेहि[d] Sen. 51
नाद्राक्षीत्[e] । कल्पसहस्रेण[f] बुद्धं लोके पश्यति । अथ खलु[g] महामौद्गल्यायन[h] समिता-[i]
विस्य सम्यक्संबुद्धस्य[j] महता[k] कारुणेन समन्वागतस्य सत्वेषु महाकारुणं[l] ओक्रमि । पंच[m]
च बुद्धकार्याणि अवश्यं[n] कर्तव्यानि[o] । कतमानि पंच[p] ? धर्मचक्रं प्रवर्तयितव्यं माता[q]
विनेतव्या पिता विनेतव्यो[r] बौद्धवैनेयका[s] सत्वा[t] विनेतव्या युवराजा अभिषिंचितव्यो[u] । 15
एषो ममात्ययेन बुद्धो लोके[v] भविष्यति[w] यथा एतर्हि[x] अहं तथा एष अजितो बोधिसत्वो
ममात्ययेन बुद्धो लोके भविष्यतीति[y] अजितो नामेन मैत्रेयो[z] गोत्रेण बन्धुमायां[a] राजधान्यां[b] ।
यं नूनाहं कल्पानां शतसहस्रं[c] तिष्ठेहं[d] । अथ खलु समितावी[e] सम्यक्संबुद्धो भिक्षूना-[f]
मन्त्रेसि । इह[g] मह्यं रहोगतस्य[h] एकस्य प्रतिसंलीनस्य[i] अयमेवरूपो[j] चेतसो परिवितर्को[k]
उदपादि । किं नु खलु[l] मयि परिनिर्वृते इमेहि च श्रावकसंघेहि[m] परिनिर्वृतेहि इमस्मिं 20
धर्माख्याने[n] अन्तर्हिते इतो केत्तकस्य[o] नु[p] कालस्य[q] बुद्धो लोके उपपदिष्यति ? एकस्मिं[r]
कल्पे नाद्राक्षीत्[s] । द्वीहि[t] कल्पेहि नाद्राक्षीत्[u] । त्रीहि[v] कल्पेहि नाद्राक्षीत्[w] । कल्प-

शतसहस्रेण बुद्धं लोके पश्यामि[a]। पंच[b] मे बुद्धकार्याणि अवश्यं[c] कर्तव्यानि यो च सो
सत्वो युवराजाभिषिंचितव्यः सो दीर्घायुकेहि[d] देवेहि[e] उपपन्नो[f]। यं[g] नूनाहं कल्पानां[h]
शतसहस्रं स्थातुमि[i]च्छास्य[j]हं इच्छथ भिक्षवो कल्पानां शतसहस्रं स्थातुं को वा मया
Sen. 52 सार्धं[k] स्थास्यति[l]। तत्र[m] महामौद्गल्यायन[n] चतुरशीतिहि भिक्षुशतसहस्रेहि[o] सो लोको[p]
5 उद्गृहीतो[q] सर्वेहि[r] बलवशीभावप्राप्तेहि[s]। वयं भगवं[t] स्थास्यामः वयं सुगत स्थास्यामः।
अथ खलु समितावी[u] सम्यक्संबुद्धो ते च श्रावका[v] चिरं दीर्घमध्वानं तिष्ठेन्सुः[w]।
संवर्तकालसमये[x][y] मनुष्या कालगता[z] आभास्वरे देवनिकाये[a] उपपद्यन्ति राजापि[b] कालगतो
आभास्वरे[c] देवनिकाये उपपद्यति भगवान् भिक्षुसंघेन सार्धं आभास्वरं देवनिकायं
गच्छति[d]। विवर्तनीयकालसमये संस्थिते[e] लोकसन्निवेशे सत्वा आयुःक्षयाय आभास्व-
10 राद्[f]देवनिकायतो[g] च्यवित्वा इच्छत्वमागच्छन्ति[h]। बोधिसत्वो पि आभास्वरा[i]-
द्देवनिकाया[j] च्यवित्वा इच्छत्वमागत्वा राजा भवति चक्रवर्ती[k] चातुर्द्वीपो[l] विजितावी
याव[m] इमानि चत्वारि[n] महाद्वीपानि धर्मेणैव अभिनिर्जिनित्वा[o] अध्यावसति। यदा
मनुष्या[p] परिमितायुष्का[q] भवन्ति जराव्याधिमरणा[r] च प्रज्ञायन्ति तदा भगवान्[s]समितावी
सश्रावकसंघो[t] जम्बुद्वीपमागच्छति। आगत्वा[u] सत्वानां धर्मं[v] देशयति। तथैव[w] राजा[x]
15 चक्रवर्ती समिताविस्य[y] सम्यक्संबुद्धस्य[z] सर्वेण प्रत्युपस्थितो[a] चीवरपिण्डपात्र[b]शयनासन[c]-
ग्लानप्रत्ययभैषज्यपरिष्कारेहि[d]। सप्तरत्नमयं प्रासादं तादृशमेव[e] कारापयित्वा[f] भगवतः[g]
सम्यक्संबुद्धस्य[h] निर्यातेसि[i]। एतेन उपायेन कल्पशतसहस्रं[j] समितावी[k] सम्यक्संबुद्धो[l]
स्थितो[m] सश्रावकसंघो कल्पशतसहस्रं बोधिसत्वेन[n] उपस्थितो[o] सर्वत्र च कल्पे सप्तरत्नमयं
Sen. 53 प्रासादं तादृशमेव[p] कारापयित्वा निर्यातेसि समिताविस्य[q] सम्यक्संबुद्धस्य[r]। अनुत्तरां[s]
20 सम्यक्संबोधिं[t] प्रार्थयमानो[u] प्रासादशतसहस्रं[v] रत्नमयं अहं[w] चक्रवर्ती सन्तो समिताविनो[x]
अदासि। कल्पस्मि[y] इतो[z] असंख्येये[a]।

सो तं दानं दत्वा प्रणिधेसि[b] लोकनायको अस्यां[c]।
देव[d]मनुष्याचार्यो[e] आर्यं[f] धर्मं[g] प्रकाशेय्यं[h] ॥६॥

एवं[a] च मह्यं अस्या[b] प्रकाशना[c] देशना च धर्मस्य[d]।

एवं च वहुं[e] सत्वं आर्ये[f] धर्मे निवेशेय्यं[g] ॥१०॥

एवं च मे श्रुणेन्सुः[h] देवमनुष्या सुभाषितं वाक्यं।

एवं च धर्मचक्रं[i] प्रवर्तये[j] वहुजनहिताय[k] ॥११॥

धर्मोल्कां[l] विचरेयं पराहणे धर्मभेरीं[m] सपताकां[n]। 5

उच्छ्रेयं[o] धर्मकेतुमार्यं[p][q] शंखं प्रपूरेयं[r] ॥१२॥

कृच्छ्रापन्ने[s] लोके[t] जातिजरापीडिते[u] मरणधर्मे[v]।

भवचक्षुके[w] अपाया प्रज्ञास्कन्धं[x] निवेशेयं[y] ॥१३॥

संजीवे[z] कालसूत्रे[a] संघाते रौरवे[b] अवीचिस्मिं[c]।

षट्सु गतीषु[d] विकीर्णां[e] भवसंसारात्प्रमोचेयं ॥१४॥ 10

नरके[f] पक्वविपक्वां अपायप्रपीडितां[g] मरणधर्मा[h]।

अल्पसुखदुःखवहुलां[i] भवसंसारात्प्रमोचेयं[j][k] ॥१५॥

अर्थं[l] चरेयं लोके देवमनुष्याणां देशिय[m] धर्मं[n]। Sen. 54

एवं विनेय[o] सत्वां[p] यथा[q] अयं[r] लोकप्रद्योतो[s] ॥१६॥

द्वितीयो[t] प्रणिधि तदासि। अशीतिं[u] चन्दनविमानानि अदासि लोकोत्तरस्य 15
बुद्धस्य गुरुणो[v]। अहं भगवानस्यां[w] इतो असंख्येये[x]। तृतीयो[y] प्रणिधिः[z] तदासीत्। सप्तरतनमयानां[a] गुहानां[b] अशीति सहस्राणि[c] अर्को राजा अदासि[d] पर्वतनामस्य[e]। चतुर्थी[f] तदा प्रणिधिः[g] आसीत्। षड्वर्षाणि चरति[h] अनित्यसंज्ञानिमित्तकामेहि[i] रतनेन्द्रेणानुशासितो[j]। पंचमा[k] प्रणिधिः[l] तदा आसीत्।

इति श्रीमहावस्तुअवदाने बहुबुद्धसूत्रं समाप्तं ॥ 20

एवं मया श्रुतमेकस्मिं समये[m] भगवां[n] राजगृहे विहरति स्मं[o] गृध्रकूटे[p] पवते। अथ[q] खल्वायुष्मान्महामौद्गल्यायनो[r][s] काल्यमेव निवासयित्वा पात्रचीवरमादाय राजगृहं नगरं

पिण्डाय[a] प्रक्रमि[b]। अथ खल्वायुष्मतो[c] महामौद्गल्यायनस्य[d][e] अचिरप्रक्रान्तस्यैतदभवत्[f]। अतिप्रागस्तावदेतर्हि[g][h] राजगृहं नगरं पिण्डाय चरितुं। यं नूनाहं[i] येन शुद्धावासं[j] Sen. 55 देवनिकायं तेनोपसंक्रमेयं। अथायुष्मान्महामौद्गल्यायनः[k] तद्यथापि[l] नाम बलवान्पुरुषः[m] संमिंजितं[n] बाहुं प्रसारयेत्[o] प्रसारितं[p] च बाहुं संमिंजयेत्[q] एकक्षणेन पदवीतिहारेण[r] राज- 5 गृहाद्वैहायसमभ्युद्गम्य[s] शुद्धावासदेवनिकाये[t] प्रत्यस्थात्[u]। अद्राक्षीत्शुद्धावासकायिका[v] देवपुत्रा[w] आयुष्मन्तं[x] महायौद्गल्यायनं[y] दूरत एवागच्छन्तं[z]। दृष्ट्वा च पुनर्येनायुष्मान्[a]- महामौद्गल्यायनस्तेनोपसंक्रमित्वा[b] आयुष्मतो[c] महामौद्गल्यायनस्य[d] पादौ[e] शिरसा वन्दित्वा एकान्ते[f] अस्थासि। एकान्ते स्थित्वा च ते संबहुला शुद्धावासकायिका देवपुत्रा[g] आयुष्मन्तं[h] महामौद्गल्यायनं[i] गाथाभिरध्यभाषि[j]।

10 कल्पान[k] शतसहस्रं[l] संधावित्वान[m] बोधिपरिपाकं।
सुचिरस्यनन्तरतनो[n] बुद्धो लोकस्मि[o] उपपन्नो[p] ॥१॥

इत्थं वन्दित्वान[q] ते संबहुला शुद्धावासकायिका[r] देवपुत्रा[s] आयुष्मतो महामौद्गल्या-[t] यनस्य पादौ शिरसा वन्दित्वा एकान्ते अस्थासि। एकान्ते[u] स्थित्वा[v] अन्तर्हिता[w]। अथ खल्वायुष्मतो महामौद्गल्यायनस्यौतदभवत्[x]। एवं दुर्लभा[y] बोधिर्यत्र[z] हि नाम 15 कल्पानां[a] शतसहस्रेण। अथ खल्वायुष्मान्महामौद्गल्यायनस्तद्यथा[b][c] बलवान्पुरुषः[d][e] संमिञ्जितां बाहां प्रसारयेत्प्रसारितां[f][g] वा बाहां[h] संमिञ्जयेत् एत्तकेन[i] क्षणवीतिहारेण[j] Sen. 56 शुद्धावासतो देवनिकायातो[k] अन्तर्हितः[l] राजगृहे नगरे[m] प्रत्यस्था[n]। अथायुष्मान्महा- मौद्गल्यायनो[o] राजगृहे नगरे पिण्डाय[p] चरित्वा पश्चाद्भक्तो[q] पिण्डपात्रप्रतिक्रान्तः[r] पात्रचीवरं[s] प्रतिशामयित्वा पादौ प्रक्षालयित्वा[t] येन भगवांस्तेनोपसंक्रमित्वा[u][v][w] भगवतः[x] 20 पादौ शिरसा[y] वन्दित्वा एकान्ते[z] न्यषीददेकान्ते निषण्णश्च[a] पुनः[b] आयुष्मानमहामौद्गल्या-[c][d] यनो[e] भगवन्तमेतदवोचत्। इहाहं भगवन्काल्यस्यौव[f][g] निवासयित्वा पात्रचीवरमादाय[h] राजगृहं महानगरं पिण्डाय प्रक्रमि[i]। तस्य मे[j] भगवन् अचिरप्रक्रान्तस्यैतदभवत्[k]।

अतिप्रागस्तावदेतरहि[a] राजगृहे महानगरे पिण्डाय[b] चरितुं[c]। यं नूनाहं येन शुद्धावासं[d] देवनिकायं तेनोपसंक्रमेयं। चिर[e] मे देवनिकायं[f] शुद्धावासं उपसंक्रान्तस्य[g]। अथाहं[h] बलवां तद्यथा[i] पुरुष:[j] संमिजितां[k] बाहां प्रसारयेय[l] प्रसारितां वा बाहां[m] संमिजयेत् एत्त-[n]केन क्षणवीतिहारेण[o] राजगृहाद्वैहायसमभ्युद्गम्य[p] शुद्धावासे देवनिकाये प्रत्यस्थासि[q]। अद्राक्षीत्[r] मे भगवन्संबहुला: शुद्धावासकायिका[s] देवपुत्रा दूरत एवागच्छन्तं दृष्ट्वा च पुनर्येनाहं[t] तेनोपसंक्रमित्वा[u] मम पादौ शिरसा वन्दित्वा एकान्ते[v] स्थान्सु[w]। एकान्तस्थिता संबहुला[x] ते शुद्धावासकायिका देवपुत्रा मम गाथाये अध्यभाषेरन्[y]।

कल्पान[z] शतसहस्रं[a] संधावित्वान बोधिपरिपाकं।
सुचिरस्यनन्तरतनो[b] बुद्धो लोकस्मि[c] उपपन्नो ॥२॥

इत्थं[d] वदित्वान[e] ते संबहुला: शुद्धावासकायिका देवपुत्रा मम पादौ[f] शिरसा वन्दित्वा प्रक्रमि। तस्य मे भगवन्नेतदभवत्[g]। यावद्दु:खसमुदानीया[h] अनुत्तरा[i] संबोधिर्यत्र हि नाम कल्पानां शतसहस्रेण[j]। यं[k] नूनाहं[l] येन भगवांस्तेनोपगमित्वा[m] भगवन्तमेतमर्थं परिपृच्छेयं। यथा मे भगवां[n] व्याकरिष्यति तथा[o] नं धारयिष्यामि[p]। इह भगवां[q] किमाह। एवमुक्ते[r] भगवानायुष्मन्तं महामौद्गल्यायनमेतदवोचत्[s]। परीत्तकं खलु[t] पुनर्महामौद्गल्यायन[u] शुद्धावासकायिकानां[v] देवपुत्राणां[w] शतसहस्रन्ति। अप्रमेयेहि महामौद्गल्यायन[x] कल्पेहि असंख्येयेहि[y] अप्रमेयेहि[z] तथागतेहि अर्हन्तेहि[a] सम्यक्संबुद्धेहि कुशलमूलान्यवरोपितानि[b] आयतिसंबोधिं[c] प्रार्थयमानेहि[d]। अभिजानामि[e] खलु पुनरहं[f] महामौद्गल्यायन[g] त्रिंशद्बुद्धकोटियो[h] शाक्यमुनिनामधेयानां[i] ये[j] मया सश्रावकसंघा:[k] सत्कृता[l] गुरुकृता[m] मानिता:[n] पूजिता अपचिता[o] राज्ञा चक्रवर्तिभूतेन आयतिसंबोधिमभिप्रार्थयमानेन च[p] मे ते बुद्धा भगवन्तो व्याकरेन्सु:[q]। भविष्यसि त्वमनागतमध्वानं[r] तथागतोऽर्हं[s] सम्यक्संबुद्धो[t] विद्याचरणसंपन्नो[u] सुगतो लोकविदनुत्तर: पुरुषदम्यसारथि:[v] शास्ता देवानां च मनुष्याणां च। अभिजानाम्यहं खलु[w] पुनर्महामौद्गल्यायन[x] अष्ट बुद्धशत-

Sen. 57

सहस्राणि दीपंकरनामधेयकानां[a] ये मया सश्रावकसंघाः सत्कृता[b] गुरुकृता मानिताः[c] पूजिता[d] अपचिता[e] चक्रवर्तिभूतेन आयतिं[f] संबोधि[g]मभिसंप्रार्थयमानेन[h] च मे ते बुद्धा भगवन्तो[i] व्याकरेन्सुः[j]। यथा प्रथमे परिवर्ते तथा सर्वत्र कर्तव्यं। भविष्यसि[k] त्वम्[l]-(Sen. 58) नागतमध्वानं[m]। अभिजानाम्यहं[n] महामौद्गल्यायन[o] पंच बुद्धशतानि[p] पद्मोत्तरनामधेयानां। सर्वत्र[q] कर्तव्यं[r]। भविष्यसि त्वमनागतमध्वानं। अभिजानाम्यहं[s] महामौद्गल्यायन[t] अष्ट[u] बुद्धसहस्राणि प्रद्योतनामधेयानां। अभिजानाम्यहं[v] महामौद्गल्यायन[w] त्रयो बुद्धकोटीयो[x] पुष्पनामधेयानां[y]। अभिजानाम्यहं[z] महामौद्गल्यायन[a] अष्टादश बुद्धसहस्राणि मारध्वजनामधेयानां[b] यत्र मया ब्रह्मचर्यं चीर्णं[c] आयतिं बोधिं प्रार्थयमानेन च मे ते बुद्धा भगवन्तो[d] व्याकरेन्सुः[e]। अभिजानाम्यहं[f] महामौद्गल्यायन[g] पंच बुद्धशतानि पद्मोत्तरनाम[h]धेयानां[i] ये मया[j] सश्रावकसंघाः सत्कृताः[k]। अभिजानाम्यहं[l] महामौद्गल्यायन[m] नवति[n] बुद्धसहस्राणि काश्यप[o]नामधेयानि[p]। अभिजानाम्यहं[q] महामौद्गल्यायन[r] पंचदश[s] बुद्धसहस्राणि प्रताप[t]नामधेयानि[u]। अभिजानाम्यहं[v] महामौद्गल्यायन[w] द्वौ[x] बुद्धसहस्रौ कौण्डिण्यनामधेयौ[y]। अभिजानाम्यहं[z] महामौद्गल्यायन[a] चतुरशीति[b] प्रत्येकबुद्धसहस्राणि[c]। अभिजानाम्यहं[d] महामौद्गल्यायन[e] समन्तगुप्तं[f] नाम[g] तथागतमर्हन्तं[h] सम्यक्संबुद्धं[i]। अभिजानाम्यहं[j] महामौद्गल्यायन[k] बुद्धसहस्रं[l] जम्बुध्वजनामधेयानां। अभिजानाम्यहं[m] महामौद्गल्यायन[n] चतुरशीति[o] बुद्धसहस्राणि इन्द्रध्वजनामधेयानां[p]। अभिजानाम्यहं[q] महामौद्गल्यायन[r] पंचदश बुद्धसहस्राणि आदित्यनामधेयानां[s]। अभिजानाम्यहं[t] महामौद्गल्यायन[u] द्वाषष्टि[v] बुद्धशतानि[w] अन्योन्यनामधेयानां[x]। अभिजानाम्यहं[y] महामौद्गल्यायन[z] चतुर्षष्टि[a] बुद्धान[b] समितावि[c]नामधेयानां[d]।

सुप्रभासो[e] नाम[f] महामौद्गल्यायन[g] तथागतोऽर्हं[h] सम्यक्संबुद्धो यत्र मैत्रेयेण बोधिसत्वेन[i] प्रथमं कुशलमूलान्यवरोपितानि[j] राज्ञा वैरोचनेन चक्रवर्तिभूतेन आयतिं संबोधिं प्रार्थयमानेन। सुप्रभासे खलु पुनर्महामौद्गल्यायन[k] तथागतभूते[l] चतस्रः[m]

चतुरशीतिकोटिवर्षसहस्राणि मनुष्याणामायुषः[a] प्रमाणमभूषि[b] अन्तरा[c] च उच्चा-
वचता[d] आयुषः[e]। सुप्रभासस्य खलु पुनर्[f]महामौद्गल्यायन तथागतस्यार्हतः[g] सम्यक्-
संबुद्धस्य[h] त्रयः[i] सन्निपाताभूत्[j]। प्रथमो[k] श्रावकसन्निपातो[l] षण्णवति[m] कोटीयो[n] अभूषि
सर्वेषां[o] अर्हन्तानां क्षीणाश्रवाणामुषित[p]व्रतानां[q] सम्यगाज्ञा[r]विमुक्तानां परिक्षीणभव[s]-
संयोजनानामनुप्राप्तस्वकार्थानां[t]। द्वितीयो श्रावकसन्निपातो[u][v] चतुर्नवति[w] कोटियो[x] 5
अभूत्[y]सर्वेषामर्हन्तानां क्षीणाश्रवाणा[z]मुषितव्रतानां[a] सम्यगाज्ञा[b]विमुक्तानां परिक्षीणभव-
संयोजनानां[c] अनुप्राप्तस्वकार्थानां[d]। तृतीयो श्रावकसन्निपातो द्वानवति कोटियो[e] अभूषि[f]
सर्वेषा[g]मर्हन्तानां[h] क्षीणाश्रवाणा[i]मुषितव्रतानां[j] सम्यगाज्ञा[k]विमुक्तानां परिक्षीणभवसंयोज-
नानां[l] अनुप्राप्तस्वकार्थानां[m]। अथ खलु महामौद्गल्यायन[n] राज्ञो[o] वैरोचनस्य[p] तं[q] भगवन्तं
सुप्रभासं दृष्ट्वा उदारहर्षं[r] उदारवेगप्रीतिप्रामोद्यं[s] उत्पद्ये[t]। सो तं भगवन्तं[u] सश्रावक- 10
संघं दश वर्षसहस्राणि सत्करेसि[v] गुरुकरेसि[w] मानेसि[x] पूजेसि[y] अपचायेसि[z]। सत्कृत्वा Sen. 60
गुरुकृत्वा[a] तां[b] च समितिमनुगृह्णन्तो[c] तं च श्रावकसंघ[d]मनुगृह्णन्तो[e] तं चायुःप्रमाणमनु[f]-
गृह्णन्तो[g] एवं चित्त[h]मुत्पादेसि[i]। अहो[j] पुनरहं भवेयमनागतेऽध्वनि[k] तथागतोऽर्हं[l] सम्यक्-
संबुद्धो विद्याचरणसंपन्नः[m] सुगतो लोकविदनुत्तरः[n] पुरुषदम्यसारथिः[o] शास्ता देवानां च
मनुष्याणां च यथायं भगवान्[p]सुप्रभासो एतरहि[q][r]। एवं सर्वाकारसंपन्नं[s] सर्वाकारप्रतिपूरं[t] 15
धर्मं[u] देशेयं[v] यथापीह भगवान्[w]सुप्रभासो एतरहि[x]। एवं[y] समग्रं[z] श्रावकसंघं परिहरेयं
यथापि भगवान्[a]सुप्रभासो[b] एतरहि[c]। एवं च मे देवाश्च[d] मनुष्याश्च श्रोतव्यं[e] श्रद्धातव्यं
मन्येन्सुः[f] यथापीदं[g] भगवतो[h] सुप्रभासस्य एतरहि[i]। तं भवेयं[j] बहुजनहिताय[k] बहुजन-
सुखाय लोकानुकंपाय महतो जनकायस्यार्थाय[l] हिताय सुखाय देवानां च मनुष्याणां च।
एवं[m] चाहं महामौद्गल्यायन[n] अतो[o] च भूयो[p] अन्यं[q]। चतुरचत्वारिंशत्कल्पसंप्रस्थितस्य[r][s] 20
खलु[t];पुनर्महामौद्गल्यायन[u] मैत्रेयस्य[v] बोधिसत्वस्य[w] पश्चा[x] ताये बोधये, चित्तमुत्पादितं[y]।
अपराजितध्वजो[z] नाम[a] महामौद्गल्यायन[b] तथागतोऽर्हं[c] सम्यक्संबुद्धो[d] यो मये सश्रावक-

संघो वर्षसहस्रं सत्कृतो[a] गुरुकृतो मानितो पूजितोऽपचितो[b] राज्ञा दृढधनुना चक्रवर्तिभूतेन आयतिं संबोधिं[c] प्रार्थयमानेन[d] महन्तेहि च पंचेहि[e] दुष्ययुगशतेहि[f] अभिच्छादिता।

Sen. 61

परिनिर्वृतस्य च स्तूपं कारितं योजनमुच्चत्वेन योजनमभिनिवेशेन[g]। एषा[h] च[i] महामौद्गल्यायन[j] प्रणिधि[k] सततसमिता[l] अभूषि। यस्मिं[m] समये सत्वा[n] भवेन्सुः[o] अलेना अत्राणा अशरणा[p] अपरायणा[q] उत्सदलोला उत्सददोषा उत्सदमोहा[r] अकुशलान्धर्मा[s]

5

समादाय वर्तेन्सुः[t] योभूयेन[u] च अपायप्रतिपूरका[v] भवेन्सु[w] तस्मिं[x] काले तस्मिं समये[y] अहमनुत्तरां[z] सम्यक्संबोधिमभिसंबुध्येहं[a]। तं भवेय[b] बहुजनहिताय बहुजनसुखाय लोकानुकंपाय महतो जनकायस्यार्थाय[c] हिताय सुखाय देवानां च मनुष्याणां[d] च। दुष्करकारका[e] महामौद्गल्यायन[f][g] तथागतार्हन्तो[h] सम्यक्संबुद्धा[i] लोकस्यार्थं[j] चर्यां[k] चरन्ति।

10

इदमवोचद्भगवानात्तमनो[l][m][n] आयुष्मान्महामौद्गल्यायनो[o][p] भगवतो भाषितमभ्यनन्दत्[q]।

शाक्यमुनिनामकानामुपस्थितास्त्रिंश[r][s] कोटियो[t] जिनानां।
अष्टशतसहस्राणि[u] दीपंकरनामधेयानां[v] ॥३॥
षष्टिं च सहस्राणि[w] प्रद्योतनामधेयानां[x]·········।
तथ[y] पुष्पनामकानां[z] त्रयो कोटियो[a] वादिसिंहानां ॥४॥

15

अष्टादश[b] सहस्राणि मारध्वजनामकानां[c] सुगतानां।
यत्र चरे ब्रह्मचर्यं[d] सर्वज्ञतामभिलाषाय[e] ॥५॥
पूजयि[f] पंच शतानि पद्मोत्तरनामकानां सुगतानां।

Sen. 62

कौण्डिन्यनामकानामपराणि[g][h] द्वि सहस्राणि ॥६॥
अपरिमितासंख्येया[i] प्रत्येकजिनान[j][k] कोटिनयुतां[l] च।

20

पूजयि बुद्धसहस्रं जम्बुध्वजनामधेयानां[m] ॥७॥
चतुरशीति सहस्राणि इन्द्रध्वजनामकानां सुगतानां।
नवतिं च सहस्राणि काश्यपसहनामधेयानां॥८॥

पंचदश बुद्धसहस्राणि प्रतापनामकानां सुगतानां ।
पंचदश[a] च सहस्राणि आदित्यनामधेयानां[b] ॥९॥
द्वाषष्टि[c] च शतानि सुगतानां अन्योन्यनामधेयानां ।
चतुर्षष्टि[d] च सहस्राणि समितावीनामधेयानां[e] ॥१०॥
एते च कोलितशिरी[f] अन्ये च दशबला अपरिमाणा[g] । 5
सर्वे अनित्यताय समिता[h] लोकप्रद्योता[i][j] ॥११॥
यानि च बलानि[k] कोलित तेषां महापुरुषलक्षवराणां[l] ।
सर्वे अनित्यताय[m] कालं न उपेन्ति[n] संख्यां[o] च ॥१२॥
ज्ञात्वानानित्यबलं[p] सुदारुणं[q] सत्कृतस्य[r] अनन्तरं[s] ।
वीर्यारम्भो[t] योजितो अनित्यबलस्य[u] विघाताय[v] ॥१३॥ 10

इतो[w] मौद्गल्यायन[x] अपरिमिते[y] असंख्येये[z] कल्पे[a] रत्नो[b] नाम[c] सम्यक्संबुद्धो अभूषि
तथागतोऽर्हं सम्यक्संबुद्धो विद्याचरणसम्पन्नः[d] सुगतो[e] लोकविदनुत्तरः पुरुषदम्यसारथिः[f]
शास्ता देवानां च मनुष्याणां[g] च। अहं[h] तदा राजा चक्रवर्ति[i] अभूषि। ततो मयैतस्य[j]
भगवतो रतनवतो[k] चतुरशीति कूटागारसहस्राणि कारितानि चित्राणि दर्शनीयानि Sen. 63
सप्तानां रत्नानां सुवर्णस्य[l] रूप्यस्य[m] मुक्ताया[n] वैडूर्यस्य स्फाटिकस्य[o] मुसारगल्वस्य[p] लोहिति- 15
कायाः[q]। तानि मया तस्य भगवतो निर्यातित्वा[r] बोधाय अनुप्रणिहितं[s]। न[t] तावद्बुद्धा[u]
भगवन्तो परिनिर्वायन्ति[v] यावद्युवराजा[w] अनभिषिक्तो[x] भवति[y]। एषो[z] मम[a] अनन्तरं
बुद्धो लोके[b] भविष्यति। यथर्तहि[c] मया मैत्रेयो[d] व्याकृतो एषो ममानन्तरं[e] बुद्धो भविष्य-[f]
तीति। सो भगवां चतुरशीतिहि[g] श्रावकसहस्रेहि[h] सार्धं[i] चतुरशीतिसंवर्तविवर्तस्थितो[j]
संवर्तमाने[k] लोके भगवाञ्चतुरशीतिहि[l] श्रावकसहस्रेहि[m] सार्धं[n] आभास्वरं[o] देवनिकायं 20
गच्छति[p] विवर्तमाने[q] लोके इहागच्छति इह धर्मं[r] देशयति। अहं भूयो राजा चक्रवर्ती[s]

भवामि। चतुरशीतिकूटागारसहस्राणि कारापयित्वा[a] भगवतो रतनवतो[b] निर्यातेमि[c]। इयं[d] महामौद्गल्यायन[e] प्रणिधिचर्या[f]।

कतमा च अनुलोमचर्या[g]। इह[h] महामौद्गल्यायन[i] बोधिसत्वो महासत्वो बोधाय अनुलोमताये स्थितो[j] भवति। इयं[k] महामौद्गल्यायन[l]·········अविवर्तचर्या[m]। विवर्तन्ति[n] संसरन्ति विवर्तचर्या[o]। अवैवर्तिया[p] बोधाय[q] भवन्ति[r] अविवर्तचर्या[s]।

अत्र दशभूमिको[t] कर्तव्यो[u] दीपंकरवस्तु च।

नमोऽस्तु[v] बुद्धानां[w] नमोऽर्हतां[x]। दशभूमिकस्यादि

वत्त अप्रतिम धर्मदर्शनं
[Sen. 64] नैककल्पशतसंचितात्मनां[y][z][a]।
भूमयो दश[b] जिनान श्रीमतां
यैर्विकुर्विषु[c] सदा पण्डिता॥१४॥
मानदर्पमदमोहमोचिता[d][e]
सर्वशः समियमार्दवान्विता[f]।
गौरवं[g] जनिय सर्वदर्शिषु[h]
श्रूयतां जिनवरस्य[i] शासनं॥१५॥
निर्वृते[j] कनकराशिसन्निभे[k]
शाक्यनन्दिजनने[l][m][n] तथागते[o]।
कंपि मेदिनी[p] सशैलकानना[q][r]
सागरांबरधरा[s] सपर्वता[t]॥१६॥
कम्पितं[u] परमरोमहर्षणं[v]
भूमिकंपमनुदृश्य दारुणं।

काश्यपो धूतगुणाग्रपारगो
चित्तम[a]भ्युपगतः[b] तदा[c] अभूत् ॥१७॥
किं नु अद्य धरणी[d] सपर्वता
सागराम्बरधरा वसुन्धरा।
कम्पते परमदारुणस्वरं 5
नूनं[e] निर्वृतिं गतस्[f]तथागतः ॥१८॥
सो च दिव्यनयन[g]स्तथागतं[h]
देवकिन्नरवरेहि वन्दितं
दृश्य[i] सर्वभवबन्धनान्तकं Sen: 65
निर्वृतं[j] यमक[k]शालअन्तरे ॥१९॥ 10
न खलु मे[l] समुचितं[m] तथागतं
ऋद्धिये[n] समनुगन्[o]तु गौतमं[p]।
पद्भिरेव[q] वदतां[r] वरं मुनिं[s]
द्रष्टुमप्रतिमं[t][u] प्रव्रजाम्यहं ॥२०॥
सो च मत्व[v] त्वरमाणो सूरी 15
काश्यपो[w] मथितमानसो भिक्षुः[x]।
भिक्षुभि[y]र्बहुभिरुत्तमो परि-
निर्वृ[z]तभुवमनुपूर्वमागमि[a]॥२१॥
तस्य च प्रणिधि[b]रासि उत्तमा
काश्यपस्य जिन[c]पादवन्दने[d]। 20
तौ········चरणौ महामुने[e]
मूर्धिना[f] उपान[g]पीड्य वन्दितुं ॥२२॥

संगृह्योल्कां[a] विपुलां[b] अथ चतस्रो
मल्लका[c] उपगता[d] बलवन्तः[e]।
वीजितां[f] परममल्लविनीतां
दग्धउल्कां[g] अभिप्राणमयेन्सुः[h][i] ॥२३॥
5 तैश्रितामभिमुखं[j] उपनीता[k]
तैः पराक्रमबलै[l] रथशूरैः[m]।
Sen. 66 निर्वृता च[n]·········सा समकालं
प्राप्य वारिपरिषेकमिवोल्का[o] ॥२४॥
संशयं विमतिमध्यमुपेत्य[p][q]
10 मल्ला दिव्यनयनं[r] अनिरुद्धं[s]।
गौरवा[t] नतशिरा सुविनीता
प्रश्नम्·········इदं परिपृच्छे ॥२५॥
को नु हेतुरिह प्रत्ययो च को[u]
येनिमा[v] जिनसुता[w] उपनीता[x]।
15 निर्वृतिं[y] उपगता सहसोल्का[z][a]
ब्रूहि कारणमिहार्य यथावत् ॥२६॥
देवता खलु[b] प्रसन्ना काश्यपे[c]
तस्य एष खलु[d] ऋद्धिभावना।
नैव तावं[e] ज्वलनो ज्वलिष्यति
20 याव[f] नागतो अग्रपारगः[g] ॥२७॥
तस्य[h] चैष प्रणिधिः[i] समृध्यति
काश्यपस्य[j] धुतधर्मधारिणः[k]।

तौ क्रमौ दशबलस्य श्रीमतः[a]<br>
वन्दितुं हि शिरसा महामुने[b] ॥२८॥<br>
सो च भिक्षुगण[c]संपुरस्कृतः[d]<br>
काश्यपो[e] धुतरजो[f] जिनात्मजः[g] ।<br>
प्रांजली[h] जिनचितामुपागतो[i] 5<br>
गौरवा[j] प्रणतशीर्षमानसः[k] ॥२९॥<br>
दृश्य[l] तं प्रवररूपधारिणं Sen. 67<br>
काष्ठसंचय[m]गतं[n] तथागतं ।<br>
धिग्भवानिति[o] गिरामुदीरयी[p]<br>
दर्शितप्रकृतिभावलक्षणां[q] ॥३०॥ 10<br>
को नु[r] सो भव[s]मुपेत्य[t] प्राणको[u]<br>
यो न मृत्यु[v]वशमागमिष्यति[w] ।<br>
यत्रयं ज्वलन[x]कांचनोपमो<br>
निर्वृतो शिखिरिवेन्धनं[y] विना ॥३१॥<br>
कृत्व[z] अंजलि[a]पुटं[b] महायशो[c] 15<br>
पादतो जिनवरस्य काश्यपो ।<br>
मूर्धिना[d] निपतितो महर्षिणो[e]<br>
पश्चिमं 'इदं नमस्यते मुने ॥३२॥<br>
तौ[f] च चक्र[g]वरलक्षितौ[h] क्रमौ<br>
देवदानववरेहि वन्दितौ । 20<br>
निःसृतौ[i] तथ विदार्य[j] तां चितां<br>
देवयक्ष[k]भुजगानुभावितौ[l] ॥३३॥

तौ क्रमौ[a] शिरसि सन्निपातिय[b]
पाणिभिः समनुगृह्य[c] चा मुने[d]।
आलपे[e] श्रुतिधरं महर्षिणं[f]
अन्तिकावचरः[g] काश्यपस्[h]तदा[i] ॥३४॥
5 Sen. 68 किं[j] त्विमौ श्रुतिधर क्रमौ मुने
ध्यामतामुपगतौ[k] न सुप्रभौ।
ब्रूहि[l] कारणमशेषमा[m]ह्वय
येनिमौ न नयना[n]भिनन्दिनौ[o] ॥३५॥
एतं[p] श्रुत्व[q] श्रुतसंचयंधरो
10 काश्यपं[r] इदमुवाच पण्डितो।
अश्रुवेग[s]दुषिता[t] व शोचतां
रोदितेहि[u] मथिता[v] हिमौ[w] क्रमौ[x] ॥३६॥
तेनिमौ[y] क्रमवरौ महामुनेः[z]
रोदनेन जनता[a]भिपीडितौ[b]।
15 नो विभान्ति[c] मुनिनो यथा पुरा
एवमेतदनुपश्य[d] सुव्रतं[e] ॥३७॥
सो[f] निपत्य शिरसा[g] पुनःपुनः
तौ[h] क्रमौ प्रवरचक्रलक्षणौ।
करतलेहि[i] अभिपीडयेत्[j]मुने
20 शास्तु गौरवपराय बुद्धिये[k] ॥३८॥
वन्दितौ च धूतधर्म[l]धारिणा[m]
तौ क्रमौ गुणधरेण शास्तुनो।

लोक[a]नाथचितकाष्ठ तेजसा
वायुवेगविधु[b]तेन दी[c]प्यति ॥३९॥
द[d]ह्यमाने जिनचन्द्रशरीरे Sen. 69
पंच तानि [e]वशिभूतशतानि ।
मन्त्रय[f]न्ति सहि[g]ता समुपेत्य 5
[h]निर्वृतीसमयकाले संगीतिं ॥४०॥
निर्वृतो प्रवरलक्षणधा[i]री
यो नु शा[j]स्तु ससुरासु[k]रनेता ।
को [l]गुणो इह चिरंपरिवासे
वयम[m]प्यद्य विजहामथ देहं ॥४१॥ 10
स[n]र्वथा सु[o]प[p]रिनिष्ठितकार्याः
प्रा[q]प्य अच्युतमशोकमनन्[r]तं ।
सर्वभावभ[s]ववीतिगता स्म
[t]एष निर्वृतिमुपेम इ[u]हैव ॥४२॥
[v]एवमुक्ते धु[w]तध[x]र्मविशुद्धो 15
काश्यपो ब्रवि तदा व[y]शिभूतां
[z]न खु भवद्भिरनुपा[a]दि विमुक्ति
[b]निर्वृती सम[c]नुगम्य इहै[d]व ॥४३॥
तीर्थि[e]का च बहिर्धानुगताश्च[f]
क्रेयुरप्रति[g]मशासनदोषं । 20
[h]धूमकालिकमिति [i]श्रमणस्य
[j]एतदेव च तु [k]रक्षणीयं नो ॥४४॥

लोकनाथ बहवो नरसिंहा[a]

Sen. 70 ये चनागत[b] महामति[c]शूरा[d]।

ते हि नो[e] उपपदेयु[f]रुदग्रा[g]

यदि न संकलिये[h] शासनं[i] शास्तुः ॥४५॥

5 तेन[j] अप्रतिहताः सुसमग्राः[k]

गायथा[l] सुगतशासनमग्रचं।

यथ इदं सुपरिगीत[m] यथार्थं[n]

चिरतरं नरभरुंषु[o] विरोचे[p] ॥४६॥

एवमस्तु[q] इति ते वशिभूता[r]

10 काश्यपस्य[s] वचनं प्रतिपूज्य[t]।

चित्तमप्युपगता[u] क्व इदानीं[v]

देशि धर्मधर[w]संगणना स्यात् ॥४७॥

रम्यकाननवने[x] सुसमृद्धे

मागधस्य मगधाधिपतिस्य[y]।

15 पुरवरे[z] भवतु राजगृहस्मि[a]

सप्तपर्ण[b]अभिधानगुहायां ॥४८॥

पर्वतस्य[c] वैहायवरस्य[d]

उत्तरस्मि[e] तीरे वरपार्श्वे[f][g]।

विविधपादपे[h] शिलातल[i]भूमेः[j]

20 भागे यं भवतु धर्मसमस्या[k] ॥४९॥

ते च ऋद्धि[l]वशिभाव[m]बलस्था

Sen. 71 उद्गताः[n] खगपथे जिनपुत्रा।

तत्क्षणान्तर[a]······प्रपलाना

मानसं सरो यथा हंसयूथो ॥५०॥

ते प्रतिछिता नगा[b]ग्रवरस्य

पार्श्वे तद्वनमुपेत्य निष[c]ण्णा ।

शा[d]सने च सुगतस्य सुगीते[e] 5

देवदु[f]न्दुभिगणानि नदे[g]न्सुः ॥५१॥

ते च दुन्दुभिन ना[h]दं नदन्तं

श्रु[i]त्व शासनकरा सुगतस्य[j] ।

भूमिकम्पमनुदृश्य[k] च घोरं

का[l]श्यपं धुतरजं इदमूचुः ॥५२॥ 10

किं तु[m] (?) भो[n]ः धुत[o]धरा समकंपि[p]

मेदिनी ससरिता[q] ससमुद्रा ।

देवदुन्दु[r]भिरवाश्च मनोज्ञा[s]

दिव्यमाल्यविकि[t]रणं च भवन्ति ॥५३॥

तानुवाच धत[u]धर्मसमंगी 15

काश्यपो जिनसुतां[v] वशिभूतां ।

एते सन्निपतिता मरुसंघा

श्रु[w]त्व शासनवरं[x] सुसमग्रचं[y] ॥५४॥

ते समग्रवरल[z]क्षणधारी

गौ[a]रवात्प्रमुदिता मरु[b]संघाः । 20

पू[c]जां अप्रतिमकस्य करोन्ति

शासनं श्रृ[d]णुयु सर्वसमग्रचं[e] ॥५५॥ Sen. 72

सो हि नैकभवकल्पशतेहि[a]
हितसुखाय नरदेवगणानां ।
एवमभ्युपगतो[b] चिररात्रं
मोक्षयिष्येऽहं[c] प्रजाः[d] परिमुक्तः[e] ॥५६॥
सो लभित्व परमार्थमशोकं[f]
सर्वभावभवदुःख[g]निरोधं[h] ।
काशिपुर्यां[i] नरदेवहितार्थं[j]
वर्तयिष्यि वरचक्रमद्भुतं[k] ॥५७॥
पंचकेहि[l] सह तेहि मुनीहि
मरुगणां विनयवादिनां वरो[m] ।
सत्वकोटिनयुतानि नायको[n]
जातिजन्म[o]मरणात्समुद्धरे[p] ॥५८॥
सो[q] विमोक्षयि भवाभिनन्दिनो[r]
तोषयं[s] नरमरू[t] नरसिंहो[u] ।
मथिय[v] सर्वपरवादि सांप्रतं[w]
निवृतो[x] तु भगवां निरपेक्षो[y] ॥५९॥
एत[z] श्रुत्व[a] वचन[b] मनोरमं[c]
काश्यपस्य धुतधर्मधारिणो ।
देवसंघा[d] मुदिता नभे स्थिता
व्याहरन्ति वचनं[e] मनोरमं[f] ॥६०॥
साधु[g] साधु[h] धुतधर्मकोविदा
शास्तु शासनकरा[i] अनन्यथा ।

Sen. 73

भाषसे[a] गुण[b]मनन्तबुद्धिनो[c]
जेतवने नरमरू[d] सुतोषिता[e] ॥६१॥
सो हि देवमनुजान[f] उत्तमो[g]
सोहि[h] अग्रपुरुषो महामुनिः[i] ।
सो[j] हि निः[k]शरण[l]मुत्तमं प्रभुः 5
दृष्टदर्शनो[m] हिताय प्राणिनां ॥६२॥
तेन[n] स्कन्धा[o] तडिबुद्बुदोपमा[p]
फेनपिण्डकमिव[q] प्रभास्वरं[r] ।
देशिता दशबलेन[s] जानता[t]
यस्यियं[u] गुणकथा प्रवर्तते ॥६३॥ 10
कृष्णसर्प[v]शिरसन्निभास्तथा[w]
काम[x] अग्रपुरुषेण देशिता ।
शस्त्र[y]रुच्छविषकुम्भ[z]सन्निभा[a]
यस्यियं[b] गुणकथा[c] प्रवर्तते ॥६४॥
तेन दृष्टमचलं[d] परं[e] सुखं[f] 15
दृष्टिभिः परमसाधु[g]दृष्टिभिः ।
तं अमत्सर[h]वता प्रकाशितं
संविभागरुचिना[i] यदद्भुतं ॥६५॥
उद्गते दिनकरे[j] यथा[k] किमि
निष्प्रभो[l] भवति नो[m] च भ्राजति[n] । 20 Sen. 74
उद्गते[o] जिनदिवाकरे[p] तथा
निष्प्रभा परगणी[q] असंयता[r] ॥६६॥

ऋद्धि[a]पादबल[b]पारमिं गतो[c]
ईश्वरो जिनबले[d]न चक्षुमां[e]।
लो[f]चनं भगवतस्य पश्यथ
निर्वृतो कनकविम्वसन्निभो ॥६७॥
5 धिग्भवां सरद[g]अभ्रसन्निभा[h]
वा[i]लिकानगररूपसन्निभा।
यत्र नाम कुश[j]लान संचयो[k]
निर्वृतो परमबुद्धिसागरो[l] ॥६८॥
हेतुकारणशतेहि नायको[m]
10 नर्दते पुरुषसिंहनर्दितं।
भ[n]वमनन्यमरणं निरीक्ष्य
तस्य उत्क्रमन्तरं न विद्यते ॥६९॥
दिव्यपुष्प[o]वरमण्डितं नभं[p]
शोभते सुगत[q]वर्णभाषणे।
15 दिव्यचन्दनरसानुवासितं
शोभते अमृतगन्धिकं नभमिति ॥७०॥

अथ खल्वायुष्मान्महामौ[r]द्गल्यायनो आयुष्मन्तं महाकाश्यपमामन्त्रयति। व्यवस्थापय जिनपुत्र वशिभूता ये परि[s]षायां संशयगतानि मान[t]सानि विजाने- युरिति। अथा[u]निरुद्धं उपा[v]लिं च स्थवि[w]रं च अल[x]कुण्डलभ[y]ट्टियं सुन्दरनन्दं[z] च काश्यप उवाच।

Sen: 75

20

अव[a]लोकेथ जिनात्मजाश्चित्तानि या परिषायां[b]।
संशयं च परिपृच्छथ यस्य यत्र तथा भवेदिति ॥७१॥

साधूति[a] ते प्रतिश्रुत्वा जिनशास्त्रविशारदाः[b] ।
पश्यन्ति परचित्तानि[c] करे[d] वामलकं यथा ॥७२॥
प्रलम्बबाहुं[e] वशिभूतं काश्यपो इदमब्रवीत् ।
गृध्रकूटस्य[f] शिखरे[g] निर्मिणे[h] वसुधां लघुं ॥७३॥
अष्टादश[i] सहस्राणि परिषायां समागता । 5
यथा सर्वाभिजानेया[j] [k]ऋद्धि संजनया[l] तथा[m] ॥७४॥
विचिन्तचूतं[n] वशिभूतं काश्यप[o] इदमब्रवीत् ।
गंगोदकमया[p] मेघा निर्मिणे[q] गगने[r] लघुं[s] ॥७५॥
विविधगन्धपुष्पाश्च उपवायन्तु[t] सवतः[u] ।
मानुषाणामामगन्धा[v][w] च शीघ्रमन्तरहापय[x] ॥७६॥ 10
हर्यक्षं[y] नाम वशिभूतं[z] काश्यप[a] इदमब्रवीत्[b] ।
तथा उत्पादय शीघ्रं समाधिं सुगतात्मज[c] ।
यथा गृहीणां[d] द्रव्याणि[e] न गच्छेयुः[f] परां[g] गतिं ॥७७॥
वरुणं[h] नाम वशिभूतं[i] काश्यपो[j] इदमब्रवीत् ।
अरतिदंशमशका[k] मनुष्याणां निवर्त्तये[l] ॥७८॥ 15
अजकर्णं[m] वशिभूतं[n] काश्यपो[o] इदमब्रवीत् । Sen. 76
क्षुधां[p] पिपासां[q] व्याधिं[r] च मनुष्याणां निवर्तय[s] ॥७९॥
साधूति[t] ते प्रतिश्रुत्वा काश्यपस्य जिनात्मजाः[u] ।
यथाज्ञप्तानि[v] स्थानानि यथोक्तं[w] परिजाग्रिषु[x] ॥८०॥
ततः[y] काश्यपस्थविरः[z] कात्यायनमुवाच[a] स । 20
समुदीरय महात्मनां[b] चरितं[c] धर्मराजिनां[d] ॥८१॥
एवमुक्ते[e] महाप्राज्ञो कात्यायनकुलोद्गतः[f] ।

उवाच चर्या[a] बुद्धानां काश्यपस्यानुपृच्छतः ॥८२॥

श्रुयतां भो जिनसुता[b] बुद्धानां सर्वदर्शिनां[c] ।

चर्या[d] चरणशुद्धानां यथावदनुपूर्वशः[e] ॥८३॥

दश[f] खलु भो जिनपुत्रा[g] बोधिसत्वान भूमयो[h] ।

5 ......................भवन्ति[i] कतमा दश[j] ॥८४॥

दुरारोहेति[k] प्रथमा भूमी[l] समुपदिश्यते[m] ।

द्वितीया वद्धमाना[n] नाम[o] तृतीया पुष्पमण्डिता[p] ॥८५॥

चतूर्थी[q] रुचिरा नाम[r] पंचमी चित्तविस्तरा[s] ।

षष्टी[t] रूपवती नाम[u] सप्तमी दुर्जया[v] स्मृता ॥८६॥

10 अष्टमा जन्मनिदेशो[w][x] नवमी यौवराज्यतो[y] ।

दशमी त्वभिषेकातो[z] इति[a] एता दश भूमयः[b] ॥८७॥

Sen. 77 एवमुक्ते तु गाथाभिः काश्यपोऽब्रवि[c] पण्डितः ।

कात्यायनमतो त्यर्थं[d] वाक्यमप्रतिमं[e] इदं ॥८८॥

भूमीनां[f] परिणामानि यथावदनुकीर्तय[g] ।

15 यथा च ते विवर्तन्ते[h] संसरन्तो महायशा[i] ॥८९॥

यथा[j] चापि संवर्तन्ते सत्त्वसाराः[k] तथा वदे ।

यथैवाध्याशया[l] तेषां भवन्ति[m] तां[n] उदाहरे[o] ॥९०॥

यथा च परिकल्पेन्ति[p] सत्वा सत्वसमन्विता[q] ।

यथा[r] च देन्ति दानानि तत्सर्वमनुकीर्तये[s][t] ॥९१॥

20 तथा[u] च दृष्ट्वा संबुद्धा भाषन्तो[v] च मनोजनं[w] ।

संज्ञोत्पादं[x] तथा[y] ब्रूहि काश्यपो इदमब्रवीत् ॥९२॥

इदं[a] ते वचनं[b] श्रुत्वा वशिभूता[c] उपस्थिता[d]।
गौरवेण महासत्वा संबुद्धानां महात्मनां ॥६३॥

एवमुक्ते कात्यायनो काश्यपमुवाच[e]। न खलु भो जिनपुत्र[f] शक्यं बोधिसत्वानां भूमी:[g] प्रमातुं[h] एत्तककल्पा[i] वा[j] अनन्ता भवन्ति। सर्वं[k] संसारो[l] बोधिसत्वानां खण्ड-[m]संज्ञया भूमिरिति परिकल्पितं तेन भूमिरिति स्मृता। एवमुक्ते आयुष्मानानन्द आयुष्मन्तं[n] कात्यायनमुवाच[o]। यदि भो जिनपुत्र एका भूमि[p] अप्रमेया कथमिदानीं[q] (Sen. 78) परिशेषाणां[r] भूमीनां[s] ग्रहणं भविष्यति[t] इति। एवमुक्ते आयुष्मान्कात्यायनो[u] आयुषमन्त[v]मानन्दं[w] गाथाभिरध्यभाषे।

कल्पो[x] यथा[y] अपरिमितः[z] प्रकाशितः[a]
प्रजानता[b] अवितथवादिना[c] स्वयं।
कल्पेषु[d] च भवति बहूसु[e] देशना[f]
इदं नु भो पुरुषवरस्य शासनं ॥६४॥

भूमिस्तथा[g] अपरिमिता प्रजानता
प्रकाशिता[h] स्वयम[i]निवृत्तबुद्धिना[j]।
प्रवर्तते तथ परिशेषभुमिषु[k]
सामान्यसंकेतानां निरूपणं ॥६५॥

प्रथमायां[l] भो जिनपुत्र भूमौ वर्तमाना[m] बोधिसत्वा[n] पृथग्जना इति प्राप्तफला भवन्ति इति दक्षिणीयाश्च लोकानां विरोचेन्ति[o] भवन्ति चात्र[p]

त्यागेन त्यागसम्पन्ना[q] बोधिसत्वा महायशाः[r]।
लोकां[s] च अभिरोचन्ते[t] चन्द्रभानुरिवांशुमां[u] ॥६६॥

प्रथमायां भूमौ बोधिसत्वानां[v] वतमानानामष्ट[w] समुदाचारा[x] भवन्ति। कतमे अष्ट[y]। तद्यथा[z] त्यागः करुणा[a] अपरिखेदः[b] अमानो सर्वशा[c]स्त्राध्य[d]यिता[e] विक्रमं लोकानुज्ञा धृतिरिति। भवन्ति चात्र[f]

Sen. 79

ते संविभागरुचयः करुणायमाना
दुःखसंहती[a] भगवतां[b] मधुरस्वराणां ।
वचनैः[c] गुणैश्च परितोषमुपेन्ति[d] धीराः
एवं चरन्ति धरणी प्रथमाये[e] सत्वा ॥६७॥
शास्त्राणि[f] यानि प्रसरन्ति[g] असारकानि[h]
एता विचार्य जनता[i]अनुरागबुद्धी[j] ।
निष्क्रम्य[k] तं तृणसमं[l] च विचार्य लोकं[m]
तीव्रां[n] वेदेन्ति[o] वेदना कुशलं चिनोन्ति ॥६८॥

एकेन कारणेन बोधिसत्वा विवर्तन्ति द्वितीयायां भूमौ । कतमेन एकेन[p] । भवेषु आस्वादसंज्ञिनो[q] भवन्ति । द्विहि कारणेहि बोधिसत्वा विवर्तन्ति[r] द्वितीयायां भूमौ । कतमेहि[s] द्विहि । कामगुणेहि[t] अभिलाषिनश्च भवन्ति[u] कुशीदाश्च । पुनस्त्रि[v]भिराकारैर्[w]बोधिसत्वा द्वितीयायां भूमौ विवर्तन्ति । कतमेहि[x] त्रीहि[y] । स्पृहालवश्च[z] भवन्ति[a] उत्त्रास[b]बहुला[c] दुर्बलाध्याशयाश्च । षड्भिराकारैः बोधिसत्वा[d] प्रथमायां भूमौ स्थिता द्वितीयायां[e] भूमौ विवर्तन्ति[f] । कतमैः[g] षड्भिः[h] । न च अनित्यसंज्ञाबहुला विहरन्ति । आघातबहुलाश्च भवन्ति । दृधवैराश्च[i] भवन्ति । स्त्यानमिद्धबहुलाश्च भवन्ति[j] । लोककार्यपरायणाश्च भवन्ति । ये[k] भो जिनपुत्र[l] बोधिसत्वा विवर्तेन्सु[m] विवर्तन्ति[n] Sen. 80 विवर्तिष्यन्ति सर्वे ते इमेहि द्वादश[o]भिराकारै[p][q]र्विवर्तेन्सु विवर्तन्ति[r] विवर्तिष्यन्ति नातो भूय इति ।

एवमुक्ते[s] आयुष्मान्[t]महाकाश्यपः[u] आयुष्मन्तं[v] महाकात्यायनमुवाच[w] । इमे भो जिनपुत्र[x] बोधिसत्वा[y] विवर्तियाश्च[z] अविवर्तियाश्च[a] ये प्रथमं[b] चित्तमुत्पादयन्ति[c] सम्यक्संबुद्धा[d] भवेम[e] इति[f] केत्तकं पुण्यं प्रसवन्त[g] इति । एवमुक्ते[h] आयुष्मान्कात्यायन[i] आयुष्मन्तं[j] महाकाश्यपमुवाच[k] । पश्य[l] भो जिनपुत्र यो[m] दद्या[n] जम्बुद्वीपं सप्तरत्नसंचयं

दशबलानां[a] अतो बहुतरकं[b] पुण्यं प्रसवति बोधाये[c] प्रणिधेन्तो[d]। यश्च भो जिनपुत्र चत्वारो[e] द्वीपां दद्यात्[f] रत्नाचितां[g] दशबलानां[h] अतो बहुतरकं[i] पुण्यं प्रसवति[j] बोधाये[k] प्रणिधेन्तो[l]। यश्च भो जिनपुत्र दद्यात्[m]त्रिसाहस्रां[n] बहुरत्नधरां[o] महागुणधराणां[p] अतो बहुतरकं[q] पुण्यं प्रसवति बोधाय[r] प्रणिधेन्तो[s]। यश्च भो जिनपुत्र गंगानदीवालुकासमा[t] लोकधातुयो अनेकरत्नाचितपूर्णा[u] लोकनाथान[v] पूजयेत्[w] अतो बहुतरकं[x] पुण्यं प्रसवति बोधाये[y] प्रणिधेन्तो। यश्च भो जिनपुत्र सागरवालुकासमा लोकधातुयो[z] बहु[a]विध[b]रत्नाचिता[c] पूर्णा[d] अग्रपुद्गलान[e] पूजया[f] दद्यात्[g] अतो बहुतरकं[h] पुण्यं प्रसवति बोधाये[i] प्रणिधेन्तो[j]।

किं कारणं न[k] ह्येते प्राकृतपुरुषाणां भवन्ति संकल्पाः।
बहुजनहिताय[l] यत्र ते[m] जनयन्ति मनोरथां[n] वीराः ॥९९॥

एवमुक्ते आयुष्मान्महाकाश्यपः[o] आयुष्मन्तं कात्यायनमब्रवीत्। ये पुनर्भो जिनपुत्र बोधिसत्वा अवैवर्तिकतायै[p] परिणामेन्ति किन्तु खलु[q] तेषामुपचित- (Sen. 81) कुशलपुण्यानां[r] प्रथमा प्रणिधिरुत्पद्यति[s] आहोस्विदुपचितकुशलमूलानामिति[t]। एवमुक्ते आयुष्मान्महाकात्यायन आयुष्मन्तं[u] महाकाश्यपं गाथाभिरध्यभाषति[v]।

पूजयन्ति प्रथमं तथागतां[w]
गौरवेण[x] महता महायशा।
नैव[y] ताव[z] जनयन्ति[a] मानसं[b]
अग्रपुद्गलगतं[c] नरोत्तमा[d] ॥१००॥
ते च प्रत्येकबुद्धकोटियो[e]
पूजयन्ति परमार्थपुद्गलां[f]।
नैव[g] ताव[h] जनयन्ति मानसं
सर्वधर्मविदुताय[i] पण्डिताः ॥१०१॥

पूजयन्ति वशिभूतकोटियो[a]
पूर्वमेव[b] वशिपारमिं गता ।
नैव[c] ताव[d] जनयन्ति मानसं
ज्ञानसागरतराय[e] नायकाः ॥१०२॥

5 ते यदा विपुलपुण्यसंचया[f]
भोन्ति भावितशरीरमानसाः
ते समेत्य वररूपधारिणां
बोधये[g] उपजनेन्ति मानसं ॥१०३॥

यं[h] मया कुशलमूलमर्जितं
10 तेन मे भवतु सर्वदर्शिता[i] ।
Sen. 82 मा[j] च मे प्रणिधि[k] तच्चिरंतरो ।
एवमेष प्रणिधिः प्रवर्ततु[l] ॥१०४॥

यश्च[m] मे कुशलमूलसंचयो ।
सो महा भवतु[n] सर्वप्राणिभिः[o] ।
15 यच्च[p] कर्म अशुभं कृतं मया ।
तत्फलं कटुकं निस्तराम्यहमिति[q][r] ॥१०५॥

एवमुक्ते[s] आयुष्मान्महाकाश्यपः[t] आयुष्मन्तं[u] महाकात्यायनमेतदुवाच। कथं[v] च भो जिनपुत्र बोधिसत्वा दृढविक्रमा[w] भवन्ति ये ते अवैवर्तिका भवन्ति। एवमुक्ते आपुष्मान्महाकात्यायन[x] आयुष्मतं काश्यपं गाथाभिरध्यभाषे ।

20 येनान्तरेण परमार्थविदुभवामि[y]
तं अन्तरं यदि अवीचिगतो वसामि ।

तं[a] अभ्युपेमि[b] न च तं प्रतिसंहरामि[c]
सर्वज्ञताये[d] प्रणिधिं[e] इति निश्चयो मे ॥१०६॥
जातीजरामरण[f]शोक[g]उपद्रवांश्च
त्यक्तुं[h] प्रभुः[i] न हि[j] विवर्तयि[k] मानसानि[l] ।
दुःखसंहति जगतो अर्थकरो[m] प्रजानाम्
इत्येतं विक्रमबलं[n] पुरुषर्षभानामिति ॥१०७॥

एवमुक्ते आयुष्मान्महाकाश्यप[o] आयुष्मन्तं महाकात्यायनमब्रवीत् । यं[p] पुनर्भो जिनपुत्र अवैवर्तियो बोधिसत्वो प्रथमं[q] चित्तमुत्पादयति[r] कतमेषां[s] तदा अद्भुतानां[t] धर्माणां प्रादुर्भावो[u] भवति । एवमुक्ते[v] आयुष्मान्महाकात्यायनो[w] आयुष्मन्तं[x] महाकाश्यपं गाथाभिरध्यभाषति[y] । Sen. 83

सनगरनिगमसरिता रणति वसुमती[z] प्रभूतरत्नवती ।
प्रभवति यदा प्रथमतो[a] प्रणिधानं जगत्प्रधानानां[b] ॥१०८॥
दिवसकरसदृशतेजश्चा[c]भासो विकसते दिशः[d] सर्वाः[e] ।
यदा पुरुष[f]सिंहताये[g] आद्यप्रणिधिः[h] समुद्भवति[i] ॥१०९॥
सुरवरगणाश्च[j] उदग्राः परंपरानभि[k] गिरामुदीरेन्ति[l] ।
एष[m] नरसिंहताये[n] प्रणिधेति अनन्तवूदग्रो[o] ॥११०॥
अस्माभिः[p] रक्षितव्य[q] एष[r] हि जगतोर्थं[s] अतितेजस्वी[t] ।
चिनोति शुभं शुभकरो इदमाश्चर्यं[u] तदा भवति ॥१११॥

एवमुक्ते आयुष्मां[v] काश्यप[w] आयुष्मन्तं[x] महाकात्यायनमुवाच । ये इमे भो जिनपुत्र अविवर्तिका[y] बोधिसत्वा[z] केवत्तकानि[a] तैः प्रथमायां भूमौ स्थितैः[b] दुष्कराणि कृतानीति । एवमुक्ते आयुष्मान्महाकात्यायन[c] आयुष्मन्तं महाकाश्यपं श्लोकानुवाच ।

भार्या[a] प्रियां[b] हृदिसुखांश्च[c] सुतां शिरांसि[d]
नेत्राणि[e] चाभरणवाहनविस्तरांश्च ।
दत्त्वा[f] न विश्रममुपेन्त्यथ दैन्यतां[g] वा
सर्वज्ञतामभिमुखाः पुरुषर्षभास्ते ॥११२॥

Sen. 84

आर्धर्षिता[h] च वधबन्धनताडनेभ्यो[i][j]
रौद्रैर्[k] नरैर[l] शुभकर्ममतिप्रवणैः[m][n] ।
तानेव[o] दृष्ट्व परमार्दवमैत्रचित्ता[p]
श्लक्ष्णाभि वाग्भिरनघाः[q] समुदाचरन्ति[r] ॥११३॥

दृष्ट्वा च याचनक मानप्रमादुपेतं[s]
हर्षं परं प्रतिलभन्ति[t] महामनुष्याः[u] ।
दत्त्वा[v] च वर्धितगुणात्तमना[w][x] भवन्ति
पश्चात्तपो[y] न तु तपन्ति तपोनिराशा[z][a] इति[b] ॥११४॥

इति श्रीमहावस्तुअवदाने प्रथमा[c] भूमिः समाप्ता ॥

ततश्च काश्यपस्थविरः[d] महाकात्यायनमब्रवीत् ।
निर्दिष्टा[e] प्रथमा भूमि महासत्व मनोरमा[f] ॥१॥
द्वितीयां संक्रमन्तानां भूमिं[g] नरवरात्मजा ।
किं चित्तं बोधिसत्त्वानां जायते[h] समनन्तरं ॥२॥
के[i] च अध्याशया सन्ति द्वितीयायां जिनात्मज[j] ।
भूमिन्तां बोधिसत्वानां यथाभूतमुदीरयेदिति[k] ॥३॥
ततः कात्यायनः स्थविरः[l] काश्यपमिदमब्रवीत् ।
निर्देशं[m] बोधिसत्वानां[n] कीर्तयिष्ये मनोरमं ॥४॥

द्वितीयां[a] संक्रमन्तानां प्रथमतो[b]ऽनुजायते ।  Sen. 85

अ[c]रती बोधिसत्वानां भवेष्विति न संशय[d] ॥५॥

बोधिसत्वानां[e] भो जिनपुत्र द्वितीयायां[f] भूमौ वर्तमानानां इमे अध्याशया[g] भवन्ति। तद्यथा कल्याणाध्याशया[h] भवन्ति स्निग्धाध्याशयाश्च[i] भवन्ति म[j]धुराध्याशयाश्च भवन्ति तीक्ष्णाध्याशयाश्च भवन्ति विपुलाध्याशयाश्च भवन्ति विचित्राध्याशयाश्च भवन्ति[k] गम्भीराध्याशयाश्च भवन्ति[l] अपर्यादिन्नाध्याशयाश्च भवन्ति अनुपहताध्याशयाश्च भवन्ति असाधारणाध्याशयाश्च भवन्ति उन्नताध्याशयाश्च भवन्ति अकृपणाध्याशयाश्च भयन्ति अनिव[m]र्ताध्याशयाश्च भवन्ति अकृ[n]त्रिमाध्याशयाश्च भवन्ति शुद्धाध्याशयाश्च भवन्ति दृढाध्याशयाश्च भवन्ति स्वभावाध्याशयाश्च भवन्ति तृप्ताध्याशयाश्च भवन्ति[o] पुद्गलाध्याशयाश्च भवन्ति अनन्ताध्याशयाश्च भवन्ति ।  10

कथं भो धुतधर्मधर[p] बोधिसत्वाः[q] कल्याणाध्याशयाः भवन्ति। उच्यते।

बु[r]द्धे धर्मे च संघे[s] च न कांक्षन्ति कथं चन ।

इ[t]ति अध्याशयस्तेषां कल्याण[u] उपदिश्यते[v] ॥६॥

कथं भो धुतधर्मधर बोधिसत्वाः स्निग्धाध्याशया भवन्ति। उच्यते ।

अङ्गेषु छिद्यमानेषु मनस्तेषां न[w] कुप्यते ।  15

एवमध्याश[x]यस्तेषां स्निग्धमृ[y]दूपदिश्यते ॥७॥

कथं च भो धु[z]तधर्मधर बोधिसत्वाः[a] मधुराध्या[b]शया भवन्ति। उच्यते[c]।

अ[d]न्तःकुशलकर्माणि सेवन्ति पुरुषोत्तमाः ।  Sen: 86

एवमध्या[e]शया मधुरा भवन्ति[f] धुतबुद्धीनामिति ॥८॥

कथं भो धुतधर्मधर बोधिसत्वाः[g] तीक्ष्णाध्याशया भ[h]वन्ति। उच्यते[i] ।  20

बु[j]ध्यन्त्याशयसंयुक्ता लोके[k] लोकोत्तरे तथा ।

ए[l]वमध्याशया[m] तीक्ष्णा भवन्ति शुद्ध[n]कर्मणामिति ॥९॥

कथं च भो धुत[a]धर्मधर बोधिसत्वा[b] विपुलाध्याशया भवन्ति । उच्यते[c] ।

[d]सर्वभूतान हितार्थं सं[e]चिनोन्ति शुभं बहुं ।

[f]एवमध्याशया वि[g]पुला भवन्ति[h] परमर्षि[i]णामिति ॥१०॥

कथं[j] भो धुतधर्मधर बोधिसत्वा[k] विचित्राध्याशया भवन्ति । उच्यते[l] ।

5 विचित्राणि[m] मनोज्ञानि देन्ति दानान्यमत्सराः ।

ए[n]वमध्याशया विचित्रा भव[o]न्त्युत्तमदर्शिनामिति ॥११॥

कथं च भो धुतधर्मधर बोधिसत्वा अपर्यादिन्नाध्याशया[p] भवन्ति । उच्यते[q] ।

अपर्यादिन्नचित्तास्ते प्रतिवेधपराक्रमाः ।

एवमध्याशयस्तेषामपर्यादिन्न उच्यते ॥१२॥

10 कथं च भो धुतधर्मधर बोधिसत्वा[r] अनुपहताध्याशया भवन्ति । उच्यते[s] ।

[t]न ते शक्यन्ति सं[u]हर्तुं दुष्टचित्तेन केनचित् ।

एवमध्या[v]शयस्तेषां न जातु उपहन्यते ॥१३॥

Sen. 87 कथं च भो धुतधर्मधर बोधिसत्वा[w] असाधारणाध्याशया भव[x]न्ति । उच्यते ।

[y]यं नान्यः प्रणिधिः[z] क[a]श्चित् एवं [b]सत्वस्योपजायते ।

15 सर्वसत्वसुखार्थाय [c]तदसाधारणं विदुरिति ॥१४॥

कथं च भो धुतधर्मधर बोधिसत्वा[d] उन्नताध्याशया भवन्ति । उच्यते ।

[e]अपरतीर्थिकम[f]त श्रुत्वावज्ञा [g]प्रतिष्ठते ।

उन्नताध्याशयास्तेन नरसिंहा[h] भवन्ति ते ति ॥१५॥

[i]कथं च भो धुतधर्मधर बोधिसत्वा[j] अक्रपणाध्याशया भवन्ति । उच्यते[k] ।

20 न कामगुणभोगार्थं सं[l]चिन्व[m]न्ति शुभं विदूः ।

ततश्चाक्रपणास्तेषां भवन्त्यध्याश[n]या सदेति ॥१६॥

कथं च भो धुतधर्मधर बोधिसत्वा[o] अनिर्व[p]र्तियाध्याशया भवन्ति । उच्यते[q] ।

कामैः[a] ते नावकीर्यन्ते बुद्धत्वे कृतनिश्चयाः[b]।

तेनानिर्वर्तियास्तेषामध्याशया[c] इति स्मृताः ॥१७॥

कथं च भो धुतधर्मधर बोधिसत्वा अकृत्रिमाध्याशया[d] भवन्ति[e]। उच्यते[f]।

वशिप्रत्येकबुद्धानां[g] न स्पृहेन्ति कथं चन।

एवं[h] चाकृत्रिमो[i] भवति[j] तेषामध्याशयः[k] सदेति ॥१८॥ 5

कथं च भो[l] धुतधर्मधर बोधिसत्वाः[m] शुद्धाध्याशया[n] भवन्ति। उच्यते[o]।

लाभसत्कारमुत्सृज्य[p] परमार्थाभिकांक्षिणो[q][r]। Sen. 88

शुद्ध[s] अध्याशयस्तेषामित्येवमुपदिश्यते[t][u][v] ॥१९॥

कथं च भो धुतधर्मधर बोधिसत्वा दृढाध्याशया[w] भवन्ति। उच्यते[x]।

न[y] संहरति[z] वीरियं धर्मे लोकैरभिद्रुता[a][b]। 10

एवमध्याशयास्तेषां[c] दृढा[d] सन्ति महर्षिणामिति ॥२०॥

कथं च भो धुतधर्मधर बोधिसत्वाः[e] स्वभावाध्याशया भवन्ति। उच्यते[f]।

मूर्च्छितास्ते[g] न भुंजन्ति[h] परान्नान्यवस्तु[i]ता।

स्वभावाध्याशयस्तेषामेवमार्यं[j] प्रशंस्यते[k] ति ॥२१॥

कथं च भो धुतधर्मधर बोधिसत्वाः[l] तृप्ताध्याशया भवन्ति। उच्यते[m]। 15

नात्र प्रस्यन्दन्ति[n] कामेषु निष्क्रम्याभिरताः[o] सदा[p]।

एवमध्याशयो[q] तृप्तो[r] बोधिसत्वे[s] प्रशंस्यते[t] ति ॥२२॥

कथं च[u] भो[v] धुतधर्मधर बोधिसत्वाः पुद्गलाध्याशया[w] भवन्ति। उच्यते[x]।

स्वयंभूसर्वदर्शित्वमभिकांक्षन्ति[y][z][a] पण्डिताः[b]।

पुद्गलाध्याशया[c] भवन्ति[d] चैवमप्रतिमा[e] ध्रुवाः[f] ॥२३॥ 20

कथं च भो धुतधर्मधर बोधिसत्वा[g] अनन्ताध्याशया भवन्ति। उच्यते[h]। Sen. 89

न प्रार्थयन्ति[i] महाभोगानदानगुणसंपदा[j]।

अनन्ताध्याशयाश्चैवं[k] भवन्ति पुरुषोत्तमा इति ॥२४॥

सर्वे[a]हि एतेहि विशद्धिः सर्वधर्म[b]विशारदा ।
समन्विता[c] सत्पुरुषा शुभै[d]रध्याशयै[e]र्वरा इति ।।२५।।

इमेहि खलु भो धुतधर्म[f]धर बोधिसत्वा विशद्धिरध्याशयैः समन्वागता भवन्तीति[g] ।

एवमुक्ते[h] आयुष्मान्महाकाश्यप[i] आयुष्मन्तं[j] महाकात्यायनमुवाच । कतिहि भो
5 जिनपुत्र[k] आकारेहि बोधिसत्वा द्वितीयायां[l] भूमौ वतमानास्तृतीयायां भूमौ विवर्तन्ति[m] ।
एवमुक्ते[n] आयुष्मान्महाकात्यायनो[o] आयुष्मन्तं महाकाश्यपमुवाच । अष्टाविशद्धिः[p]
भो धुतधर्मधर कारणेहि बोधिसत्वा द्वितीयायां भूमौ[q] वर्तमाना: तृतीयायां[r] भूमौ
विवर्तन्ते[s] । कतमै[t]रष्टाविशद्धिराकारैः । तद्यथा लाभगुरुकाश्च भवन्ति । सत्कार-
गुरुकाश्च भव[u]न्ति । कीर्ति[v]रलोकपराश्च भवन्ति । शुठाश्च[w] भवन्ति[x] । विषमेण[y] च
10 वृद्धि कल्पयन्ति । गुरुको[z]पनभाषणपराश्च भवन्ति । त्रिषु[a] रतनेषु[b] न च चित्रिकार[c]-
बहुला[d] वितरन्ति । दक्षिणीयेषु बोधिसत्वचरितं[e] च न पर्येषन्ति[f] । यतश्च बोधिसत्वचरित[g]-
भूमिं प्राप्नुवन्ति[h] तां न पूजयन्ति । अतिरेकपूजाये प्राप्यं च भारं[i] न उपादियन्ति[j] ।
अप्राप्यं च भारं उपादियित्वा वितरन्ति । आकीर्णविहारेण[k] च नार्तीयन्ति । माल्य[l]-
Sen. 90 वस्त्रालंकाराभारण[m]नुलेपनधराश्च[n] भवन्ति । अल्पगुणपरितुष्टाश्च भवन्ति[o] । अभीक्ष्णं
15 लोकरमणीयाभिरताश्च भवन्ति । न च सर्वधातू[p] अनित्या संकल्पयन्ति । स्वेन च
वर्णरूपेण परमभिमन्यन्ति । न च विपरीतदर्शनत्यागं[q] करोन्ति । न[r] च यथोद्दिष्टं[s]
पदव्यंजनं परिपूर्णं करोन्ति । देशनामत्सरिणश्च भवन्ति । अपात्रदर्शिनश्च[t] भवन्ति ।
पात्रे च न प्रतिपादयन्ति । कठिन[u]सन्तानाश्च[v] भवन्ति । असमीक्ष[w]कारिणश्च भवन्ति ।
ये[x] केचि[y] भो धुतधर्मधर बोधिसत्वा द्वितीयायां भूमौ वर्तमाना[z] तृतीयायां भूमौ
20 विवर्तन्ति[a] सर्वे[b] ते इमेहि[c]रष्टाविशद्धिराकारै[d]र्विवर्तन्ति ।

तत्रे[e]दमिति उच्यते[f] ।

इत्येषा[a] द्वितीया[b] भूमि[c] बोधिसत्वान[d]मुच्यते[e] ।
नानाकुशल[f]कोशानां लोकार्थसुखचारिणां ॥२६॥
ये[g] हि दोषेहि संयुक्ता विवर्तन्ति तथाविधा[h] ।
ये[i] चैवं परिवर्तन्ता[j] न[k] विवर्तन्ति[l] पण्डिताः ॥२७॥
दुरारोहां[m] धुरधीराः[n] प्रतिपद्यन्ति शूरतां[o] । 5
तां[p] च लोकानुकम्पार्थ[q] बहु[r]दुःखा[s] चरन्ति ते ॥२८॥
ते ते देवमनुष्याणां पूज्याः सर्वे[t] तथागताः ।
तथा हि विविधं दुःखं उपेन्ति ज्ञानपूर्वकं ॥२९॥
नानाधातुमिमं लोकमनुवर्तन्ति[u] पण्डिताः ।
तेन तेषां गता कीर्ति लोके[v] समरुमानुषे इति ॥३०॥ 10

इति श्रीमहावस्तुअवदाने द्वितीयभूमिः समाप्ता ॥

एवमुक्ते[w] आयुष्मान्महाकाश्यपः[x] आयुष्मन्तां[y] महाकात्यायन[z]मुवाच । द्वितीया Sen. 91 भूमितो[a] तृतीयां भूमि[b] संक्रमन्तानां बोधिसत्वानां[c] नरवरात्मज कीदृशं जायते[d] चित्तमिति ।

ततः कात्यायन[e]स्थविरः काश्यपमिदमब्रवीत् ।
श्रुयतां बोधिसत्वानां सन्धिचित्तमनुत्तमं ॥१॥ 15
त्यागे[f] प्रवर्तते चित्तं बोधिसत्वान[g]मावुसो ।
तृतीयां[h] संक्रमन्तानां द्वितीयातो जिनात्मज[i] ॥२॥
सुखेन्ति सर्वसत्वानां[j] संस्थितानि[k] नरेश्वराः[l] ।
तं च नात्मसुखार्थाय नापि बोधेः कथं चन ॥३॥
क्रिणन्ति[m] पुत्रदारेण एकगाथां सुभाषितां । 20
... ... ... ... ... ... ... ॥४॥
साधुना बोधिसत्वेन राज्यं कारयता[n] पुरा[o] ।
... ... ... ... ... ... ... ॥५॥

वनगहनं[a] बलगहनं[b] गिरिगहनानि[c] त्यागग्रहणानि[d] ।

विषमाप्रतिसन्निषण्णवनानि[e][f] तु मनुष्यगहनानि[g] ॥६॥

तृणगुल्मकण्ठकलताकुलानि वृक्षग्रहणा[h] गहनानि ।

शठनिकृतिपैशुन्यानि[i][j] तु मनुष्यगहनानि[k] ॥७॥

5 ... ... ... ... ... ... ... ।

... ... ...भण्डिना[l] ब्रूहि ब्राह्मण ॥८॥

Sen. 92 ......बोधिसत्वेन एका गाथा सुभाषिता[m] ।

बोधिसत्वेन सा क्रीता[n] परमार्थाभिकांक्षिणा ॥९॥

अहितुण्डिकातो[o] हस्तातो यत्नात्क्रीतं[p] सुभाषितं ।

10 यावज्जीवन्ते[q] अमुष्यां[r] पेलायां दुष्कृतं कृतं ॥१०॥

ब्राह्मणो[s] अभ्युपगम्य ऋषिदेवं[t] नरेश्वरं ।

इदमुवाच[u] प्रीतात्मा[v] अस्ति एषा[w] सुभाषिता ॥११॥

तस्य मूल्यं तव[x] शीर्षं त्यक्त्वा[y] शीर्षमित्यब्रवीत्[z] ।

ब्रूहि[a] ब्राह्मण शीघ्रं मे गाथामेतां सुभाषितां ॥१२॥

15 यदि[b] अपि किञ्चिदशुभं[c] समुदाचरन्ति

संबोधिसत्वचरितान्यभिकांक्षमाणाः[d][e] ।

तैलप्रदीप इव[f] सूर्यमरीचिच्छन्नः[g]

न[h] भ्राजते विपुलपुण्यबलाभिभूतं[i][j] ॥१३॥

सुरूपं[k] नाम भूमिपतिं[l] राक्षसो इदमब्रवीत् ।

20 अस्ति सुभाषिता[m] गाथा क्रेया यदि क्रीणासि[n] तां ॥१४॥

तस्या[o] मूल्यं कुमारं च देवीं[p] त्वां चैव भक्षयेत् ।

गृह्यतां यदि ते कृत्यं गाथा[q] हि धर्मसंहिता[r] ॥१५॥

सोऽब्रवीद्राजा[a] सुरूपो निःसंगो धर्मगौरवात्[b] ।
गृह्यतां दीयतां गाथा युक्तं[c] भवतु मा चिरं ॥१६॥

तत्रेमां गाथां सुभाषितां[d] राक्षसो अब्रवीत्[e] । Sen. 93

परिदेवित[f]कंपनेषु[g] अनिष्टसंयोग[h]प्रियहीनेषु[i] ।
उषितं[j] नरकेषु वरं[k] न च कुपुरुषसंश्रयनिकेतः[l] ॥१७॥ 5

अमात्यं[m] संजयं नाम पिशाचो इदमब्रवीत् ।
स्वकं मे हृदयं देहि शृणु गाथां सुभाषितां[n] ॥१८॥

स्वकन्ते हृदयं देमि[o] ब्रूहि गाथां सुभाषितां ।
पिशाचमब्रवीद्वीरो संजयो विगतव्यथो[p] ॥१९॥

तत्रेमां गाथां सुभाषितां[q] पिशाचोऽब्रवीत् । 10

न[r] जातु तृणकाष्ठेहि[s] ज्वलनः[t] शाम्यते ज्वलन् ।
न जातु उपभोगेभ्यः[u] तृष्णा कामेषु[v] शाम्यति ॥२०॥

श्रेष्ठि[w] वसुन्धरं[x] नाम[y] दरिद्रो इदमब्रवीत् ।
इयं सुभाषिता[z] गाथा सर्वस्वेन[a] तु दीयते[b] ॥२१॥

बोधिसत्वोऽब्रवीत् । 15

सर्वस्वं[c] ददामि[d] एषां ब्रूहि गाथां[e] सुभषितां ।
एतं[f] सन्तः[g] प्रशंसन्ति[h] धर्मेषु यत्सुभाषितं[i] ॥२२॥

तत्रेमां[j] गाथां सुभाषितां[k] दरिद्रोऽब्रवीत् ।

आकीर्णान्यपि[l] शून्यानि बालिशा[m] यत्र जन्तवः[n] ।
शून्यान्याकीर्णा[o] च सन्ति एकेनापि प्रजानता ॥२३॥ 20 Sen. 94

सुरूपं[p] नाम राजानं पुरुषो एतदब्रवीत् ।
जम्बुद्वीपेन[q] मूल्येन[r] शक्यं श्रोतुं सुभाषितं ॥२४॥

बोधिसत्व उवाच ।

जम्बुद्वीपं च ते देमि सर्वं यत्किंचि इच्छसि ।

शीघ्रं सुभाषितं[a] ब्रूहि ब्रूहि सत्यं यदिच्छसि ॥२५॥

तत्रेमां[b] गाथां सुभाषितां पुरुषोऽब्रवीत्[c] ।

5 अहंकारममकारा[d] नाना यत्र समुपस्थिता ।

मानं यत्र निरोधाय उत्पद्यन्ते[e] तथागताः ॥२६॥

सत्वरं नाम[f] हरिणं लुब्धक[g] इदमब्रवीत् ।

इयं सुभाषिता गाथा[h] देहि[i] मान्सं श्रृणोहि[j] तां ॥२७॥

यदि विनाशधर्मेण[k] मान्सेनाहं सुभाषितं ।

10 श्रृणोमि देमि ते[l] मान्सं क्षिप्रं ब्रूहि सुभाषितं[m] ॥२८॥

तत्रेमां[n] सुभाषितां गाथां लुब्धकोऽब्रवीत्[o] ।

सतां[p] पादरजः श्रेयो न सुवर्णमयो गिरिः[q] ।

सो[r] पान्सु शोकहाराय[s] सो गिरि[t] शोकवर्धन[u] इति ॥२९॥

Sen. 95 राजानं[v] नागभुजं नाम तद्दासो इदमब्रवीत् ।

15 चातुर्द्वीपेन[w] राज्येन शक्यं[x] प्राप्तुं[y] सुभाषितं[z] ॥३०॥

बोधिसत्वोऽब्रवीत्[a] ।

चातुर्द्वीपं च ते राज्यं देमि[b] क्षिप्रमुदीरय[c] ।

एतां सुभाषितां वाचां मा विलम्ब ब्रवीहि[d] मे ति ॥३१॥

तत्र[e] इमं श्लोकं सुभाषितं तद्दासोऽब्रवीत्[f] ।

20 लोमोत्पाटनतुल्यमाहु[g] विदुषः[h] प्राज्ञस्य[i] या विक्रिया[j]

तस्मा ज्ञानबलं समेतिय पुनर्दोषां समूलां नया ।

छित्वा दोषविवर्जितेन[k] मनसा संभाति संघः[l] शुचिः

भाति लोकगुरुः[m] सतामनुगतोऽनिक्षिप्तभारो[n] शुचिरिति[o] ॥३२॥

एवं सुभाषितार्थाय प्रपाते[a] पतितः[b] पुनः ।
भूयः सुभाषितार्थाय[c] पोतस्त्यक्तो[d] महार्णवे ॥३३॥
भूयो[e] अक्षीणि त्यक्तानि श्रुत्वा[f] गाथां सुभाषितां[g] ।
अग्निस्कन्धे[h] पुनः पतितः[i] श्रुत्वा गाथां सुभाषितां[j] ॥३४॥
बहूनि एवमादीनि दुष्कराणि[k] जिनर्षभाः[l] ।
सुभाषितानामर्थाय[m] प्रतिपद्यन्ते[n] महायशां[o] ॥३५॥

एवमुक्ते[p] आयुष्मान्महाकाश्यपः[q] आयुष्मन्तं महाकात्यायनमुवाच[r] । ये पुनर्भो[s] (Sen. 96) जिनपुत्र बोधिसत्वाः[t] तृतीयायां भूमौ वर्तन्ते[u] कथं चतुर्थायां भूमौ[v] विवर्तन्ति इति । एवमुक्ते आयुष्मान्महाकात्यायन आयुष्मन्तं महाकाश्यपमुवाच । चतुर्दशभिर्भो[w] धुतधर्मधर[x] आकारैर्बोधिसत्वाः[y] तृतीयायां भूमौ वर्तमानाः[z] चतुर्थायां भूमौ विवर्तन्ते । कतमेहि[a] चतुर्दशेहि । अक्षवंकद्यूतक्रीडानुयोगमनुयुक्ताश्च[b] भवन्ति[c] । अत्यभीक्ष्णं[d] विवेकं सेवन्ति[e] । राज्यं च कारापयमाणा[f] लोभेनाभिभूता[g] अत्रान्तरविजितवासिनां[h] सर्वस्वहारिणो[i] भवन्ति । अपराधं[j] च अननुयुज्या वधमाक्षेपयन्ति[k] । वध्यांश्च[l] न संगोपायन्ति । पुरुषांश्च[m] वध्रयन्ति[n] । विप्रतिपन्नाश्च भवन्ति । न च[o] भोगयात्रायां[p] संविभजन्ति[q] विद्यमानेषु[r] विभवेषु[s] । प्रव्रजित्वा[t] च सम्यक्संबुद्धानां भाषतां[u] वा[v] बाहुश्रुत्यं[w] न पर्याप्नुवन्ति । पुरा प्रणिधित्वा च[x] बाहुश्रुत्यं न देशयन्ति[y] । आमिषप्रतिबद्धांश्च[z] सेवन्ति[a] न धर्मप्रतिबद्धा । न[b] चाभीक्ष्णं बुद्धवर्णं[c] भाषन्ति[d] । सम्यक्संबुद्धांश्च लोकसमताये[e] देशेन्ति । न च[f] सम्यक्संबुद्धां लोकोत्तरा इति बोधयन्ति । इमेहि[g] भो धुतधर्मधर चतुर्दशभिराकारैः[h] बोधिसत्वाः । तृतीयायां भूमौ[i] वर्तमानाश्चतुर्थायां भूमौ विवर्तन्ति । ये[j] हि केचिद्भो[k] धुतधर्मधर बोधिसत्वाः तृतीयायां भूमौ वर्तमानाः[l] चतुर्थायां भूमौ[m] विवर्तेन्सुः विवर्तन्ति[n] विवर्तिष्यन्ति वा सर्वे ते इमेहि चतुर्दशेहिराकारैर्नातो[o] भूय इति ।

Sen. 97 एवमुक्ते[a] आयुष्मान्महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच। ये पुनर्भो[b] जिनपुत्र बोधिसत्वा अवैवर्तिया[c] प्रथमं[d] चित्तमुत्पादयन्ति बोधाय केवरूपेण सुखेन[e] युज्यन्ति[f] केवत्तकाश्च[g] सत्वा सुख[h]सातसं[i]गता भवन्तीति। एवमुक्ते आयुष्मान्महाकात्यायन आयुष्मन्तं महाकाश्यपं गाथाभिरध्यभाषि।

सर्वसत्व सुखसातसंगता
संभवन्ति यदचिन्त्यमद्भुतं[j]।
[k]जायते' यद मनो महर्षिणां
बोधि[l]मार्गपरिभावनात्मकं[m] ॥३६॥
सप्त[n]रात्रमितिनि[o]श्चयाश्च ये
[p]येऽपि ते निरयदारुणालया।
ये च प्रेत[q]भवनेषु प्राणिनो
ते भवन्ति[r] सुखिताश्च नाम ॥३७॥
सप्तरात्रं न च्यवन्ति प्राणिनो
बोधिसत्वकुशलानुकंपया।
[s]क्षुभ्यते च वसुधा स[t]समुद्रा
स[u]प्रभो भ्रमति मेरुमस्तकः[v] ॥३८॥
[w]भूमि सन्[x]धिषु अयं प्रवर्तते
नि[y]श्चला नभसि नात्र संशयः।
तेषु सर्व[z]शुभकर्मराशिनां
तेजसा भ्रमति सर्वसंततं[a] ॥३९॥

Sen. 98 अथ खलु नामतिदेवो[b] नाम त्रायस्त्रिंशको बोधिसत्वो भूतो एकांसमुत्तरासङ्गं[c] कृत्वा येन भगवन्तो[d] दृष्टो तेनांजलिं प्रणमय्य[e] भगवन्तमभिस्तुतः[f] संमुखं[g] वशीभूतगणस्य[h] इमैः[i] श्लोकैः[j]।

यस्य[a] रूपं हेमाभासं[b] तरुणरविअविहतवपुं विराजिततेजसा
द्वात्रिंशद्भिः[c] पूर्णैः पूर्णं[d] कुशलचरपुरुषकथितैः सुलक्षणलक्षणैः[e] ।
शीलेनाग्र्यं[f] संपूर्णाभिं[g] धरणिनगगुरुतरबलं[h] बलोत्तमधारिणं[i]
ते वन्दे शान्तं[j] ते दान्तं···स्मृतिविनयकुशलं[k] सुरासुरसत्कृतं ॥४०॥
दीर्घं[l] कालं चित्राचारो कुशल[m] अतिविपुलफलदो[n] भवक्षयकांक्षया[o] 5
श्लाघ्यैर्नानैः[p] मैत्रीपूर्वैर्[q] बहुविविधजनितकुशलैः[r][s] शमाभिमुखो मुनिः ।
त्यक्त्वावासं[t] नित्यं विद्वानसुरसुरमहितं[u] सुखितं सत्वप्रतिबोधने
इक्ष्वाकूनां[v] वंशोद्भूतो धरणितलमवतरि[w][x] यशःस्थितो अचलाधृतिः[y] ॥४१॥
मायाया[z] देव्याः कुक्षिस्मि प्रविशिषु स कुमुदसदृशो वरो[a] गजरूपवां[b]
एवं[c]···लोकालोकः[d] तुषितवरभवननिलयं विहाय इहागतः[e] । 10
सत्वां[f] मत्तां[g] अन्धां दृष्ट्वा विमतिपथविषमपतितां[h] समुद्धरितुं प्रजाः
तस्मिं[i] काले रत्नाकीर्णा[j] विविधनिधिनिचयभरिता चचाल[k] वसुन्धरा[l] Sen. 99
तं शाक्येन्द्रं[m] चारित्राढ्यं[n] स्मृतिनिभृतमधिगुणचितं अवन्दि महामुनिं[o] ॥४२॥
प्रासादाग्रे देवी[p] माया सुरपतिप्रवरभवने[q] वा सुखैः प्रविचार्यंते
नृत्यैर्[r]गीतैर्[s]लास्यैर्वाद्यैः श्रवणहृदिनयनसुभगैः[t] सुरेष्विव देवता । 15
सा[u] देवी राजानं खिन्नं वदति वनवरं महिपते व्रजेयं[v] यदिच्छसि
लुम्बोद्यानं पुष्पाकीर्णं[w] मधुमधुरपरभृतरुतं[x] मनोहृदिनन्दनं ॥४३॥
गत्वा[y] तस्मि स्त्रीभिः सार्धं प्रविचरति मुदितसुखिता[z] वने वनलोलया[a]
सा चोद्यानं[b] पर्यण्वन्ती तरुणलतकिशलयधरां[c] ददर्शथ[d][e] लुम्बिनीं[f] ।
तस्याः[g] शाखां…गृह्यान[h] परमरतिसुखमुदिता[i] सलीलअवस्थिता[j][k] 20
सा तत्र शाखां[l] रक्षन्ती[m] जनयि जिनमजितमनसं महामुनिमुत्तमं[n] ॥४४॥
शीतोष्णे[o] च द्वे वारिधारे[p] प्रवरकुसुमभरिते जिनं यत्र[q] स्नपयिंसु तं

देवा जायन्तं जातमात्रं[a] नृपतिं सुरभुवनमहितं[b] त्रिलोकमहेश्वर[c] ।
सानुक्रोशं[d] लोकातीतं शरणमिह दिवि च भुवि चा जरामरणान्तकं[e]
अप्राप्तं[f] तं भूमौ धीरं कमलदलसदृशनयनं[g] सुरासुरनन्दनं ॥४५॥
हृष्टा[h] तुष्टा देवा[i] सर्वे त्रिदशप्रभृतिभवनच्युता प्रतिस्थिहिपुर्वनं
5 Sen. 100 इक्ष्वाकूनां[j] वंशोद्भूतो धरणितलमवतरि[k] यशस्थितो[l] अचलाधृति[m] ।
विक्रमांश्च[n] सप्त पूर्णं मृगवृषराजामतिरिव[o] रसमानीकं[p]
ज्येष्ठो[q] श्रेष्ठो लोकाग्रोऽहं[r] न च मम पुन[s] जरमरणा हतो भवुपद्रवः[t] ॥४६॥
छत्रं[u] दैवं रत्नाकीर्णं[v] स्फटिकरुचिरकुसुमचित्रं सिताभ्रसितप्रभं
हस्ता मुक्तं[w] स्थाये[x] सामं समभिच्छदि[y] नृपतितनयं विहायसे उत्थितं ।
10 वालैश्चोग्रैः[z] शंखाजाभैर्मृ[a]दुभिरुपचितमनुपमं दिवौकसनिर्मितं[b]
उच्चैर्दण्डं[c] मुक्ताश्वेतं भ्रमति मणिकनकविकृतं[d] सुचामरवीजनं[e][f] ॥४७॥
दुन्दुभ्यो[g] चा मेघोन्नादा[h] पवनखगगगनपरिगा[i] नदन्ति[j] महत्स्वराः[k]
पुष्पौघाश्चा[l] दिव्या सृष्टा[m] मरुभि जिनवलवरमुखे[n] सचन्दनचूर्णिताः[o] ।
संतोषातीशययुक्तेभिः[p] सुरमरू[q] जयति[r] सुखकरो रसे[s] रवणीशतैः[t]
15 क्षुब्धासन्ना[u] नानारत्ना उदधिभुवि[v] तलसलिलयोस्तथागततेजसा[w] इति ॥४८॥

इति श्रीमहावस्तुअवदाने तृतीया भूमिः[x] समाप्ता[y] ॥

Sen. 101 एवमुक्ते आयुष्मान्[z]महाकाश्यपो आयुष्मन्तं महाकात्यायनमुवाच । ये[a] पुनर्भो जिनपुत्र बोधिसत्वा अविवर्तिकताये[b][c] सन्स्थिहन्ति[d] केवत्तकानि[e] कर्माणि अस्थानताये[f] समुपचरन्ति इति ।

20 ततः कात्यायनस्थविरो[g][h] जिनशास्त्रविशारदः[i] ।
काश्यपं[j] धुतधर्माणं[k][l] गाथाभिरध्यभाषत[m] ॥१॥

यानि कर्माणि सेवन्ते बोधिस[a]त्वा विजान[b]थ ।
अस्थानताये न सेवन्ते यानि तानि विजानथ ॥२॥
मातरं पितरं चै[c]वाप्यरहन्तं तथैव च ।
जीविता न विरो[d]पेन्ति बोधिसत्वा महायशाः ॥३॥
[e]संघं च ते न [f]भिन्दन्ति न च ते स्तूपभेदका । 5
न ते तथा[g]गते चि[h]त्तं दूषयन्ति कथं चन ॥४॥
न ते पापानि सेवन्ति विपरी[i]ताये [j]पृष्टिये ।
[k]अल्पं कृतं न नाशेन्ति किं मम पु[l]नर्यं बहुं ॥५॥
संसरन्ता च संसारे न जातु [m]दृष्टिपूर्वके ।
[n]प्र[o]तिरज्यन्ति ध[p]र्मार्थे [q]पुण्ये वा ज्ञानपूर्व[r]के ॥६॥ 10
[s]यस्य वृक्षस्य छायायां सीदन्ति च शयन्ति च ।
न [t]तस्य प[u]त्रहिंसा च न [v]घातेन्ति च रोषिताः ॥७॥
[w]दश कर्मपथां कुशलां सेवन्ति पुरुषो[x]त्तमा ।
न च [y]मन्त्रं प्रयोजेन्ति परस्य देह[z]घातकं ॥८॥ Sen. 102
कर्मसं[a]निश्रि[b]ताः सन्तः कौ[c]तूहल[d]विनिःश्रिताः । 15
आपत्सु न वि[e]षीदन्ति न च मोदन्ति वृद्धिषु ॥९॥
[f]काय[g]कर्म वचीकर्म म[h]नोकर्म तथैव [i]च ।
अध्याशयाश्च परिशुद्धाः दानपारमिता च या ॥१०॥
[j]अष्ट[k]मीप्रभृतिं [l]भूमीं गता [m]ते अनिर्वर्तिया ।
एकांशेन [n]शुभं [o]कर्म सेवन्ते लोकपूजिताः ॥११॥ 20
[p]प्रथमां च उपादाय [q]भूमीं यावच्च सप्तमी ।
[r]व्यामिश्रं कर्म सेवन्ते भूमीष्वेतासु जनोत्तमा ॥१२॥

एवमादीनि[a] कर्माणि[b] सेवमाना महानराः[c] ।
लोकानामनुकंपार्थं[d] पूरेन्ति[e] भूमयो दशेति[f] ॥१३॥

एवमुक्ते[g] आयुष्मां महाकाश्यपो[h] आयुष्मन्तं महाकात्यायनमुवाच । ये[i] पुनः[j] भो जिनपुत्र बोधिसत्वा[k] अवैवर्तिका सामन्ते[l] पृथग्जनताये अपायां[m] यान्ति[n] आहोस्विदं नेति । सामन्ते[o] पृथग्जनताये अवरावराश्च[p] गतियो गच्छन्ति[q] आहोस्विदं[r] नेति । एवमुक्ते[s] आयुष्मां महाकात्यायन आयुष्मन्तं[t] महाकाश्यपमुवाच[u] । ये इमे भो धुतधर्मधर बोधिसत्वा अवैवर्तिकधर्मा[v] ते[w] सप्तसु[x] भूमिषु[y] न[z] कथंचित्किंचित्कदाचित् यदृच्छया (Sen. 103) निरयं[a] पि गच्छन्ति[b] तिर्यग्योनिं[c] वा गच्छन्ति दरिद्रा[d] वा भवन्ति दुर्बला वा । अथ खलु[e] ब्राह्मणा भवन्ति[f] प्रत्येकब्राह्मणा वा इन्द्राश्च उपेन्द्राश्च यक्षाधिपतयश्च यक्षाश्च[g] नागाश्च नागराजानश्च गन्धर्वा[h] गन्धर्वाधिपतयश्च[i][j] चक्रवर्तिनश्च[k] प्रादेश्याश्च[l] राजानः अग्रामात्याश्च श्रेष्ठिनश्च[m] जनपदप्रधानाश्च[n] राजपुत्राश्च श्रेष्ठिपुत्राश्च[o] अग्रमहिषीपुत्राश्च नायकाश्च सर्वशौर्यवीर्याश्च[p] भवन्ति बलसम्पन्नाः च भवन्ति उल्लोकनीयाश्चावलोकनीया[q]श्चाभिवन्दनीयाश्चादेयवाक्याश्च[r][s] बहुजनप्रियाश्च बहुजनकान्ताश्च बहुजनमनापाश्च संकीर्तनीयाश्च प्रह्लादनीयाश्च महाधनाश्च महाविभवाश्च महापरिवाराश्च महोत्साहा[t][u] महातेजाश्च भवन्ति । यदि केचित्कथंचिदार्यापवादहेतोः[v][w] सप्तसु भूमिषु वर्तमाना अवीचिं[x] महानिरयं[y] गच्छन्ति अथ खलु प्रत्येकनिरयं गच्छन्ति[z] । प्रेतेषु[a] अत्यन्तकायेषु नोपपद्यन्ति[b] । असुरेषु[c] नोपपद्यन्ति । क्षुद्रतिर्यग्योनिं न गच्छन्ति । उत्तरकुरुषु[d][e] नोपपद्यन्ति[f] । स्त्रीत्वं[g] न गच्छन्ति । विपण्डकत्वं[h] न गच्छन्ति । अथ[i] खलु सर्वासु दशभूमिषु पुरुषा[j] भवन्ति सर्वांगप्रत्यंगोपेताः[k] अविकलेन्द्रिया[l] । यश्च बोधिसत्वो[m] बोधिसत्वं[n] जीवताद्व्यपरोपयति सम्यक्संबुद्धश्रावकं[o] वा श्रोतापन्नं[p] वा ये वा सत्वा प्रत्येकबुद्धत्वाय (Sen. 104) विनिष्ठास्तथारूपं[q] पुद्गलं[r] जीविताद्व्यपरोपयित्वा[s] निरयं[t] गच्छति । यं बोधिसत्वाः सप्तसु भूमिषु प्राणातिपातं वा करोन्ति[u] अदत्तं वा हरन्ति सर्वपरिपूर्णं[v] वा अकुशलकर्मं[w] न समर्थं

बोधिसत्वं निरयं[a] नयितुं । यानि च कर्माणि बोधिसत्वैः पुरतो प्रणिधानस्योपचितानि[b] अकुशलानि तानि च प्रथमचित्तोत्पादाय[c] आवृतानि तिष्ठन्ति यथा[d] महता शैलेन मृगसंघो[e] । असंप्राप्तस्य प्रणिधिचित्तं[f] द्वितोयतृतीयचतुर्थपंचमषष्ठसप्तमासु[g][h] जातिषु विपच्यति[i] अन्तशो[j] शीर्षपरितापेनापि[k] ।

एवमुक्ते[l] आयुष्मान्महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच । ये[m] पुनर्भो 5 जिनपुत्र बोधिसत्वा अवैवर्तिका[n] सम्यक्संबुद्धानाराधयित्वा[o] अगारस्था[p] अनगारियं प्रव्रजन्ति ते तथागताः केवरूपेण ओवादेन[q] ओवदन्तीति ।

ततः कात्यायनस्थविरः[r][s] काश्यपं[t] इदमब्रवीत् ।
दृष्टान्तेहि[u] विविक्ताभिः कथाभिरनुपूर्वशः ॥१४॥

बोधिसत्वचरितं[v] महापकं 10
जातकापरमतेषु[w] कोविदा ।
देशयन्ति[x] दमदानसंवरं[y]
बोधिसत्वपरिषाय ईश्वरा ॥१५॥

यो महाजनहिताय सेवते
कर्मप्रतिसमं[z] नरोत्तमः[a] । 15
इत्येव[b] तं च मतिमां तथागतो
बोधिसत्वपरिषाय भाषति ॥१६॥

सो[c] प्रभुः भगवतो[d] प्रवुच्यति
ज्ञानपूर्वकमुपेति दुष्करं ।
तस्य लोकि सदृशो[e] सुदुर्लभो[f] 20 Sen. 105
बोधिसत्व इति[g] शासने जिनः ॥१७॥

एवमादिकं[a] भो धुतधर्मधर[b] सम्यक्संबुद्धा बोधिसत्वपर्षायं धर्मं[c] देशयन्तीति ।

एवमुक्ते[d] आयुष्मान्महाकाश्यप आयुष्मन्तं महाकात्यायनमिदमुवाच । यानीमानि भो[e] जिनपुत्र जातकानि जिनभाषितानि इमानि कुतःप्रभृतिकानि विज्ञेयानीति । एवमुक्ते[f] आयुष्मान्[g]महाकात्यायन आयुष्मन्तं[h] महाकाश्यपमिदमुवाच[i] । यानीमानि भो

5 धुतधर्मधर जातकानि जिनभाषितानि इमां अष्टमां भूमीं[j] प्रपद्यन्तीति ।

एवमुक्ते[k] आयुष्मान्महाकाश्यप[l] आयुष्मन्तं[m] महाकात्यायनमिदमुवाच[n] । कुतः प्रभृति[o] भो जिनपुत्र बोधिसत्वाः सर्वस्वपरित्यागांश्च[p] परित्यजन्ति[q] दुष्करपरित्यागांश्चेति । एवमुक्ते महाकात्यायन आयुष्मन्तं महाकाश्यपमुवाच । अष्टमां भूमिं[r] प्रभृति[s] भो धुतधर्मधर बोधिसत्वाः सर्वस्वपरित्यागांश्च परित्यजन्ति[t] दुष्करपरित्यागांश्च[u] कुर्वन्ति[v]

10 इति । अष्टमां[w] भूमिं[x] प्रभृति[y] भो धुतधर्मधर बोधिसत्वाः[z] सम्यक्संबुद्धपूजया[a] पूजयितव्या इति । तत्रे[b]दमुच्यते[c] ।

अष्टमां प्रभृति[d] भूमिं बोधिसत्वा जिनात्मज ।
सम्यक्संबुद्धा[e] इति[f] द्रष्टव्या[g] अतः प्रभृत्यनिर्वर्तियाः[h] ॥१८॥
अतः[i] प्रभृति ध्यानानि गम्भीराणि[j] लभन्ति ते ।
15 Sen. 106 अतः प्रभृति उत्तप्तं[k] ज्ञानं तेषां प्रवर्तते ॥१९॥
अतः[l] प्रभृति भाषन्ति वाचां ज्ञानपुरोगमां ।
अतः प्रभृति कुच्छत्ता[m] आयुं[n] मुञ्चन्ति पण्डिताः ॥२०॥
अतः प्रभृति या[o] शुद्धा तां जातिमनु[p]यान्ति[q] ते ।
अतः प्रभृति[r] यं शुद्धं तद्रूपमनुभवन्ति[s] ते ॥२१॥
20 अतः[t] प्रभृति यं लिङ्गं इच्छन्ति भवन्ति तथा ।
अतः प्रभृति यं देवं[u] इच्छन्ति भवन्ति तथा ॥२२॥

अतः प्रभृति तीर्थिका[a] वा भवन्ति[b] भवसूदनाः ।
अतः प्रभृति कुच्छन्ति कामां[c] शंसन्ति निर्वृतिं ॥२३॥
अतः[d] प्रभृति भूयिष्ठा[e] भवन्ति वदतां[f] वराः ।
शिष्या[g] देवातिदेवानां संबुद्धानां यशस्विनां ॥२४॥
अध्येष्यन्ति[h] ततः परेत्य बुद्धै[i] धर्मप्रकाशनैः ।
धर्मं[j] देशयथ[k] प्राज्ञा प्रतिगृह्णथ[l] ऋषिध्वजं ॥२५॥
अतः प्रभृति विनयन्ति अर्हत्वे[m] सुवहुं जनं ।
अतः प्रभृति विनयन्ति[n] शैक्षभूमौ[o] बहुं[p] जनं ॥२६॥
अतः प्रभृति अनुबद्धा[q] देवा यक्षा सगुह्यकाः[r] ।
बोधिसत्वं महासत्वं यावत्प्राप्ता स्वयंभुता ॥२७॥
अतः[s] प्रभृति तद्रूपं[t] अग्रचं[u] सदेवके लोके[v] ।
अतः प्रभृति वर्णो[w] पि तेजोकीर्तियशोबलं[x] ।
लोकेन विषमं[y] भवति बोधिसत्वानमुत्तमं[z] ॥२८॥ Sen. 107
अनुत्पादाच्च बुद्धानां पंचाभिज्ञा भवन्ति ते ।
नष्क्रम्य[a]मनु[b]वर्णयन्ति कामेषु दोपदर्शिनः[c] ॥२९॥
अतः प्रभृति देवाश्च[d] असुरा[e] ब्रह्मणा सह ।
गुणै[f] तेषां अनुरज्यन्ता[g] आगच्छन्ति कृताञ्जली[h] ॥३०॥
वशीभूतान[i] या[j] चेष्टा बोधिसत्वान तादृशी[k] ।
अष्टमा[l]भूमिं[m] या चेष्टा[n] भवन्ति तादृशी[o][p] तथा ॥३१॥

एवमुक्ते आयुष्मान्महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच । ये इमे भो जिनपुत्र बोधिसत्वा अवैवर्तिकाः[q] चक्रवर्तिराज्यानि[r] कारयन्ति[s][t] केवरूपं[u] धर्मं[v] देशयन्ति सत्वानां[w] अनुत्पादे[x] च बुद्धानां केवरूपेण संग्रहेण[y] सत्वा संगृह्णन्ति[z] केवरूपां च जनतां[a]

[a]उपेक्षन्त इति । एवमुक्ते आयुष्मान्महाकात्यायन [b]आयुष्मन्तं महाकाश्यपमुवाच । ये इमे भो [c]धुतधर्मधर बोधिसत्वा अवैवर्तिका चक्रवर्तिराज्यानि [d]कारयन्ति ते सत्वानामेवं धर्मं देशयन्ति । [e]दशकुशलक[f]र्म[g]पथ[h]समायुक्ता [i]सत्वानामनुदर्शयन्ति । मा [j]भवन्तु [k]प्राणि-वधमदत्तहरणं रक्षितव्यानि परदाराणि [l]अनृत[m]पिशुन[n]परुषमबद्ध[o]प्रलापाभिध्याव्यापाद-मिथ्यादर्शनानि वर्जयितव्यानी[p]ति [q]देशेन्ति । हिरण्यसु[r]वर्णस्य धनस्य अग्रतो निवे-शनस्य राशयो [s]उपस्थापयित्वा एवं च [t]वदन्ति ।

वैकलियं [u]यस्य येन इतो स [v]गृह्णतु धनं ।
Sen. 108
धर्मलब्धा मम भोगा मा भवन्तो [w]विषीदथ ॥३२॥
अहं माल्यं च [x]गन्धं च [y]धूपं चूर्णं मनोरमं ।
ददामि मा विषीदन्तु भवन्तो रम्यतामिति ॥३३॥

[z]एवमुक्ते महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच । केवरूपैः [a]कर्मभि-र्बोधिसत्वानां चक्रवर्तिराज्यानि [b]कारयमाणानां सप्तरत्नानि भवन्ति । एवमुक्ते आयुष्मान्महाकात्यायन आयुष्मन्तं [c]महाकाश्यपं गाथाभिरध्यभाषे ।

[d]यथ लभति मनुजवृषभो [e]चातुर्द्वीपो प्रभूतधनकोशो ।
[f]सप्तरतनानि [g]राजा अहं इदमुदीरयिष्यामि ॥३४॥
[h]तरुणरविमण्डल[i]निभं प्रवर[j]दशशतारसंचय[k]मनोज्ञं ।
[l]चक्र[m]रतनं नरवरो पुरिमकुशलसंभवं [n]लभति ॥३५॥
[o]परि[p]चार[q]विधि[r]संयुक्तं [s]ददाति दानमनवद्य[t]संकल्पे ।
अजितजयमप्रतिहतं तेन नरवरो लभति चक्रं ॥३६॥
हिमनिचयकुमुदवर्णं [u]सप्ता[v]ङ्गप्रतिष्ठितं महानागं ।
अनि[w]लबलतुल्यवेगं [x]हस्तिरतनमद्भुतं लभति ॥३७॥

दुर्गेषु च [a]विषमेषु च [b]संक्रम[c]मरिसू[d]दनो प्रतिष्ठपिय ।

तेन [e]खगपथेगामि [f]गजवररतनं······[g]लभति ॥३८॥

[h]तद [i]भृंगनीलं [j]सुवर्णम[k]निलजवकेशरिं समुद्यतपादं ।

प्रतिलभति [l]तुरग[m]रतनं सुकृत[o]कुशलसंचयो [p]राजा ॥३९॥

[q]हयनवरेहि [r]परिवही मातापितरं [s]गुरुं [t]तथाचार्यं । 5 Sen. 109

[u]तेन कुशलेन राजा [v]अश्वरतनं [w]अद्भुतं लभति ॥४०॥

[x]मणि[y]रतनमनुपमवर्णं [z]वैडूर्येण शीरमनु[a]पसंपन्ना ।

... ... ... ... ... ... ... ... ॥४१॥

... ... ... ... ... ... ... ... ।

[b]लभति [c]प्रमदां मनापां [d]रतनवर[e]मनन्तबलवीर्यैः ॥४२॥ 10

[f]पूर्वभवे हि [g]निवासे स्वदारसन्तोषसंय[h]माभिरतो ।

[i]आसीच्च [j]नराधि[k]पती [l]स्त्रीरतनं तेन सो लभति ॥४३॥

[m]आढ्यं विविधधनवरं [n]प्रभूत[o]निधिनिचय[p]संचयोपेतं ।

[q]गृहपतिरतनमुदार प्रतिलभति [r]महावशी राजा ॥४४॥

विविधधनसंचया[s]नां दाता गुरुषु [t]गुरुगौर[u]वोपेतो । 15

[v]तेन स [w]गृहपतिरतनं [x]प्रतिलभति प्रभूतधनकुशलं ॥४५॥

नयनयज्ञं [y]मेधावि व्यक्तं नायकध्वजं चातुर्द्वीपं ।

[z]परिणायकरतनवरं प्रतिलभति [a]महीपतिः [b]विरतो ॥४६॥

[c]मार्गगतो [d]प्रणष्टानां [e]हतहतनयनानां [f]देशयि मार्गं ।

तेन परिणायकवरं लभति [g]रतनं उत्तमनायकं ॥४७॥ 20

[h]एतैर्धुतधर्म[i]धरा कर्मेहि समुत्थितानि [j][k]रतनानि ।

[l]तेन च एव नरेन्द्रो धर्मेण महीं [m]प्रशासयति ॥४८॥

Sen. 110 एवमुक्ते आयुष्मान्महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच। ये इमे हि भो जिनपुत्र बोधिसत्वाः प्रथम[a]चित्त[b]मुत्पादयन्ति ते कतिभिराकारैश्चतुर्थ्यां[c] भूमौ वर्तमानाः पंचमायां भूमौ विवर्तन्ते।[d] एवमुक्ते आयुष्मान्महाकात्यायन आयुष्मन्तं महाकाश्यपमेतदुवाच। ये इमे भो धुतधर्मधर बोधिसत्वाः[e] प्रथमचित्तोत्पादा[f] सप्तभिराकारैश्चतुर्थ्यां भूमौ वर्तमानाः पंचमायां भूमौ विवर्तन्ते। कतमेहि सप्तहि[g]। भिक्षुणीदूषकाश्च भवन्ति। पुरुषदूषकाश्च भवन्ति[h]। पण्डकदूषकाश्च भवन्ति। मन्त्रबलेन चापि[i] परस्य असन्तं[j] रोगमुत्पादयन्ति। सुशीलवन्तांश्च[k] शीलाच्च्यावयन्ति[l]। अहिरीकाश्च[m] भवन्ति[n]। अनोत्रापिणश्च[o] भवन्ति। ये केचिद्भो धुतधर्मधर बोधिसत्वाः[p] प्रथमं[q] चित्तमुत्पादयन्ति[r] ते इमेभिः[s] सप्तभिराकारैश्चतुर्थयां भूमौ वर्तमानाः[t] पंचमायां भूमौ विवर्तन्ति[u]।

इत्येषा[v] भुमिरुपदिष्टा चतुर्थी सुगतात्मज।
रमणीया बोधिसत्वानां ये ते बोधिपरायणा[w] इति ॥४६॥

इति श्रीमहावस्तुअवदाने चतुर्थी[x] भूमिः समाप्ता[y] ॥

एवमुक्ते[z] आयुष्मान्महाकाश्यपो[a] आयुष्मन्तं महाकात्यायनमेतदुवाच। भो जिनपुत्र[b] बोधिसत्वा अवैवर्तिका चतूर्थीभूमितो[c] ये पंचमां भूमिं संक्रामन्ति[d] तेषां कतमं सन्धिचित्तं भवतीति। एवमुक्ते आयुष्मान्महाकात्यायन[e] आयुष्मन्तं महाकाश्यपमुवाच[f]। आदीप्तां सर्वभवां[g] पश्यन्ति[h] रागद्वेषमोहेभ्यः। अशरण्यं[i] निरानन्दं सन्धिचित्तं[j] चतुःपंचमानन्तरं[k] भवतीति[l]।

एवमुक्ते[m] आयुष्मान्महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच। ये पुनर्भो[n] जिनपुत्र सम्यक्संबुद्धेन भगवता[o] पंचमायां भूमौ[p] सम्यक्संबुद्धाः[q] पूजितास्तेषां सम्यक्संबुद्धानां कानि नामानि गोत्राणि केवत्ता[r] श्रावकसन्निपाता[s] केवत्तिका[t] प्रभा केवत्तिकमायुःप्रमाणमिति। एवमुक्ते आयुष्मान्महाकात्यायन आयुष्मन्तं महाकाश्यपं[u] गाथाभिरध्यभाषि[v]।

शाक्यमुनि नाम[a] जिनवरो अभूषि वशिभूतकोटिपरिवारो[b] ।

व्यामप्रभो[c][d] गिरिघनो कनकगिरिनिभो[e] निहतशत्रुः ॥१॥

षड्वर्षसहस्राणि आयुः पुरुषोत्तमस्य[f] तत्कालं[g] ।

नामं[h] तस्य[i] यशव्रतो अभूषि[j] अतिसुन्दरो[k] बुद्धो ॥२॥

गोत्रेण गौतमोऽसौ[l] अयं च भगवान्तदासि[m] श्रेष्ठिसुतो[n] । 5

ग्वागूदानं[o] दत्वा बुद्धप्रमुखे कृता प्रणिधिः ॥३॥

यं[p] मये कुशलमुपचितं[q] संश्लिष्य[r] संघे अर्हन्ते दत्त्वा ।

तेन[s] परमार्थदर्शी[t] भवेयमखिलं[u][v] ममं पुण्यं ॥४॥

अन्तिमवतरणगामी[w] सुन्दरो[x] सुदर्शनो[y] नाम नरसिंहः[z] ।

भारद्वाजसगोत्रो[a][b][c] प्रभा[d] च दशयोजना तस्य ॥५॥ 10

वशिभूतानां कोटि परिवारो तस्य सत्वसारस्य[e] ।

दशवर्षसहस्राणि आयुः[f] तद मारदमकस्य ॥६॥

राजा च चक्रवर्ति[g] अभूषि धरणींधरो[h] ति नामेन[i] । Sen. 112

सो तं जिनं सुदर्शनं सशिष्यसंघं[j] इदमुवाच ॥७॥

सर्वं[k] हितोपधानं[l] अहं[m] ति देमीति पण्डितो[n] अवची । 15

एवं च भवेयमहं[o] प्रणिधेसि[p][q] परं प्रणिधि[r] राजा[s] ॥८॥

जरामरणस्य सागरगतां[t] अलीनो जनतां[u] तारेय्यं ।

.................................................................॥९॥

अनुपहतकुशलमूलो अभूषि भगवां[v] नरेश्वरो नाम[w] ।

गोत्रेण च वासिष्ठो[x] आभा दशयोजना तस्य ॥१०॥ 20

वशिभूतानां[y] कोटी[z] परिवारो[a] तस्य द्वादश[b] आसि ।

नव[c] च वर्षसहस्राणि मनुजान[d] तदा[e] अभूष्यायुः[f] ॥११॥

[a]राजा च [b]चक्रवर्ति अभूषि अपराजितो ति नामेन ।

सो [c]दशबलं नरेन्द्रं [d]प्रसन्नचित्तो इदमुवाच ॥१२॥

[e]सप्तरतनाङ्ग[f]चित्रा [g]इमां अनेकरतनसम्पत्तीयो ।

शीति [h]चतुरुत्तरा तव [i]विभू [j]विहारानहं देमि ॥१३॥

5 [k]सो तं दानं [l]दत्त्वा तस्मि नरेश्वरके अनु[m]प्रणिधिं ।

[n]प्रणिधेसि एवं भवेयमधिगच्छेयं जिनब[o][p]लानि ॥१४॥

विजयो [q]नाम अमात्यो अभूषि [r]पूर्वं जिनः [s]सुप्रभो नाम ।

Sen. 113 गोत्रेण काश्यपोऽसौ [t]प्रभा च दशयो[u]जना तस्य ॥१५॥

[v]तस्य च [w]शिष्यसंघो अष्टादश [x]कोटो [y]धूतरजानां ।

10 [z]विंशन्नराण आयुः [a]वर्षसहस्राणि [b]तत्कालं ॥१६॥

[c]सो वन्द्य जिनवरं तं विजयो [d]निमन्त्रयी [e]भवनिर्घातिं ।

अधिवासयति [f]दशबलो अथ [g]विजयो [h]हर्षितो आसि ॥१७॥

अग्रेण [i]प्रणीतेन च अधिगतस्वादेन [j]भक्ष्यभोज्येन ।

[k]संन्तर्प[l]यित्वानुगतं [m]प्रणिधेसि तदा अनु[n]प्रणिधिं ॥१८॥

15 सोऽहमपि भवेयमेवं [o]नरवरमहितो नरमरुण [p]हितकरो ।

तेनापि नायकवरो [q]दशबलो [r]भवे [s]वादिशार्दूलो ॥१९॥

[t]आसीत्पूर्वं बुद्धस्तथागतो [u]रतनपर्वतो [v]नाम ।

गोत्रेण [w]गौत[x]मोऽसौ [y]प्रभा च दशयो[z]जना [a]तस्य ॥२०॥

[b]त्रिंशत्मनुष्य[c]कोट्यो [d]परिवारो आसि [e]दान्तचित्तानां ।

20 [f]वर्षसहस्राणि विंशं आयुः तदासि मनुष्याणां ॥२१॥

[g]राजा च [h]चक्रवर्ती अभूषि तत्कालमच्युतो [i]नाम ।

[j]जिनक्रमाणि निपीडिय [k]इदमवचि [l]वरं [m]नरमरूणां ॥२२॥

प्रासादसहस्राणि [a]मर्त्यं [b]नरनागा [c]चतुरशीतिं ।

तानि [d]समलंकृतानि [e]सशिष्यसंघस्य अहं देमि ॥२३॥ Sen. 114

अधिवासनां विदित्वा [f]राजा······प्रीतमनो ।

[g]अनुप्रणिधिं प्रणिधेसि पुरतो [h]वरलक्षणधरस्य ॥२४॥

[i][j]कुशलेन अनेन अहं [k]कुशलोपचितवराणां चरितानां । 5

[l]दुरन्तकवीर्यकर्मो भवेय [m]नाथो अनाथानां ॥२५॥

[n][o]गगनतलविमलचित्तो संबुद्धो कनकपर्वतो [p]नाम ।

[q]अभूषि [r]नरतामहितो कौण्डिन्यो नाम गोत्रेण ॥२६॥

तस्य [s]शुभकर्मजाता शरीरप्रभा अभू यीजनानि षट् ।

पंच [t]वशीभूतानां कोटीयो च [u]परिवारोऽस्य ॥२७॥ 10

[v]दश षड्वर्षा [w]आयुं तदा अभूषि मनुजानां च [x]चतुर्दश सहस्राणि ।

वर्षाणां [y]सप्तत्रिंश वर्षसहस्राणि इत्येव ॥२८॥

[z]आसि तद्द [a]चक्रवर्ती राजा [b]प्रियदर्शनो ति नामेन ।

[c][d]सप्तरतनद्युतीमान् [e]चातुर्द्वीपः [f]पृथिविपालो ॥२९॥

सो [g]कनकवर्णपर्वतं संबुद्धं [h]क्रमवरेषु [i]निपतित्वा । 15

याचति [j]सामात्यगणो [k][l]मुक्ताहारान्तपुरो प्राह ॥३०॥

मम [m]नगरनिगमभरितं राज्यं चतुरो [n][o]महाधनद्वीपाः ।

[p]तान्तव ददामि [q]वीरा [r]सशिष्यसंघस्य [s]निरपेक्षः ॥३१॥

[t][u]यद्भोजनं ऋषीणां यद्वस्त्रं या च [v]ओषधिविधीयो । Sen. 115

यानि शयनासनानि [w]च प्रासादवरे तथा येव ॥३२॥ 20

[x]निःसृष्टमेव सर्वं परिभोज्यं [y]यस्य द्वादशाकारं ।

मम [z][a]प्रवररूपधारि अनुकम्पार्थं कुरुहि करुणां ॥३३॥

एतद्दत्त्वा दानं सो पार्थिवलम्बको अनुप्रणिधिं ।
प्रणिधेसि प्रीतिमानसो पुरतो संपूर्णकुशलस्य ॥३४॥
परमार्थं शूक्ष्मदर्शि वैशारद्यवरपारमिप्राप्तः ।
तेनाहं नायकवरो भवेय सर्वोपधिक्षयकरो ॥३५॥
द्वात्रिंशलक्षणधरो भगवान्नामेन पुष्पदन्तो ति ।
अभूत्परमार्थदर्शि वत्सो गोत्रेण संबुद्धो ॥३६॥
तस्यापि योजनानि नव शरीरप्रभा जिनप्रवरस्य ।
वशिभूतकोटियो चतुस्त्रिशद्दशबले समनुबद्धाः ॥३७॥
पंचाशं च अभूषि वर्षसहस्राणि आयुःपरिमाणं ।
मनुजान एवं न विमति कार्या तत्रोपदेशस्मिं ॥३८॥
पार्थिवो चैव नरपती तं कालं आसि दुर्जयो नाम ।
उपगम्य पुष्पदन्तं वन्दति पादां सपरिवारः ॥३९॥
Sen. 116 कृतकरपुटो प्रसन्नः नरप्रभो पुष्पदन्तमिदमाह ।
अधिवासयतु मे दशबलो सप्ताहं भोजनविधानं ॥४०॥
अधिवासनं विदित्वा राजास्य दुर्जयोर्ध्वबल एव ।
छादयति मेदिनितलं सुवर्णपट्टेहि रुचिरेहि ॥४१॥
तत्र रतनामयानि विनिक्षिपति आसनानि चित्राणि ।
भोजनविधिं च चित्रां स्थापयति सुगन्धिप्रत्यग्रां ॥४२॥
सप्तरतनामयानि छत्राणि नरमरूणां अष्टशतं ।
धोरेन्ति भूषणधरा चित्राभरणधारिणो पुरुषा ॥४३॥
एवं एकैकस्य वशिभूतस्य धारेन्ति हृदिमनो ।
छत्ररतनं विचित्रं शशिशंखतलोपमं विमलं ॥४४॥

सन्तर्पयित्व राजा सपरिवारं पुष्पसाह्वयं सुगतं ।
अथ मनसा प्रणिधेति तदा व सो तं अनुप्रणिधिं ॥४५॥
त्वमिवमहं संबुद्धो धर्मं प्रकाशयेय नरमरूणां ।
... ... ... ... ... ... ... ... ॥४६॥
द्वात्रिंशल्लक्षणधरो नामेन लतितविक्रमो संबुद्धो । 5
आसि भगवां भवनुदो वासिष्ठगोत्रो धुतकिलेशो ॥४७॥
तस्य च स्वशरीरजाता प्रभा अभू योजनानि त्रिंश दुवे ।
वशिभूतकोटियो च त्रिंश नरवरस्य परिवारो ॥४८॥ Sen. 117
आयुं तदा नराणां वर्षसहस्राणि आसि चतुरशीतिं ।
राजा च तदा आसी चतुरंगबलो प्रियो मनापो ॥४९॥ 10
प्रासादकोटियो च चत्वारिंशं अनेकरतनानां ।
कारयति भूमिपालो प्रवरं एकं च प्रासादं ॥५०॥
शय्यासनं च विपुलं कारयते पार्थिवो निरुपवद्यं ।
भोजनगिलानप्रच्चयमृषियोग्यं सन्निवेशेति ॥५१॥
भगवतो निर्यातित्वा सशिष्यसंघस्य सो अनुप्रणिधिं । 15
प्रणिधेति हृष्टचित्तो राजा पुरतो दशबलस्य ॥५२॥
दुर्लभसदृशो असमः दशबलो च जरामरणविमतिमथनो ।
भवेय श्रेष्ठो नरमरूणां कुगणीगणवचनमथनो ॥५३॥
द्वात्रिंशलक्षणधरो भगवां आसी महायशो नाम ।
गोत्रेण काश्यपो सो विस्तीर्णयशो अमितकीर्तिः ॥५४॥ 20
शरीरभासा तस्य पंचाशं योजनानि पुण्यवतो ।
वशिभूतकोटियो च तस्यासी पंचपंचाशं ॥५५॥

वर्षसहस्राणि तदा चतु[a]रशीतिं आ[b]युःपरिमा[c]णं ।

Sen. 118 [d]आसि तदा मनुजानां चतु[e]र्गुण.एष चतु[f]रशीति ॥५६॥

राजा तदा अ[g]भूषी नामेन सो मृगपतिस्वरो [h]नाम ।

चातु[i]र्द्वीपाधिप[j]तिर्विपुलबलवरो अ[k]जितचक्रो ॥५७॥

5 [l]सो [m]रत्नस्कन्धशाखां वनखण्डां यो[n]जनानि [o]ष[p]ण्णवति ।

कारापयि [q]भूमिपति [r]प्रवरां वरवस्त्रसं[s]छन्नां ॥५८॥

वैडू[t]र्यमणितलां च कृत्वान [u]वसुधां विभूषणवि[v]चित्रां ।

अगुरुवरधूपगन्धां सुग[w]न्धपु[x]ष्पाव[y]कीर्णतलां ॥५९॥

तं तत्र वा[z]दिसिं[a]हं ऋषभं सो भोजनेन स[b]प्ताहं ।

10 [c]तर्पयति भूमिपालो प्रसन्नचित्तो [d]प्रणीतेन ॥६०॥

तं [e]सु[f]ख[g]वरवनउपमं [h]ततो वनं तस्य सत्व[i]सारस्य ।

[j]निर्यातयति प्रसन्नो दिवाविहारं दशबलस्य ॥६१॥

[k]दत्त्वा स राजा·········महायशस्य स[l]शिष्यसं[m]घस्य ।

राजा उदग्र[n]चित्तो प्रणिधेति तदा[o] अनुप्रणिधिं ॥६२॥

15 [p]बहुजनमहितो [q]स्वयंभू [r]अनन्यनेयो भवेय सर्व[s]ज्ञो ।

कुशलेन [t]हि [u]मे तेन तथगतबलो वि[v]भू भोमि ॥६३॥

[w]विपुलबलपुण्यकोशो [x]नयानयज्ञो [y]जिनो [z]र[a]तनचूडो ।

Sen. 119 [b]आसि अ[c]भिनीलनेत्रो निरुपमगुणसंचयो [d]धीरो ॥६४॥

तस्य च प्रभा शरीरे योजनशतवि[e]स्तरा सम[f]न्तेन ।

20 भारद्वाज[g]सगोत्रो स सर्वदर्शी तदा [h]आसि ॥६५॥

[i]तस्य संघो आसी [j]नवनवति [k]कोटियी [l]धूत[m]रजानां ।

[n]वर्षाणां च सहस्राणि चतुराशीतिं [o]तदा आयुं ॥६६॥

राजा तद[a] चक्रवर्ति अभूषि चातुर्द्वीपो[b] महिस्थामो[c] ।
नामेन मणिविषाणो[d] शासति धर्मेण यो जनतां ॥६७॥
द्वानवति कोटिनयुतां प्रासादानामनेकरूपाणां[e] ।
कारयति भूमिपालो[f] तं रतनजिनं समुद्दिश्य[g] ॥६८॥
सो[h] प्रवरकाञ्चननिभं नरमरुगणसत्कृतं[i] रतनचूडं[j] । 5
भोजयति[k][l] सपरिवारं वर्षाणि दश[m] अविश्रामं ॥६९॥
प्रथमदिवसं च सुगतं भोजेत्वा सार्धं[n] शिष्यसंघेन[o] ।
नियर्तिति[p] नरवरो प्रासादवरां गुणधरस्य ॥७०॥
सो तं दानं दत्वा तस्य महापुद्गलस्य[q] राजवरो[r] ।
अनुप्रणिधेति[s] प्रणिधिं प्रसन्नचित्तो जिनसकाशं[t] ॥७१॥ 10
उच्छिन्नमोहजालो प्रसन्नचित्तो असंगप्रतिभानो[u] ।
तारेय्य[v] सर्वजनतां संसारमहार्णवे[w] पतितां ॥७२॥
एवमेव[x][y] अप्रमेया[z] पंचम्यां[a] भूमियां पुरुषसिंहाः ।
प्रत्येकजिना तथापि[b] शैक्षाशैक्षा च जिनपुत्राः[c] ॥७३॥ Sen. 120
संपूजिता[d] भगवता[e] इमे तथान्ये तथागताः सर्वे[f] । 15
समुपचित कुशलमूलं[g] अर्थे[h] जगतस्य[i] सर्वस्य ॥७४॥

एवमुक्ते[j] आयुष्मान्महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच[k] । ये[l] भो जिन-पुत्र बोधिसत्वा[m] बोधाये[n] प्रणिधेन्ति ते[o] कतिभिराकारैः पंचमायां भूमौ वर्तमानाः षष्ठायां भूमौ[p] विवर्तन्ति । एवमुक्ते आयुष्मान्महाकात्यायनः[q] आयुष्मन्तं[r] महाकाश्यपमुवाच । चतुर्भि[s] भो जिनपुत्र[t] आकारैर्धुतधर्मधर बोधिसत्वा[u] बोधाये[v] ये प्रणिधेन्ति[w] पंचमायां[x] भूमौ[y] 20 वर्तमानाः षष्ट्यां[z] भूमौ विवर्तन्ति । कतमेहि चतुर्हि[a] । सम्यक्संबुद्धानुशासने[b][c] प्रव्रजित्वा

योगाचारेहि सार्धं[a] सम्मुवं कुर्वन्ति[b]। अष्टमके धुतवेदनागृद्धा[c] भावना[d] उत्त्रसन्ति। शमथ[e]विपश्यना[f]भावनाबहुलाश्च अभीक्ष्णं विहरन्ति। आलंबणा[g]लंबणचित्तं हेतुशो[h] परिकल्पेन्ति। ये हि केचि[i] भो धुतधर्मधर बोधिसत्वा[j] बोधाय प्रणिधेन्तो[k] पंचमायां भूमौ वर्तमाना[l] षष्ठ्यां भूमौ विवर्तन्ति सर्वे[m] ते इमेहि चतुर्हि[n][o] आकारेहि विवर्तेन्सुः[p] विवर्तन्ति विवर्तिष्यन्ति[q] वा।

इत्येषा[r] पंचमी भूमी व्याकृता संनिदर्शिता[s]।
तेषां बहुविध[t]पुण्यानां बोधिसत्वान मारिष इति ॥७५॥

इति श्रीमहावस्तुअवदाने पंचमी[u] भूमिः[v] समाप्ता ॥

Sen. 121

ततः स्थविरः[w] काश्यपः कात्यायनमथाब्रवीत्[x][y]।
किं चित्तं बोधिसत्वानां पंचमायां[z] विपश्चितां[a] ॥१॥

ततः[b] कात्यायनस्थविरः मुनिकाश्यपं धुतधर्मधरं गाथयाध्यभाषि[c]।

अल्पास्वाद[d]निबद्धो यं लोकावर्तो[e]ऽतिदारुणः[f]।
… … … … … …जायते ॥२॥

एवमुक्ते आयुष्मान्महाकाश्यपः[g] आयुष्मन्तं महाकात्यायनमुवाच। क्षेत्रमिति[h]।

ततः स्थविरः[i] कात्यायनः महाकाश्यपमथाब्रवीत्[j]।
श्रूयतां लोकनाथानां क्षेत्रं[k] तत्वार्थनिश्रितं ॥३॥
उपक्षेत्रं[l][m] च वक्ष्यामि तेषां परमवादिनां।
तानि[n] निशम्य[o] वाक्यानि शासनं[p] च नरवर[q] ॥४॥
एकर्षष्टि[r] त्रिसहस्राणि बुद्धक्षेत्रं[s] परीक्षितं[t]।
अतो[u] चतुर्गुणं[v] ज्ञेयमुपक्षेत्रं[w] तथाविधं ॥५॥

एवमुक्ते[x] आयुष्मां महाकाश्यपः[y] आयुष्मन्तं महाकात्यायनमुवाच। किं पुनर्भो

जिनपुत्र सर्वेषु [a]बुद्धक्षेत्रेषु [b]उत्पद्यन्ति सम्यक्संबुद्धा उताहो [c]केषुचिदेव उत्पद्यन्ति। [d]एवमुक्ते आयुष्मान्महाकात्यायन [e]आयुष्मन्तं [f]महाकाश्यपं गाथाभिरध्यभाषे।

[g]किंचिदेव भवति [h]अपरि[i]शून्यं

क्षेत्रमप्रतिम[j]रूपधरेहि।

[k]क्षेत्र[l]कोटिनयुतानि [m]बहूनि 5 Sen. 122

[n]शून्यकानि [o]पुरुष[p]प्र[q]व[r]रेहि॥६॥

[s]दुर्लभो हि [t]वरलक्षणधारी

दीर्घकालसमु[u]दा[v]गतबुद्धो।

सर्वधर्म[w]कुशलो अतितेजः

सर्व[x]सत्वसुखताधरसत्वो इति॥७॥ 10

एवमुक्ते आयुष्मान्महाकाश्यप [y]आयुष्मन्तं महाकात्यायनमुवाच। खलु भो जिनपुत्र को [z]हेतुः कः [a]प्रत्ययः यं [b]एकस्मि क्षेत्रे [c]द्वौ सम्यक्संबुद्धौ नोपपद्यन्ति इति। एवमुक्ते [d]आयुष्मान्महाकात्यायन आयुष्मन्तं [e]महाकाश्यपं [f]गाथाभिरध्यभाषते।

[g]यत्कार्यं [h]नरनागेन बुद्धकर्म सुदुःकरं।

[i]तत्सर्वं परिपूरेति [j]एषा बुद्धान [k]धर्मता॥८॥ 15

[l]असम[m]र्थो [n]यदि सियाद्[o]बुद्धधर्मेषु चक्षुमां।

[p]ततो दुवे महात्मानौ [q]उत्पद्येते तथागतौ॥९॥

[r]तं चा[s]समर्थसद्भावं [t]वर्जयन्ति महर्षिणां।

[u]तस्माद्दुवे न [v]जायन्ते एकक्षेत्रे नरर्षभौ॥१०॥

न जातु [w]सावशेषेषु बुद्ध[x]धर्मेषु [y]श्रुय्यते। 20

[z]निर्वृताः पुरुष[a]श्रेष्ठा [b]अतीताध्वे [c]जिनात्मंजा॥११॥

Sen. 123

अनागता[a] अतिक्रान्ता[b] संबुद्धा ये च सांप्रतं ।
कृतेन बुद्धधर्मेण निर्वायिन्ति नरोत्तमा[c] इति ॥१२॥

[d]एवमुक्ते आयुष्मान्महाकाश्यपः[e] आयुष्मन्तं[f] महाकात्यायनमुवाच । कतमानि भो जिनपुत्र[g] सम्प्रति[h] अन्यानि बुद्धक्षेत्राणि[i] यत्रैतर्हि[j] सम्यक्संबुद्धा धर्मं[k] देशयन्तीति ।
5 [l]एवमुक्ते आयुष्मान्[m]महाकात्यायन[n] आयुष्मन्तं महाकाश्यपं[o] गाथाभिरध्यभाषे ।

पुरस्तिमे दिशो भागे बुद्धक्षेत्रं[p] सुनिर्मितं[q] ।
तत्र मृगपतिस्कन्धो नामेन[r] जिनपुङ्गवः ॥१३॥
पुरस्तिमे दिशो भागे बुद्धक्षेत्रं[s] कृतागदं[t] ।
तत्र सिंहहनुर्नाम[u] जिनो द्वात्रिंशलक्षणः[v][w] ॥१४॥
10 पुरस्तिमे दिशो भागे दुद्धक्षेत्रं[x][y] विभूषितं ।
तत्र लोकगुरुर्नाम सर्वदर्शी महामुनिः ॥१५॥
पुरस्तिमे दिशी भागे बुद्धक्षेत्रमकण्टकं ।
तत्र ज्ञानध्वजो[z] नाम[a] शास्ता[b] शासति प्राणिनां ॥१६॥
पुरस्तिमे दिशो भागे बुद्धक्षेत्रमवेक्षितं[c] ।
15 तत्र कनकबिम्बाभो जिनो नामेन सुन्दरः ॥१७॥
[d]दक्षिणस्मि दिशो भागे बुद्धक्षेत्रं[e] द्रुमध्वजं[f] ।
तत्र अनिहतो नाम संबुद्धो देवनन्दितः ॥१८॥
[g]दक्षिणस्मि दिशो भागे बुद्धक्षेत्रं[h] मनोरमं ।
तत्र नामेन संबुद्धो चारुनेत्रो[i] महामुनिः ॥१९॥
20 Sen. 124 [j]दक्षिणस्मि दिशो भागे बुद्धक्षेत्रमकर्दमं[k] ।
तत्र नामेन संबुद्धो मालाधारी[l] विनायकः ॥२०॥
[m]पश्चिमस्मि दिशो भागे बुद्धक्षेत्रमविग्रहं[n] ।
तत्र नामेन संबुद्धो अम्बरो भवसूदनः[o] ॥२१॥

उत्तरस्मि[a] दिशो भागो बुद्धक्षेत्रं[b] मनोरमं ।

तत्र नामेन संबुद्धो पूर्णचन्द्रो विधिश्रुतः[c] ।।२२।।

हेष्टिमस्मि[d] दिशो भागो बुद्धक्षेत्रं[e] सुनिष्ठितं[f] ।

तत्र नामेन संबुद्धो दृढबाहुस्तथागतः ।।२३।।

उपरिष्टा दिशो भागे बुद्धक्षेत्र[g]मनुद्धृतं[h] । 5

तत्र[i] बुद्धो महाभागो नामेन अरिसूदनः ।।२४।।

बुद्धक्षेत्र[j]सहस्राणि[k] अनेकानि अतःपरं ।

बुद्धक्षेत्र[l]सहस्राणां[m] कोटी न प्रज्ञायतेऽपरा ।।२५।।

बुद्धक्षेत्राणां शून्यानां[n] कोटी न प्रज्ञायतेऽन्तरा ।

लोकधातुसहस्राणां कोटी न प्रज्ञायतेऽन्तरा[o] ।।२६।। 10

यथा संसारचक्रस्य पूर्वा कोटी[p] न प्रज्ञायते[q] ।

तथैव लोकधातूनां[r] पूर्वा कोटी न प्रज्ञायते ।।२७।।

अतिक्रान्तानां बुद्धानां पूर्वा कोटी[s] न प्रज्ञायते ।

प्रणिधेन्तान[t] बोधाय पूर्वा कोटि[u] न प्रज्ञायते ।।२८।।

अववर्तिकधर्माणां[v] पूर्वा कोटि न प्रज्ञायते । 15

अभिषेकभूमि[w]प्राप्तानां पूर्वा कोटी[x] न प्रज्ञायते ।।२९।।

तुषितेषु वसन्तानां[y] पूर्वा कोटी[z] न प्रज्ञायते । Sen. 125

तुषितेभ्यश्च्यवन्तानां पूर्वा कोटी[a] न प्रज्ञायते ।।३०।।

मातु[b] कुक्षौ[c] शयन्तानां पूर्वा कोटी[d] न प्रज्ञायते ।

स्थितानां मातुः[e] कुक्षौ[f] तु पूर्वा कोटी[g] न प्रज्ञायते ।।३१।। 20

जायमानानां[h] वीराणां पूर्वा कोटी[i] न प्रज्ञायते ।

जातानां लोकनाथानां[j] पूर्वा कोटी[k] न प्रज्ञायते ।।३२।।

[a]अङ्के[b]षु गृह्यमाणानां पूर्वा [c]कोटी न प्रज्ञायते ।
पादानि [d]विक्रमन्तानां पूर्वा [e]कोटी न प्रज्ञायते ॥३३॥
[f]महाहासं हसन्तानां पूर्वा [g]को[h]टी न प्रज्ञायते ।
[i]दिशां विलोकयन्तानां पूर्वा कोटी न प्रज्ञायते ॥३४॥
5 [j]अङ्के[k]न धा[l]रियन्तानां पूर्वा [m]कोटी न प्रज्ञायते ।
[n]उपनीय[o]मानानां [p]गन्ध[q]र्वैः पूर्वा कोठी न प्रज्ञायते ॥३५॥
[r]पूरेभ्यो निष्क्रमन्तानां पूर्वा [s]कोटी न प्रज्ञायते ।
बोधि[t]मूलमुपेन्तानां पूर्वा [u]कोटी न प्रज्ञायते ॥३६॥
[v]प्राप्नुवन्तानां तथागतज्ञानं पूर्वा कोटी न प्रज्ञायते ।
10 धर्मचक्रप्रव[w]र्तन्तानां पूर्वा [x]कोटी न [y]प्रज्ञायते ॥३७॥
सत्व[z]कोटि [a]विनेन्तानां पूर्वा [b]कोटी न प्रज्ञायते ।
[c]सिंहनादं [d]नदन्तानां पूर्वा [e]कोटी न प्रज्ञायते ॥३८॥
आयुः[f]संस्कारं उत्सृजन्तानां पूर्वा [g]कोटी न प्रज्ञायते ।
[h]नि[i]र्वायन्तानां वीराणां पूर्वा [j]कोटी न प्रज्ञायते ॥३९॥
15 Sen: 126 [k]निर्वृतानां शयन्तानां पूर्वा [l]कोटी न प्रज्ञायते ।
[m]ध्यापि[n]यन्तानां वीराणां पूर्वा कोटी न प्रज्ञायते ॥४०॥
एवमेतं यथाभूतं [o]शास्तुपूगं विजानथ ।
क्वचित्क्वचिच्च [p]संबुद्धो [q]बुद्धक्षेत्रेषु दृश्यते ॥४१॥

[r]एवमुक्ते [s]आयुष्मान्महाका[t]श्यपो आयुष्मन्तं महाकात्यायनमुवाच । यदि भो
20 जिनपुत्रा [u]एत्तका सम्यक्संबुद्धा एको [v]च सम्यक्संबुद्धो अपरि[w]मितान् [x]सत्वा परिनिर्वा-
[y]पयति ननु अचिरेण कालेन सर्व[z]सत्वान्परिनिर्वा[a]पयिष्यन्ति । एव[b]मयं [c]लोकः [d]सर्वेण

सर्वशून्यं [a]भविष्यति सर्वसत्वविरहित इति। [b]एवमुक्ते आयुष्मान्महाकात्यायन[c] आयुष्मन्तं महाकाश्यपं गाथाभिरध्यभाषे।

[d]समनन्तरसंपूरं शून्यं भवतु [e]सर्वदा।
[f]अप्रतिष्ठमनालम्बनं [g]निविष्टं [h]भवतु [i]सर्वदा ॥४२॥
[j]यत्तिका पृथिवीधातु [k]सत्वा [l]बहुतरका [m]अतो। 5
पृथग्जना खु [n]निर्दिष्टा तेन [o]परमदर्शिना ॥४३॥
श्रृण्वतां [p]पुरुष[q]त्ररस्य शासनं [r]बहूनां [s]कुतः।
[t]पर्यन्तो [u]भेष्यति सत्वानामिति उक्तं महर्षिणेति ॥४४॥

[v]एवमुक्ते आयुष्मान्महाकाश्यपो आयुष्मन्तं महाकात्यायनमुवाच। ये इमे भो [w]जिनपुत्र सत्वा सम्यक्संबोधाये [x]प्रणिधेन्ति ते कतिभिराकारैः [y][z]षष्ठ्यायां भूमौ [a]वर्तमानाः 10 Sen. 127 सप्तमायां भूमौ [b]विवर्तन्त इति। एवमुक्ते आयुष्मान्महाकात्यायन आयुष्मन्तं महा-[c]काश्यपमुवाच। [d]दुभि खलु भो धुतधर्म[e]धर आकारैर्बोधिसत्वा बोधाय [f]प्रणिधेन्तो षष्ठ्यायां भूमौ [g]वर्तमानाः [h]सप्तमायां भूमौ विवर्तन्ति। [i]कतमेहि दुभि। संज्ञावेदयित[j]निरोधसमा-[k]पत्तियो च [l]स्पृहयन्ति [m]यस्मिंश्च [n]काले सम्यक्संबुद्धा [o][p][q]सत्वपरिज्ञया अहं महात्मा [r]शमीकरो त्ति देवतां सत्कृत्य [s]अवहितश्रोता श्रृण्वन्ति। [t]ये हि केचिद्भो [u]धुतधर्मधर बोधिसत्वाः 15 षष्ठ्यायां [v]भूमौ वर्तमानाः सप्तमायां भूमौ [w]विवर्तेन्सु विवर्तन्ति विवर्तिष्यन्ति वा [x]सर्वे इमेहि [y]दुभि आकारेहि विवर्तन्ति [z][a]विवर्तेन्सु [b]विवर्तिष्यन्ति इति।

एवं [c]एषां [d]षष्ठी [e]भूमि[f]र्भवति तेषां [g]गुणवराणां।
[h]हरिणपतीनां [i]हितान [j]महर्षिणां बोधिसत्वानामिति ॥४५॥

इति श्रीमहावस्तुअवदाने [k]षष्ठी भूमिः समाप्ता ॥ 20

[l]एवमुक्ते आयुष्मान्[m]महा[n]काश्यप आयुष्मन्तं महाकात्यायनमुवाच। ये इमे भो धुतधर्मधर बोधिसत्वाः [o]अवैवर्तिका [p]षष्ठातो [q]भूमितो सप्तमां [r]भूमिं संक्रमन्ति तेषां केवरूपं

सन्धिचित्तं[a] भवतीति[b] । एवमुक्ते[c] आयुष्मान्महाकात्यायन[d] आयुष्मन्तं महाकाश्यपं गाथाभिरध्यभाषत[e] ।

आत्मदमथे[f] प्रवर्तयते[g] चित्तं परममहाजनहितान[h][i] ।
यत्सप्तमां[j] भूमि[k] संक्रमन्ति तथा भूमिषु तत्सन्धिचित्तमिति ॥१॥

5 Sen. 128 एवमुक्ते[l] आयुष्मान्महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच । ये इमे भो जिनपुत्र बोधिसत्वा अवैवर्तिका:[m] ते प्रथमायां भूमो[n] उपादाय केवरूपेण कायकर्मेण समन्वागता[o] भवन्ति[p] केवरूपेण वाचाकर्मेण समन्वागता[q] भवन्ति[r] केवरूपेण मनकर्मेण समन्वागता[s] भवन्ति[t] केवरूपेण सत्त्वेन[u] समन्तागता[v] भवन्ति । एवमुक्ते[w] आयुष्मान्महाकात्यायन आयुष्मन्तं महाकाश्यपमुवाच । ये इमे भो धुतधर्मधर बोधिसत्वा[x]
10 अवैवर्तिकास्तेषां प्रथमां[y] भूमिमुपादाय इमानि[z] कर्माणि[a] भवन्ति । प्राणातिपातवैरमणं[b][c] प्राणातिपातवैरमणस्य च वर्ण भाषन्ति[d] तदध्याशयान्भूमिषु[e] सत्वान्प्रशंसन्ति[f] ये न परं[g] च[h] किंचित्पापमित्रसंयोगेन प्राणां जीविताद्व्यपरोपयन्ति । परं[i] सप्तहि[j] भूमीहि तेहि विक्रोशमानेहि सत्वेहि करुणां[k] प्रतिलभित्वा शीलं[l] समादियित्वा राज्यं वा परित्यज्य[m] यद्वा तद्वा ऐश्वर्यं[n] त्यक्त्वा[o] अगारेभ्योऽनगारियं[p] प्रव्रजित्वा[q] प्राणातिपातवैरमणस्य बहुलं
15 धर्मं देशयन्ति ।

भूतपूर्वं[r][s] च भो धुतधर्मधर सप्तमायां भूमौ[t] वर्तमानो[u] अयं परमपुरुषो राजा कुशो नाम बभूव[v] । तस्य देवी अप्रतिमा[w] नाम अभूषी येयं यशोधरा राहुलशिरिस्य[x] माता । यो[y] चायं एतरहि[z] कालपुरुषो देवदत्त:[a][b] सो तदा जठरो[c] नाम प्रदेशराजा[d] बभूव । तां[e] श्रुत्वा देवीमप्रतिमां कामरागो मानसं पर्यादिन्नवां[f] । सो राज्ञ: कुशस्य[g] दूतमप्रेषये ।

20 देहि[h] अप्रतिमां देवीं[i] मम भार्या भविष्यतीति ।
अथ न दासि युद्धं[j] ते सज्जं सज्जय वाहनं[k] ॥२॥

यत्ते[a] व्यवसितं[b] राज तदनु[c][d]प्रेषयस्व मे ।

अथ नानुप्रेषयसि मे स[e]राज्यो व[f]समेष्यसि ॥३॥ Sen. 129

ए[g]तं श्रुत्वा कुशो राजा भा[h]रियामिदमब्रवीत् ।

शृणोहि दे[i]वि जठरस्य वचनं ब्रूहि नि[j]श्चयं ॥४॥

ततो[k] देवी अ[l]श्रुवेगं प्र[m]मुंचित्वा राजानं कुशमुवाच । 5

भद्र[n] वत अहं छेद्ये अहं भेद्ये नराधि[o]प ।

त्व[p]या अनतिरिक्त्वापि शस्त्रे हि पारमिं ग[q]ता ॥५॥

जठर[r]स्य शिरं राज पश्य समकूटं म[s]या ।

छि[t]न्नं रुधिरसं[u][v]क्लिन्नं तव पा[w]देषु वेष्टतु ॥६॥

मया तु ज[x]न्तुना त्यक्तः सो[y]नाहारीकृतं[z] शरः । 10

ज[a]ठरस्य भित्त्वा स्वदेहं भूयो भेत्स्यति,मेदिनीं ॥७॥

अश्वपृष्ठे रथे स्कन्धे[b] वारणस्य कृतं मया ।

यो[c]धनरवराग्रे च ज[d]ठरस्यान्तं कृतं महं ॥८॥

अहं मन्त्रे अ[e]हं सन्ध्या अ[f]हं व[g]चनकर्तृ मे ।

अ[h]घात्यमपि घा[i]तये हेतुभिः कारणैः[j] त[k]था ॥९॥ 15

द्वाभ्यांश्च परिमोक्षेयं अ[l]हमेव निरोपम ।

मम माया ह्य[m]संख्येया लोकः तृ[n]णमयो[o] मम ॥१०॥

गन्धमाल्यधरो राजा प्रा[p]सादतलगो[q]चरः । Sen. 130

स्त्री[r]सहस्रांकमासृत्य यथा च[s] निरुत्सुको सिया इति ॥११॥

अथ भो जिनपुत्र दे[t]वी अप्रतिमा तथारू[u]पं उपायमादे[v]शयि ये[w]नोपायेन राजा 20
ज[x]ठरो विश्वस्त अन्तःपुरं रा[y]ज्ञः कुशस्य प्रविशि वशमुपागतो दे[a]व्या अप्रतिमाया । अथ

सा देवी अप्र[a]तिमा राज्ञो जठरस्य हृ[b]दये प[c]दं दक्षिणं कृत्वा सव्यं पा[d]दं गुल्फे प्रतिष्ठाप्य श्लो[e]कानिमानगासि ।

यां पु[f]ष्पितां वन[g]लतां भ्रमराः पिबन्ति
पुष्पागमे कुसुमरेणुवि[h]चित्रपक्षा ।
नै[i]व त्वया कुपुरुष श्रुतपूर्वरूपं (5)
नात्रापरे मधुकराः प्रणयं क[j]रोन्ति ॥१२॥
यां प[k]द्मिनीं व[l]नगजो अरुहे कदाचित्
पं[m]के जलप्र[n]लुलितां मदनातुराङ्गः ।
न[o]व त्वया कुपुरुष श्रुतपूर्वरूपं
नात्रापरे 'वनगजाः प्रणयं क[p]रोन्ति ॥१३॥ (10)
या[q] भूमिपालमहितस्य उ[r]रे वि[s]तीर्णा
मु[t]क्ताकलाप इव संरमते नि[u]शायां ।
क[v]मलां तुवं व्य[w]वसितो अ[x]नव[y]द्यगात्रीं
प्रा[z]प्तुं महीतलगतो इव पू[a]र्ण[b]चन्द्रमिति ॥१४॥

(15 Sen. 131) अथ खलु भो धुतधर्मधर राजा ज[c]ठरो तस्मि[d] काले विक्रोशति । प्रसीद देवि शरणं प्रयच्छथेति । ता[e]ं दे[f]वीमप्रतिमां कुशो राजा उवाच ।

अभयं ददाहि दे[g]वी कापुरुषस्य श[h]रणं उ[i]पग[j]तस्य ।
तस्य कृ[k]तां[l]जलिपुटस्य या[m]वं एषु हि सतां धर्म इति ॥१५॥

भूतपूर्वं भो धुतधर्मधर एषो भ[n]गवानुग्रो नाम नाग[o]राजा अहितुण्डिकेन म[p]न्त्रौ-षधिबलै[q]र्व[r]शनीतः सम्बाधमापन्नो ब[s]भूव । (20) सो च प्र[t]मा[u]दा[v]त् अहितुण्डिको भ्रष्टमन्त्रो बभूव । अथ तस्य उग्रस्य नागराज्ञो एतदभ[w]वत् । प्रा[x]प्यो खल्व[y]यं मम[z] कापुरुषो भ[a]स्मीकर्तुमिति । अपि तु नै[b]तदस्माकमनुरूपं ध[c]र्मरक्षानुरक्तानामिति । श्लोकानुवाच ।

योऽपि[a] तुवं मम प्राप्यो[b] भस्मीकर्तुं[c] स्वतेजसा ।
भ्रष्टमन्त्रस्य[d] ते[e] देमि अभयं जीव मे[f] चिरमिति ॥१६॥

भूतपूर्वं[g] भो धुतधर्मधर[h] एष[i] एव भगवान्सिंहो मृगराजा एष चायं कुपुरुषदेवदत्तो[j] लुब्धको बभूव । अथैनं सिंहयोग्यावस्थोपवने[k] वनविचारिं[l] एकचरं उपासीनं[m] विश्वस्तं निर्विचेष्टं[n] निर्वृतमपरिपश्यन्तं[o] पूर्वाशयोपचितबद्धवैरः[p] [q] [r] लुब्धको[s] दिग्धेषुणा अविद्ध[t] । 5
सो[u] च विद्धः[v] स्तिमितो गम्भीरधैर्योपपन्नः[w] स्वबले पर्यवस्थितः असन्त्रस्त[x] ईषदुन्नतशिरोधरो[y] Sen. 132
तदा तमसत्पुरुषं[z] भीतं लयनमुपगतं निशाम्य चिन्तामापन्नः[a] । प्राप्यो खल्वयं[b] [c] मम[d] अधमपुरुषो[e] गिरिशिखरगुहावृक्षरसातलगतोऽपि[f] [g] हन्तुं । अपि तु न वरेण[h] वैराणि शाम्यन्ते[i] इति कृत्वा इमं श्लोकमुवाच ।

विषलिप्तेन विद्धोऽहं शरेण मर्मघातिना[j] । 10
अद्यैवं[k] न भवेत्तस्य भीतस्य नास्ति ते भयमिति[l] ॥१७॥

भूतपूर्वं[m] [n] भो धुतधर्मधर एषैव भगवान् सार्थवाहो बभूव संमतः[o] । सार्थो[p] चानेनैव असत्पुरुषेण देवदत्तेन देशिकेन[q] [r] सार्थचौरैरुपस्कृतेन[s] [t] [u] कान्ताराध्वानमार्गप्रतिपन्नः[v] [w] [x] । पूर्ववैरानुषङ्गप्रतिबद्धमानसस्तं[y] सार्थचौरैर्घातापयितुमुपसंक्रान्तः[z] [a] [b] [c] [d] । तैश्च वाणिजैः सार्थवाहप्रमुखैस्ते[e] चौरा[f] निगृहीता देशिकपूर्वंगमाश्च[g] [h] वधमुपनीयन्ता[i] विक्रोशन्ता अशरणाः 15
सार्थवाहमेव[j] शरणमुपगताः[k] देशिकश्च[l] पराधापराद्धः[m] कृतांजलिपुटः[n] [o] सार्थवाहमभयं याचि[p] । तस्य भवशतसहस्रपरिचिता[q] [r] करुणाविहारिणो करुणा समुत्थिता प्राणहरेष्वपि तेषु अभयं दत्त्वा[s] देशिकमुवाच[t] ।

अनुवातं[u] मया मुक्तः[v] धूमो देशं[w] विनाशयेत्[x] ।
देशिकं सह[y] चौरेभ्यः[z] अनुजानामि[a] जीवितमिति ॥१८॥ 20

[a]भूयश्च भो धुतधर्मधर इमिना [b]एव च भगवता [c]राज्ञा सता [d]अग्रमहिष्या: [e]महा-
Sen. 133 पराधापराद्धाया [f]वधस्थानप्राप्ताया: [g]याचिन्त्या [h]अभयं दत्तं । [i]पूर्वोपचितमार्दवार्जवसंपन्न
[j]अग्रमहिषीं शान्त्वयित्वा इमं श्लोकमुवाच ।

[k]हन्तास्या आमपात्रेण शस्त्रं कायेन पातयेत् ।
5 अभयन्ते अहं देमि तच्च स्थानं यथापुरमिति ॥१९॥

[l]एव[m]मादीनि भो धुतधर्मधर दुष्करशतसहस्राणि कृतानि [n]बोधिसत्वेहि [o]ये
अवैवर्तिका एवं कायेन एवं [p]वाचा एवं मनसा । [q]बहुविधगुण[r]युक्ता संसारं संसरन्ता
बोधिसत्वाश्च भवन्ति । अपि तु कर्मवशमुपागम्य [s]गुणसंक्षेप[t]कीर्तितक्रिया ते [u]बोधिसत्वा
भवन्ति । दृढविक्रमा धृतियुक्ता: सत्यप्रतिज्ञा आर्जवा अशठा [v]भवन्ति । अकृपणाश्च
10 [w]भवन्ति । अलोलाश्च [x]भवन्ति । मादवाश्च भवन्ति । सानुक्रोशाश्च विमर्दसहाश्च अपर्या-
दिन्नचित्ताश्च [y]अलोलितचित्ताश्च [z]दुर्धर्षाश्च दुर्जयाश्च सत्वयुक्ताश्च [a]त्यागसंपन्नाश्च
प्रतिज्ञासंपन्नाश्च भवन्ति । [b]प्रतिभानवन्ताश्च विचित्रप्रतिभानवन्ताश्च [c]नयन[d]संपन्नाश्च
अतित्तिगाश्च भवन्ति । [e]परमार्थाभिनिविष्टाश्च [f]भवन्ति । संगृहीतग्राहिणश्च भवन्ति ।
[g]शुचिसमाचाराश्च भवन्ति । [h]आनिंज्यचित्ताश्च [i]भवन्ति । [j]अतीव बहुमान[k]युक्ताश्च भवन्ति ।
15 [l]गुरुजनसज्जनउपचारसंपन्नाश्च भवन्ति । उपायकुशलाश्च भवन्ति । [m]सर्वकार्येषु सन्धि-
[n]ग्रहसंयोजकाश्च भवन्ति । राजकार्येषु [o]पदसन्धिविदुषश्च भवन्ति । [p]परिषास्खलितवचना
उग्रवचनमर्षयितारश्च भवन्ति । ज्ञानकेतवो बहुजन[q]संग्रहकुशलाश्च भवन्ति । समचित्ता
अनुपक्रुष्टवृत्तिद्वाराश्च भवन्ति । [r]प्रसिद्धकर्मान्ता अभ्युपपत्तिकुशलाश्च भवन्ति ।
Sen: 134 परदुःखेषु परिकरणकुशलाश्च भवन्ति । [s]आस्वा[t]दादीनवेषु [u]अशिथिलमधुराश्च कुत्सित-
20 दर्शनेषु [v]दोष[w]समुद्घातकुशलाश्च [x]भवन्ति । [y]परकोपीनच्छादनेषु अपरिखिन्नाश्च भवन्ति ।
फल[z]निर्वृत्यपरिकांक्षिण: रागद्वेषमोहविवेककुशलमूलाश्च भवन्ति । [a]क्लेशव्ययशमा-
[b]भ्युपकारकुशलाश्च भवन्ति । [c]सर्वोपकारिषु विचिकित्सापरिवर्जिताश्च भवन्ति ।

सर्वधर्मेषु[a] अपरिखिन्नसंकल्पाश्च[b] भवन्ति। गम्भीरबुद्धधर्मेषु ईहोपसंपन्नाश्च[c] भवन्ति। परमार्थाधिगमे[d] अनुपलिप्तकायकर्मवाक्कर्ममनोकर्माश्च[e][f] भवन्ति। भवसञ्जीवतत्वे अपरा-[g]मृष्टशुभकर्माश्च भवन्ति। ज्ञानपरमा असंक्लिष्टप्रतिभानाश्च भवन्ति[h]। बुद्धविषयाभि-[i]लाषिणः अप्रत्यादेशनपराश्च[j] भवन्ति। ज्ञानकेतव[k] अखिन्नवचनाः[l] प्रवर्जनाकुशलाश्च भवन्ति। अदुष्टस्वभावगता[m][n] पराभवापगताश्च[o] भवन्ति। विगतसावद्याश्च[p] भवन्ति। त्रिविधौद्धत्यपरिवर्जिताश्च[q] भवन्ति। स्थितलपा[r] अकामकामिनश्च[s] भवन्ति। अमैथुन-[t][u]गामिनः[v] सर्वसत्वसंग्रहणविदुषकाश्च लोकमनुप्रविष्टाः कृतनिश्चयबलाधानाश्च[w] भवन्ति। सर्वकर्मेषु नानास्थानास्थानकुशलाश्च भवन्ति सत्वाद्याश्च[x] इत्येवं :गुणसंपन्ना भवन्ति। पुङ्गवा असंख्येयगुणधीरा[y] सत्वेषु समबुद्धिनो भवन्ति[z] च। अत्र[a] उच्यते।

न शक्यं गगनस्यान्तं गन्तुं सर्वविहंगमैः[b][c]।
न शक्यं सर्वसत्वेहि[d] गुणा ज्ञातुं स्वयम्भुवामिति[e] ॥२०॥

ये च भो धुतधर्मधर लोकहितसुखार्थं[f][g] मन्त्रा[h] वा अगदा वा सत्वानामुपकाराये कल्पेन्ति[i] सर्वे[j] ते बोधिसत्वेहि[k] प्रणीता। यानि च भैषज्यानि लोके प्रचरन्ति सत्वानां हितसुखार्थं[l] सर्वाणि तानि बोधिसत्वेभ्यः उपशिष्टानि[m]। यानि च शास्त्राणि[n] तत्त्वनिश्चय-युक्तानि लोके[o] प्रचरन्ति[p] सर्वाणि तानि बोधिसत्वनीतानि[q]। यच्चेह लोके संख्यागणनं[r] मुद्रास्थानानि च सर्वा[s] एषा बोधिसत्वानां[t] नीति। या[u] वा[v] इमा लोके[w] संज्ञा ब्राह्मी पुष्करसारी[x] खरोस्ती यावनी ब्रह्मवाणी[y] पुष्पलिपी[z] कुतलिपी शक्तिनलिपी[a] व्यत्यस्तलिपी लेखलिपी[b] मुद्रालिपी[c] उकरमधुरदरदचीणहूणापीरा[d] वङ्गा सीफला[e] त्रमिदा दर्दुरा रमठ-भयवैच्छेतुका[f] गुल्मला हस्तदा कसूला[g] केतुका कुसुवा[h] तलिका जजरिदेषु अक्षबद्धं[i] सर्वा एषा[j] बोधिसत्वानां[k] नीति। कनकरजतत्रपुताम्रसीसमणिरतनक्षेत्राणि[l][m][n] सर्वाण्येतानि[o] बोधिसत्वानां[p] नीतिः। यानि यानि[q] च कारणानि लोकस्य उपकाराये कल्पेन्ति[r] सवाण्येतानि बोधिसत्वनीतानि[s]। तत्रेदमुच्यते[t]।

[a]लोकस्य अर्थविदुषः पुरुषप्रधानाः
संसारमप्रतिसमाः परिवर्त[b]मानाः ।
श्रेयश्चर[c]न्ति मरुमानुषगुह्यकानां
[d]परमो हि समुदागम ईश्वराणामिति ।।२१।।

5 Sen. 136 एवमुक्ते [e]आयुष्मान्महाका[f]श्यप आयुष्मन्तं महाकात्यायनमुवाच । [g]ये ते भो जिनपुत्र अवैवर्तिकास्तेषां किं चित्तमुत्पद्यते । [h]एवमुक्ते आयुष्मान्महाकात्यायन आयुष्मन्तं महा[i]काश्यपमुवाच । [j]ये ते भो धुतधमधर बोधिसत्वा अवै[k]वर्तिकास्तेषां [l]सप्तमातो भूमितो [m]अष्टमां भूमिं संक्रमन्[n]तानां महाकरुणासंप्रयुक्तं चित्तमुत्पद्यते ।

[o]इत्येषा सप्तमा भूमि बोधिस[p]त्वानमुच्यते इति ।

10 इति श्रीमहावस्तुअवदाने [q]सप्तमा भूमिः समाप्ता ।।

[r]एवमुक्ते [s]आयुष्मान्महा[t]काश्यप आयुष्मन्तं महाकात्यायनमुवाच । भगवता भो जिनपु[u]त्र सम्यक्संबुद्धेन शाक्यमुनिना प्रथमाद्वितीयातृतीयाच[v]तुर्थापंच[w]माष[x]ष्ठासप्तमासु भूमिषु वर्तमानेन [y]येषु सम्यक्संबुद्धेषु कुशलमवरोपितं तेषां सम्यक्संबु[a]द्धानां कानि नामानीति । [b]एवमुक्ते आयुष्मान्महाकात्यायन आयुष्मन्तं महाकाश्यपमुवाच । येषु
15 भो धुतधर्म[c]धर सम्यक्संबुद्धेषु भगवता शाक्य[d]राज[e]वंशप्रसूतेन कुशलमूलमुपचितं तेषां [f]विपुलबलवरकीर्तिनां [g]नामानि [h]शृणु । प्रथमतः [i]सत्यधर्मविपुलकीर्तिः [j]ततः [k]सुकीर्तिः लोकाभरणः विद्यु[l]त्प्रभः इन्द्रतेजः ब्रह्मकीर्तिः वसुन्धरः सुपा[m]र्श्वः अनुपवद्यः [n]सुज्येष्ठः [o]सृष्टरूपः प्र[p]शस्तगुणराशिः मेघस्व[q]रः हेमवर्णः सुन्दरवर्णः मृगराजघो[r]षः आ[s]शुकारी धृ[t]तराष्ट्र-गतिः लोका[u]भि[v]लाषितः जितशत्रुः सुपूजितः [w]यशराशिः अमिततेजः सूर्यगुप्तः चन्द्रभानुः
20 Sen. 137 [x]निश्चितार्थः कुसुमगुप्तः [y]पद्माभः प्रभंकरः दीप्ततेजः [z]सत्वराजा गजदेवः कुञ्जरगतिः [a]सुघोषः समबु[b]द्धिः हेम[c]वर्णलम्बदामः कुसुमदामः रत्नदामः अलंकृतः विमुक्तः ऋषभगामी [d]ऋषभः

देवसिद्धयात्रः[a] सुपात्रः सर्वबन्धः रत्नमकुटः[b] चित्रमकुटः[c] सुमकुटः[d] वरमकुटः[e] चलमकुटः[f] विमल-
मकुटः लोकंधरः[g] विपुलोजः[h] अपरिभिन्नः पुण्डरीकनेत्रः[i] सर्वसहः[j] ब्रह्मगुप्तः सुब्रह्मः अमरदेवः
अरिमर्दनः चन्द्रपद्मः[k] चन्द्राभः चन्द्रतेजः सुसोमः समुद्रबुद्धिः रतनश्रृङ्गः[l] सुचन्द्रदृष्टिः
हेमक्रोडः[m] अभिन्नराष्ट्रः[n] अविक्षिप्तांशः[o] पुरंदरः[p] पुण्यदत्तः हलधरः[q] ऋषभनेत्रः[r] वरबाहुः[s]
यशोदत्तः कमलाक्षः दृष्टशक्तिः[t] नरंप्रवाहः[u] प्रनष्टदुःखः[v] समदृष्टिः दृढदेवः यशकेतुः चित्र-
च्छदः चारुच्छदः लोकपरित्राता[w] दुःखमुक्तः[x] राष्ट्रदेवः रुद्रदेवः भद्रगुप्तः[y] उदागतः[z] अस्खलि-
तप्रवराग्रः धनुनाशः धर्मगुप्तः[a] देवगुप्तः[b] शुचिगात्रः[c] प्रहेतिः[d] प्रथमशतमार्यपक्षस्य।[e]

भगवान्धर्मधातुः[f] गुणकेतुः ज्ञानकेतुः सत्यकेतुः[g] पुष्पकेतुः[h] वज्रसंघातः[i] दृढहनुः
दृढसन्धिः[j] अत्युच्चगामी[k] विगतशत्रुः चित्रमालः[l] ऊर्ध्वसधिनः[m] गुणगुप्तः ऋषिगुप्तः[n] प्रलम्बबाहुः
ऋषिदेवः सुनेत्रः सागरधरपुरुषः सुलोचनः अजितचक्रः उन्नतः[o] अजितपुष्यलः[p] पुराषः
मङ्गल्यः मुभुजः सिंहतेजः तृप्तवसन्तगन्धः अवध्यपरमबुद्धिः नक्षत्रराजः बहुराष्ट्रः[q] आर्याक्षः[r]
सुगुप्तिः प्रकाशवर्णः[s] समृद्धराष्ट्रः[t] कीर्तनीयः[u] दृढशक्तिः हर्षदत्तः[v] यशदत्तः नागबाहुः विगत-
रेणुः शान्तरेणुः दानप्रगुरुः उदात्तवर्णः[w] बलबाहुः[x] अमितौजः[y] धृतराष्ट्रः[z] देवलोकाभिलाषितः[a]
प्रत्यग्ररूपः देवराजगुप्तः दामोदरः धर्मराजः चतुरस्रवदनः[b] योजनाभः[c] पद्मोष्णीषः[d] स्फुट-
विक्रमः राजहंसगामी[e] स्वलक्षणमण्डितः[f] शितिचूडः मणिमकुटः[g] प्रशस्तवर्णः देवाभरणः[h]
कल्पदुष्यगुप्तः[i] साधुरूपः अक्षतबुद्धिः लोकपद्मः गम्भीरबुद्धिः[j] शक्रभानुः[k] इन्द्रध्वजः
दानवकुलः मनुष्यदेवः मनुष्यदत्तः सोमछत्रः आदित्यदत्तः[l] यामगुप्तः[m] नक्षत्रगुप्तः[n] सुमित्ररूपः
सत्यभानुः[o] पुष्यगुप्तः[p] वृहस्पतिगुप्तः[q] गगनगामी[r] शुभनाथः सुवर्णः कनकाक्षः प्रसन्नबुद्धिः[s]
अविप्रनष्टराष्ट्रः[t] उदग्रगामिः[u] शुभदन्तः[v] सुविमलदन्तः सुवदनः कुलनन्दनः जनक्षत्रियः
लोकक्षत्रियः[w] अनन्तगुप्तः[x] धर्मगुप्तः[y] सूक्ष्मवस्त्रः[z] द्वितीयं शतमार्यपक्षस्य।[a,b] प्रत्यासन्नबुद्धिः[c]
सत्वसहः मनुष्यनागः[d] उपसेनः सुवर्णचारी[e] प्रभूतवर्णः सुभिक्षाकान्तः[f] भिक्षुदेवः प्रबुद्ध-

शीलः[a] नहीनगर्भः[b] अनालम्भः[c] रतनमुद्रः हारभूषितः प्रसिद्धवेदनः[d][e] सुगन्धिवस्त्रः[f] सुविजृम्भितः[g]
अमितलोचनः [h]उदात्तकीर्तिः[i] सागरराजः मृगदेवः कुसुमहेस्थः[j] रत्नशृङ्गः[k] चित्रवर्णः[l]
पद्मरजवणः समन्तगन्धः[m] उदारगुप्तः प्रशान्तरोगः प्रदक्षिणार्थः[n] संक्षिप्तबुद्धिः अनन्तच्छत्रः[o]
योजनसहस्रदर्शी उत्पलपद्मनेत्रः अतिपुरुषः अनिर्वर्तिकबलः[p] स्वगुणशाखः[q] संचितोरः
5 Sen. 139 महाराजः चारुचरणः[r] प्रसिद्धरंगः[s] त्रिमङ्गलः[t] सुवणसेनः वर्तिताथः[u] असंकीर्णः देवगर्भः
सुप्रीत्यरतिः विमानराजा[v] परिमण्डनार्थः[w] देवसत्वः विपुलतरांशः[x] सलीलगजगामी
विरूढभूमिरिति[y] ।

इति श्रीमहावस्तुअवदाने अष्टमा[z] भूमिः समाप्ता ॥

ततो भूयो[a] धुतधर्मधर अतो[b] नन्तरं भगवाश्चित्रभानुः[c][d] चारुभानुः[e] दीप्तभानुः
10 रुचितभानुः[f] असितभानुः[g][h] हेमरथः चामीकरगौरः[i] रजकरथः[j] सुयक्षः अक्षोभ्यः[k] अपरि-[l]
श्रोतवाहनः देवालंकृतः सुभूषितखण्डः[m][n] शिथिलकुण्डलः[o] मणिकर्णः[p] सुलक्षणः सुविशुद्धः
विमलजेन्द्रः[q] देवचूडः[r] मन्दारवगन्धः[s] पतंगचरः[t] चारुगन्धः इन्द्रचूर्णः[u] शैलराजकेतुः[v]
अरिमर्दनः मणिचक्रः विमलोत्तरीयः सत्याभरणः दृढवीर्यः नन्दिगुप्तः[w] आनन्दमालः[x]
चक्रवालगुप्तः दृढमूलः[y] आनन्दचन्द्रः[z] ब्रह्मध्वंसदेवः[a] सौम्भवत्सबाहुः[b] समीक्षितवदनः[c]
15 सत्यावतारः सुप्रतिष्ठितबुद्धिः हारशीतलांगः सुखप्रभः[d] भूरिसत्वः[e] भद्रगुप्तः[f] चन्द्रशुभः
भद्रतेजः[g] इष्टरूपः[h][i] चक्रवर्तिदत्तः[j] सुविचक्षणगात्रः वैश्रावणराजा[k][l] समृद्धयज्ञः[m] संमतरश्मिः[n]
दर्शनक्षमः[o] स्रजमालाधारी[p][q] सुवर्णविषाणः भूतार्थकेतुः रत्नरुधिरकेतुः[r] महार्षचूडः[s][t]
तेजगुप्तः वरुणराजः[u] उदात्तवस्त्रः[v] वज्रगुप्तः धन्यभानुः[w] उत्तप्तराष्ट्रः[x] विशालप्रभः[y] लोक-
Sen. 140 सुन्दरः[z] अभिरूपः[a] हिरण्यधन्यशिरिकः[b][c] प्रभूतदेहकर्णः[d] प्रागजितः[e] विचित्रमकुटः[f] दानवगुप्तः
20 राहुवमी[g] पुण्यराशिः[h] सलिलगुप्तः[i] शमितशत्रुः रत्नयूपः[j] सुविकल्पाङ्गः[k] अजितबलः
सत्यनामः[l] अविरक्तराष्ट्रः[m] वैश्वानरगुप्तः[n] मधुरवदनः कुसुमोत्पलः[o] उत्तरकुरुराजः अञ्जलि-[p]
मालाधारी धनपतिगुप्तः तरुणार्कभानुः अनुरुपगात्रः[q] रन्तकरण्डकेतुः महाकोशः बहुलकेशः

[a]पुष्पमञ्जरिमण्डितः [b]अनपविद्धकर्णः अनाविद्धवर्णः सितासितलोचनः [c]अरक्तप्रवाडः सिंहो-
[d]रस्कः अरिष्टनेमिः [e]बहुराजा । नवमायां [f]भूमौ [g]प्रथमं शतमार्यपक्षे ।

भूमिदेवः पुण्डरीकाक्षः साधुप्रभः ज्योतिगुप्तः [h]वसुप्रभः सत्यंवचः भवदेवगुप्तः संवृत्त-
[i]तेजः [j]निरुपघातः [k]जानुत्रस्तः रत्नशयनः कुसुमशयनः चित्रशयनः दन्तशयनः [l]सुप्रतिष्ठितचरणः
सर्वदेवगुप्तः [m]अरजो[n]त्तरीयः स्वायंभवेन्द्रः प्रसन्नवणः भवकेतुः [o]क्षीरपूर्णाम्भः अनन्तबुद्धिः 5
[p]कनकनागराज[q]तेजः बन्धनान्तकरः अनुग्रवर्णक्षेमगुप्तः जिनकान्तारः [r]विमलः मरीचिजालः
[s]अजितसेनराजा [t]कनकराशिः गौरः पद्ममालः राजक्षेत्रगुप्तः [u]समपक्षः [v]चातुर्देवः देवगुप्तः
[w]पुष्कलाङ्गः द्विजातिराजः बहुसेनः [x]कुमुदगन्धः [y]शबलाश्वः षड्विषाणपातः [z]सुरभिचन्दनः
राजा [a]सहस्रदाता [b]अभयदेवः [c]अरिनिहन्ता [d]विमलशिखरः [e]दुरारोहबुद्धिः यज्ञकोटिगुप्तः
[f]रत्नचंक्रमः [g]जालान्तरः परिशुद्धकर्मः कामदेवः [h]गुरुरत्नः शत[i]सहस्रमाता शुचि[j]प्ररोहः स्तिमि- 10 Sen. 141
तरराजा वृद्धदेवः [k][l]गुरुजनपूजितः जयन्तदेवः [m]सुजातबुद्धिः [n]समीक्षितार्थः उज्झितपरः
[o]देवाभिकः असुरदेवः गन्धर्वगीतः [p]वीणा[q]रवघोषः शुद्धदन्तः सुदन्तः चारुदन्तः [r]अमृतफलः
[s]मार्गोद्योतयिता [t]मणिकुण्डलधरः [u]हेमजालप्रभः नागभोगबाहुः कमलधरः अशोकसत्वः
लक्ष्मीपुत्रः [v]सुनिर्[w]मितरूपः ईश्वरगुप्तः [x]लोकपाल[y]राजा सुनिध्यानः [z]अग्रपुरुषः [a]अनिहतवर्णः
कुन्द[b]पुष्पगन्धः [c]अंकुशः आर्द्रवल्लिप्रतिरूपः कार्यताविचारः स्वतेजदीप्तः [d]प्रकाशधर्मः आर्य- 15
वंशकेतुः [e]देवराजप्रभः [f]प्रत्यक्षदेवः अहिभानुरागः [g]कुसुमोत्तरीयः अविरसः [h]प्रथमराजा
पुण्डरीक[i]राजा [j]सुभिक्षराजः ।

[k]द्वितीयो [l][m]आर्यपक्षः नवमायां भूमौ । स्निग्धगात्रः [n]परमार्थसत्वः अक्लिन्नगात्रः
धर्मशूरः सुतीर्थः लोकालोकनिहितमल्लः [o]कुन्दपुष्पगन्धः निरंकुशः [p]अनोतप्तगात्रः
[q]उपाध्यायराजा [r]प्रवराग्रमतिः अनभिभूतयशः [s]अनुपच्छिन्नालम्भः देवगुरुः [t]रत्नपुष्पः 20
शुद्धसत्वः [u]वैडूर्यशिखरः चित्रमाल्यः [v]सुगन्धकायः अनन्तकोशः सममथितः सत्यप्रभः

अदीनगामी[a] सुविक्रान्तः असंभ्रान्तवचनः गुरुदेवः नरदेवः नरवाहनः रत्नहस्तः[b] लोकप्रियः[c] परिन्दितार्थः[d] अविशुष्कमूलः अपरितृषितः सर्वशिल्पराजः[e f] ग्रहकोशः अनुरक्तराष्ट्रः[g] शिवदत्तमालः[h] शिखरदत्तः[i] चित्रमालः महाविमानः अनोतप्तगात्रः[j] चित्रहेमजालः शान्तरजः संगृहीतपक्षः[k] अप्रकृष्टः[l] रक्तचन्दनगन्धः अचलितसुमनः[m] उपचितहेतु[n o] ज्वलितयशा रचितमालः शिरमकुटः[p] तेजगुप्तराजा[q] ।

इति श्रीमहावस्तुअवदाने नवमी भूमिः समाप्ता ॥

Sen. 142 एवमुक्ते[r] आयुष्मान्महाकाश्यप[s] आयुष्मन्तं महाकात्यायनमुवाच[t] । ये पुनर्भो-जिनपुत्र बोधिसत्वाः परिपिण्डितकुशलमूलाः[u] कृतकर्माणः[v] नवमां भूमिं समतिक्रम्य[w] दशमां भूमिं परिपूरयित्वा तुषितभवनमुपगम्य मनुजभवमभिकांक्षमाणाः[x] मातुः कुक्षिम-वतरन्ति[y] अपुनावर्तमेवमादीनि कृत्वा संकीर्तय परमपुद्गलानामाश्चर्याद्भुतधर्मा[z] असाधारणा[a] प्रत्येकबुद्धादिभिः[b] वशिभूतगणादिभिश्च शैक्षपृथग्जनादिभिश्चेति[c] । एवमुक्ते[d] महाकात्यायन आयुष्मन्तं[e] महाकाश्यपमुवाच । गर्भावक्रान्तिसंपन्नाश्च[f g] सम्यक्संबुद्धा[h] भवन्ति । गर्भस्थितिसंपन्नाश्च जातिसंपन्नाश्च । जनेत्रीसंपन्नाश्च भवन्ति सम्यक्संबुद्धाः । अभिनिष्क्रमणसंपन्नाश्च[i j] भवन्ति सम्यक्संबुद्धाः । वीर्यसंपन्नाश्च[k] भवन्ति[l] सम्यक्संबुद्धाः[m] । ज्ञानाधिगमनसंपन्नाश्च भवन्ति सम्यक्संबुद्धाः[n] ।

कथं भो धुतधर्मधर गर्भावक्रान्तिसंपन्नाः[o p] सम्यक्संबुद्धा भवन्ति[q] ।

तुषितभवना[r s] शिरिवनो पुरिमकुशलमूलसंचयो वीरः[t] ।
अवलोकयति अतिशयेनोलोकितानि[u] च्यवनकाले[v] ॥१॥
चिन्तयति[w] एवं[x] हितकरो चिन्तामर्थावहां[y] नरमरूणां[z] ।
अमरवरसंपरिवृतो देवगणगुरुर्महापुरुषो[a b] ॥२॥
च्यवितुं[c] समयो[d] खु दानि मे[e] संप्रति सत्वा महान्धकारगता[f] ।
हृतनयना[g] कलुषनयना मां प्राप्य तस्माद्विमुच्यन्ते[h] ॥३॥

का दानि शीलसंवरे एवं नारी रता उपशमे च । Sen. 143

अग्रकुलीना सुवचा त्यागरुचिमार्दववती च ॥४॥

तेजस्विनी च······का नु खलु हततमरागदोषा च ।

रूपगुणपारमिगता अहीनवृत्ता विपुलपुण्या ॥५॥

का मां समर्था धारयितुं दश मासां का च प्रत्यरहसौख्या ।

भवे मम का नु जननी कुक्षिमहमुपमि कस्याद्य ॥६॥

पश्यति विलोकयन्तो राज्ञो शुद्धोदनस्य ओरोधे ।

नारीममरवधुनिभां विद्यु्ल्लतानिभां अथ मायां ॥७॥

सो तां निशाम्य जननीमामन्त्रयति अमरान् च्यविष्यामि ।

अन्तिममुपेत्य वासं गर्भे सुरमानुषहितार्थं ॥८॥

तं अवच देवसंघो कृतांजलिपुटो वराभरणधारी ।

ऋध्यतु उत्तमपुद्गल प्रणिधि तव अहीनगुणपुण्या ॥९॥

वयमपि लोकहिता बहु मनोरमां ओशिरित्वा कामरतिं ।

पूजार्थमनिन्दितस्य मनुष्यलोके वसिष्यामो ॥१०॥

किं चापि विप्रयोगं त्वया न इच्छाम भूतसंघगुरु ।

अपि तु अरविन्दनयना भविष्यसि गती नरमरूणां ॥११॥

एवं खलु भो धुतधर्मधर सम्यक्संबुद्धा गर्भावक्रान्तिसंपन्नाश्च भवन्ति । Sen. 144

कथं च भो धुतधर्मधर सम्यक्संबुद्धा गर्भस्थितिसंपन्ना भवन्ति । बोधिसत्वाः खलु भो धुतधर्मधर मातुः कुक्षिगता मातुर्योनिं निश्राय तिष्ठन्ति । मातुः पृष्ठं निश्राय तिष्ठन्ति । मातुरुदरं निश्राय तिष्ठन्ति । मातुः पार्श्वं निश्राय तिष्ठन्ति । विष्टम्भितया भो धुतधर्मधर कुसूत्रं प्रवाडवैडूर्यमणिमुपालम्ब्य न क्वचिदुपलभ्यते प्रदेशस्तु अस्ति सर्वशस्तथा बोधिसत्वा मातुः कुक्षौ न तिष्ठन्ति तिष्ठन्ति च । बोधिसत्वं पुनः खलु

भो धुतधर्मधर मातुः कुक्षिगतं देवसंघाः उपसंक्रम्य [a]पृच्छन्ति [b c]प्रह्वाः [d e]कृतांजलिपुटाः [f]सुमुहूर्तं [g]सुदिवसं [h]प्रीतमनसः। तां च देवसंघान्तथा पृच्छमानां [i]बोधिसत्वा प्रत्यभि-[j]नन्दन्ति [k]दक्षिणकर[l]मुत्क्रुष्य [m]मातरं च [n]न [o]बाधन्ति। न खो [p]पुनर्भो धुतधर्मधर बोधिसत्वा मातुः [q]कुक्षिगता [r]उत्कुटकेन [s]पार्श्वेन वा यथा [t]कथंचिद्वा [u]स्थिता भवन्ति। अथ खलु भो

5 धुतधर्मधर बोधिसत्वाः [v]पर्यङ्कमाभुंजित्वा [w]निषण्णा भवन्ति [x]मातरं च न [y]बाधन्ति। बोधिसत्वाः खो पुनर्भो धुतधर्मधर मातुः [z]कुक्षिगता व सन्तो भववादिकथां [a]कथयन्ति कुशलमूलत इति।

बोधिसत्वस्य खलु [b]पुनर्भो धुतधर्मधर [c]मातुः कुक्षिगतस्य पूजार्थं सततसमितं दिव्यानि [d]तूर्याणि वाद्यन्ति न [e]कदाचिद्दिवा वा रात्रौ वा [f]तिष्ठन्ति। बोधिसत्वं च भो

10 Sen. 145 धुतधर्मधर मातुः कुक्षिगतं [g]पूजार्थं अप्सरशतसह[h]स्राणि सन्दर्शयन्ति [i]दिव्यं [j]पुष्पवर्षं दिव्यं [k]चूर्णवर्षं नोपर[l]मन्ते कदाचित्। मातुः कुक्षिमादौ कृत्वा बोधिसत्वानां यावत्परिनिर्वृता [m]दशबला च [n]दिव्या च [o]अगुरुधूपा नोपरमन्ति। न खलु भो धुतधर्मधर बोधिसत्वा मातापितृ[p]निर्वृत्ता भवन्ति। अथ खलु स्वगुण[q]निर्वृत्ता उपपादुका भवन्ति। तत्रेदमुच्यते।

[r]अथ सा कमलदलनयन अनुबद्धा गन्धर्वबहुभि श्यामा।

15 [s]सहितं पि तं सुमधुरं [t]शुद्धोदनमब्रवीत् माया ॥१२॥

[u]एषा समादियामि प्राणेहि अहिंसं [v]ब्रह्मचर्यं च।

[w]विरमामि [x]चाप्यदिन्ना [y]मद्यादनि[z]बद्धवचनाच्च ॥१३॥

परुषवचनाच्च [a]नरवर [b]प्रतिविरमामि तथैवं [c d]पैशुन्या।

[e]अनृतवचनाच्च नरपति विरमामि अयं मम [f]छन्दो ॥१४॥

20 परकामे[g]षु च ईर्ष्यां न संजने[h]ष्यं नापि अभिद्रोहं।

भूतेषु [i]मैत्रचित्ता मिथ्यादृष्टिं च विजहामि ॥१५॥

एकादशप्रकारं शीलं[a] सेवाम्यहं पृथिवीपाल ।

रजनी[b]मिमामनूनामेवं[c] मे जायते[d] छन्दो[e] ॥१६॥

अपि[f] च खलु भूमिपाला[g] कामवितर्को[h] मा मां प्रतिकांक्षि ।

प्रेक्षख[i] मा ति अधर्मो[j] भवेय मयि ब्रह्मचारिणिये ॥१७॥

संकल्पं[k][l] प्रपूरेष्यन्ति पार्थिवो[m] भारियामिदमवोचत् । 5

अभिरम भवनवरगता[n] अहं च राज्यं च ते वश्यं ॥१८॥ Sen. 146

सा[o] स्त्रीसहस्रमग्रं[p] अनुरक्तं गृह्य[q] तं विमानवरं[r] ।

अभिरुह्य सन्निषीदे[s] मनापपरिपूर्णपरिवारा[t][u] ॥१९॥

सा[v] कंचिदेव[w][x] कालं तस्मि हिमपाण्डुपुण्डरीकनिभे[y][z] ।

शयने प्रशमदमरता[a][b] तुष्णीभावेन[c] क्षेपयते[d] ॥२०॥ 10

अथ कौतुहलमनो[e] संजनिया[f] बहुदेवकन्या[g] वरमाल्यधराः[h] ।

जिनमातुः उपगता द्रष्टुमना[i] प्रासादसुन्दराग्रेण स्थिता[j] ॥२१॥

उपसंक्रमित्व[k] शयनोपगतां मायां निशाम्य[l] वरविद्यु[m]निभां[n] ।

प्रीतिसुखं विपुलं[o] संजनिया[p] अथ[q] संप्रवर्षि दिविजं[r] कुसुमं ॥२२॥

मानुष्यकं[s] पि किल[t] ईदृशकं[u] रूपं सुजातमिदमाश्चर्यं[v] । 15

कंचित्कालं[w] स्थिहिय अन्तरतो नायं समा मरुवधूहि भवे ॥२३॥

लीलां[x] निशामयथ हे सखिका प्रमदाये[y] यादृशीं यथोपयिकां ।

शयने[z] विरोचति[a] मनं हरति विभ्राजते कनकरीतिरिव[b] सा ॥२४॥

इयं[c] तं धरेष्यति महापुरुषं अत्यन्तदानदमशीलरतं[d][e] ।

सर्वाश्रवान्तकरणं[f] विरजं[g] किं ह्रायते तव नरेन्द्रवधू[h][i] ॥२५॥ 20 Sen. 147

चापोदरे[j] करतलप्रतिमे[k] वररोमराजिनि चित्रस्तवने[l] ।

इह वासमभ्युपगतो वरदो अविम्रक्षितो अशुचिना भगवां ।।२६।।
अनुरूपा त्वं च प्रमदा प्रवरा माता स चैव पुरुषप्रवरो ।
पुत्रो भवान्तकरणो भगवां किं हायते तव नरेन्द्रवधू इति ।।२७।।

यस्यां खलु भो धुतधर्मधर जातीयां बोधिसत्वमातरो चरमभविकं बोधिसत्वं धारयन्ति तस्यां जातौ प्रमदावराणां परिशुद्धं परिपूर्णमखण्डं ब्रह्मचर्यं भवति । मनसापि तासां प्रमदोत्तमानां रागो नोत्पद्यते सर्वपुरुषेषु भर्तारमादौ कृत्वा । बोधिसत्वे च भो धुतधर्मधर मातुः कुक्षिगते बोधिसत्वमाता दिव्यवस्त्रसंवृतशरीरा च भवति दिव्याभरणधारिणी च सुस्नातोच्छादनपरिमर्दनपरिषेकं च अप्सरोगणाः बोधिसत्वमातुः प्रतिजागरन्ति । बोधिसत्वे मातुः कुक्षिगते बोधिसत्वमातुः देवकन्याशतसहस्र हि सार्धं हास्यं भवति । तथा प्रसुप्तां च बोधिसत्वमातरं देवकन्या मन्दारवपुष्पदामैः परिवीजयन्ति अग्रयौवनमण्डप्राप्ता । यदा च तस्या प्रमदोत्तमायाः बोधिसत्वः कुक्षिमवतरति न बोधिसत्वमाता कानिचिद्दुःखान्यनुभवति यथान्या प्रमदा । तुषितभवनमादौ कृत्वा सर्वेषां बोधिसत्वानां पंच नीवरणानि विष्कम्भितानि भवन्ति अप्राप्ते धर्मराज्ये । परिपूर्णेहि च दशहि मासेहि सर्वे बोधिसत्वाः मातुः कुक्षौ प्रादुर्भवन्ति दक्षिणेन पार्श्वेन न च तं पार्श्वं भिद्यते । न चात्र किंचिद्विलम्बं भवति जात इत्येवं भवति । तत्रेदमुच्यते ।

अथ प्रतिपूर्णे दशमे मासे माता प्रभूतपुण्यस्य ।
शुद्धोदनं उपगम्य इदमब्रवीत् दृष्टसंकल्पा ।।२८।।
उद्यानगमनबुद्धी उत्पन्ना मे नराधिपा शीघ्रं ।
सज्जेहि वाहनं मे यथोचितां चैवमारक्षां ।।२९।।
एतं श्रुत्वा वचन राजा शुद्धोदनो सुप्रीतमनो ।

आलपति[a] साभिलाषं परिवारवरं[b] पृथिविपालो[c] ।।३०।।
शीघ्रं गजतुरगवतीं[d] सेनां पदातिसमाकुलां[e] विपुलां[f] ।
प्रासशरशक्तिचित्रां[g] सज्जिय[h] प्रतिवेदयध्वं मम ।।३१।।
चतुघोटान[i] तथ[j] अश्वरथान दशशतसहस्रा[k] युज्यन्तु ।
प्रवरा[l] काञ्चनघण्टारवाणि मधुरानुनादानि[m] ।।३२।। 5
अंजनघनसदृशानां नागानां[n] वर्मधारिणां[o] शीघ्रं[p] ।
प्रतिधेयथ[q] अधिमात्रा सज्जानि दशशतसहस्राणि[r] ।।३३।।
आयुक्तवर्मकवचा[s][t][u] शूरा सज्जीभवन्तु[v] अनिवर्त्या ।
सज्जीभवन्तु चपलं विंशत्साहस्त्रियो[w][x] तेषां[y] ।।३४।।
विपुल[z] सकिंकिणिरणितं सहेमजालं[a] उडारअश्वरथं[b] । 10 Sen. 149
वरमाल्यवस्त्रधारिणो[c] प्रमदा[d] धारेन्तु[e] देवीये ।।३५।।
लुम्बिनिवनं[f][g] च शीघ्रं व्यपगततृणरेणुपत्रसंकारम्[h][i] ।
सुशोधितं मनोज्ञं[j] कुरुत देवीये देवभुवनं[k] वा ।।३६।।
एकैकं[l] च द्रुमवरं[m] दुकूलपट्टोर्णकोशिकारेहि[n] ।
कल्पयथ कल्पवृक्षां[o] यथा दिवि देवप्रवरस्य ।।३७।। 15
साधूति प्रतिश्रुत्वा ,तस्य[p] वचनेन[q] नरेन्द्रगर्भस्य ।
नचिरेण यथाज्ञप्तं कृतमिति प्रतिवेदितं राज्ञः[r] ।।३८।।
सा[s] सलीलचारुवदना[t] माता[u] मारबलसंप्रमथनस्य[v] ।
अभिरूहि[w] सपरिवारा तानि मनोज्ञानि यानानि ।।३९।।
सा विविधाभरणवती[x] पादौघरथौघसंकुला[y]········ । 20
शोभति सुसंप्रयाता[z] सेना मनुजप्रधानस्य ।।४०।।
अवगाह्य[a] तद्वनवरं[b] माया सखिसंवृता[c] जिनजनेत्री[d] ।

विचरति[a] चित्ररथे[b] इव अमरवरवधू रतिविधिज्ञा[c] ॥४१॥
सा क्रीडार्थ[d]मुपगता[e] प्लाक्षां शाखां भुजेभिरवलम्ब्य[f] ।
प्रतिजृम्भिता[g] सलीलं तस्य यशवतो[h][i] जननकाले[j] ॥४२॥
अथ विंश[k] सहस्राणि[l] अप्रतिमानि[m] तदाप्सरवराणां[n] ।
दशनखकृतांजलिपुटा[o][p] मायामभिनन्दिय[q] भणन्ति ॥४३॥
Sen. 150
अद्य[r] जराजातिमथनं जनयिष्यसि[s] अमरगर्भसुकुमारं[t][u] ।
देवी दिवि भुवि[v] महितं हितं हितकरं नरमरूणां[w] ॥४४॥
मा खु जनयी[x] विषादं परिकर्म वयं तवं करिष्यामः ।
यत्कर्तव्यमुदीरय[y] दृश्यतु कृतमेव[z] मा चिन्ता ॥४५॥
मातरमबाधमानो प्रादुर्भूतो[a] मनापो[b] मायाये ।
दक्षिणपार्श्वेन मुनिः[c] सुसंप्रजानो परमवादी ॥४६॥
अथ विविधरतननिचया[d] नगरनगरा अनेकसहस्राणि[e] ।
प्रज्वलि[f] प्रभा च विमला प्रादुर्भूते[g] नरवरेन्द्रे[h] ति ॥४७॥

न खलु भो धुतधर्मंधर सो[i] अस्ति[j] सत्वो सत्वनिकाये यो चरमां जातिं समनन्तरजातं बोधिसत्वं समर्थो[k] व्याकर्तुं[l] अन्यत्र[m] शुद्धावासेभ्यो[n][o] देवेभ्यः। तत्रेदमुच्यते ।

अंशुकसुवेष्टितशिरा[p][q] अष्ट सहस्रा महेश्वरवराणां[r][s] ।
ब्राह्मणवेषधराणां[t][u] अभिगच्छि पुरं कपिलवस्तु ॥४८॥
ते राजकुलद्वारे[v][w] वरवसनधरा[x] वराभरणधारी[y] ।
उपगम्य[z] मुदितमनसा[a] प्रतिहारमुवाच[b] सत्ववरा[c] ॥४९॥
शुद्धोधनमुपगम्य ब्रूवीहि[d] इमे लक्षणगुणविधिज्ञा[e] ।
तिष्ठन्ति अष्टसहस्रं प्रविशेदिति[f] यद्यनुमतन्ते[g] ॥५०॥

[a]एतं श्रुत्वा वचनं प्रतिहाररक्षो उपेत्य [b]राजवरं ।
[c]कृतांजलिपुटः प्रणम्य [d]इदं उवाच नराधिपतिं ॥५१॥ Sen: 151
[e]सुखं [f]अतुलबल [g]दीप्तिद कारय [h]राज्यं चिरं [i]निहतशत्रुः ।
[j]द्वारे ते [k]अमरसदृशा तिष्ठन्ति [l]प्रवेष्टुमिच्छन्ति ॥५२॥
[m]प्रतिपूर्णविमल[n]नयना मधुरस्वरमत्तवारणविचारी । 5
भवति मम [o]तेषु संका न ते मनुष्या मरुसुतास्ते ॥५३॥
[p][q]परि[r]चंक्रमतां तेषां धरणिरजः [s]क्रमवरा न [t]संकिरति ।
न च तेषु [u]सन्धिशब्दः चंक्रमतां श्रुय्यति [v]कदाचित् ॥५४॥
गम्भीर[w]मधुरचेष्टा आर्याकारा [x]प्रशान्तदृष्टिपथा ।
[y]विपुलां जनेन्ति [z]प्रीतिं जनस्य समुदी[a][b]क्षमाणस्य ॥५५॥ 10
निःसंशयं [c]नरवरा [d]पुत्रवरं [e]उपगता तवं द्रष्टुं ।
[f]देवगणपुरुषप्रदेवं [g]अभिवाद्य नन्दितुं [h]नरसिंहं ॥५६॥
[i]एतं श्रुत्वा वचनं प्रतिहाररक्षं नराधिपोवाच ।
[j]मयि भो [k]कृता[l]भ्यनुज्ञा [m]प्रविशन्तु निवेशनमुदारं ॥५७॥
[n]अमरप्रवरगणास्[o]ते गगनसमनिभा [p]विशुद्धकर्मान्ता । 15
[q]प्रविशेन्सुः पार्थिवकुलमहीनकुल[r][s]वंशमुख्यस्य ॥५८॥
शुद्धोदनो पि राजा [t]महेश्वरां दूरतो [u]निशामेत्वा ।
[v]प्रत्युत्थित आसनातो [w]सपरिजनो गौरव[x]बलेन ॥५९॥ Sen. 152
[y]अभिवादते नरपतिः [z]स्वागतमनुरागतं च सर्वेषां ।
प्रीता स्म [a]दर्शनेन [b]प्रशमदमबलेन च भवतां ॥६०॥ 20
[c]संविद्यन्ते इमानि [d]वरासनानि वररूपविकृतानि ।
आस्तां [e]ताव भवन्तो [f]अस्माकमनुग्रहार्थाय ॥६१॥

अथ [a]तेष्वासनवरेषु कनकरजतवर्ण[b]चित्रपादेषु ।
[c]विगतमदमान[d]दर्पाः ते तत्र सुखं [e]निषीदेन्सुः ॥६२॥
[f]ते कंचिदेव [g]कालं [h]निषण्णमात्रा नराधिपमुवाच ।
[i]शृण्वतु भवां प्रयोजनं यं अस्माकमिह गमनाय ॥६३॥
[j]सर्वानवद्यगात्रो [k]पुत्रस्तवं [l]अनुजातो.................. ।
लक्षणपार[m]मि[n]प्राप्तो.................................... ॥६४॥
वयमपि [o]लक्षण[p]कुशला दोषगुणां [q]लक्षणै[r]र्विजानाम ।
यदि न गुरु तव सुतन्ते [s]पश्येम महापु[t]रु[u]षरूपं ॥६५॥
सो [v]वदति एथ पश्यथ सुव्यपदेशक्षेमं मम [w]पुत्रं ।
[x]मरु[y]मनुजकीर्तियशसं [z]लक्षणगुणपारमिप्राप्तं ॥६६॥
अथ मृदुककाचलिन्दिक[a]प्रवे[b]णिशयितं च कनक[c]वर्णाभं ।
[d]उपनयति पार्थिववरो [e]नरमरुपरिवन्दितं [f]सुगतं ॥६७॥
[g]आलोकयित्व दूरा [h]महेश्वराः क्रमवरान्नर[i]वरस्य ।
Sen. 153 [j]मूर्ध्ना विग[k]लि[l]तमकुटा धरणिवरतले [m]प्र[n]णि[o]पतेन्सुः ॥६८॥
गोक्षीरवि[p]मलचन्द्र, महीतले मूर्ध्नं[q] प्रतिष्ठापेत्वा ।
दशबलमभि[r]नन्दन्ताः स्थिता सुचिरकालमभि[s]कांक्षितं इति ॥६९॥

[t]जाता खलु भो धुतधर्मधर बोधिसत्वा[u]ः सर्वाणि मानुष्यकानि [v]शिल्पा[w]नि अना-[x]चा[y]र्यकाप्यनुतिष्ठन्ति ।

न खलु भो धुतधर्मधर बोधिसत्वा[z]ः तुषित[a]भवनात्प्रभृति कामां प्रतिसेवन्ति । भो जिनपुत्र को हेतुः कः प्रत्य[b]यः[ ]यं अप्रहिणेहि क्लेशेहि बोधिसत्वाः कामां न प्रति-सेवन्ति राहुलश्च [ ]क[c]थमुत्पन्न इति । [d]एवमुक्ते आयुष्मान्, महाकात्यायन आयुष्मन्तं

महाकाश्यपमुवाच। परिपिण्डत्वात्कुशलस्य बोधिसत्वा कामां न प्रतिसेवन्ति कल्याणाध्याशयत्वात् अग्राध्याशयत्वात्प्रणीताध्याशयत्वाच्च बोधिसत्वा कामां न प्रतिसेवन्ति। अकामकामित्वात् ज्ञानध्वजत्वात् अतत्परायणत्वात् स्पृहानुपस्थितत्वाद्बोधिसत्वाः कामां न प्रतिसेवन्ति। आर्यत्वात् अनीचत्वात्कुशलपरिभावितत्वाच्च बोधिसत्वाः कामान्न प्रतिसेवन्ते परमपुरुषसंभावितत्वाच्च लोकस्य सम्यक्संबुद्धो भविष्यतीति। 5

अथ राहुलस्तुषितकायाच्च्यवित्वा मातुः यशोधरायाः क्षत्रियकन्यायाः कुक्षिमवतीर्ण इति। एवमनुश्रुयते भो धुतधर्मधर। राजानश्चक्रवर्तिनः औपपादुका बभूवु। तद्यथा कुसुमचूडः हेमवर्णः गान्धर्वः सुमालः रत्नदण्डः सुविमानः आर्जवः मान्धाता Sen. 154 सुनयः सुवस्त्रः बहुपक्षः तोरग्रीवः मणिविरजः पवनः मरुदेवः सुप्रियः त्यागवां शुद्धवंशः दुरारोह इति इत्येवमादयश्चक्रवर्तिगणाः औपपादुका आसन् न तथा राहुलभद्र इति। 10

कथं भो धुतधर्मधर, बोधिसत्वा अभिनिष्क्रमणसंपन्ना भवन्ति। भूतपूर्वं भो जिनपुत्र बोधिसत्वो अभिनिष्क्रान्तः। राजकुलगतः छन्दकं गाथयाध्यभाषते।

क्षिप्रं छन्दक कण्ठकमुपनीत्वा मा चिरं विलम्बाहि।
संग्राममहं दुर्जयं जयिष्ये अद्य भव वूदग्रो ॥७०॥
सो वाष्पपूर्णवदनो परिनिःश्वसन्तो 15
छन्दकः सशोकरवितानि समुत्थितानि।
वाष्पाणि मुञ्चति इमानि प्रबोधनार्थं
सुप्तस्य पार्थिवजनस्य.............. ॥७१॥
किं दानि आविगलिता वरकोशभारा
वाष्पौघसंस्तरगता मदनाभिभूता। 20
लालस्यसोकपरिदेवितकाल एव

सुप्ता इदानि यद जाग्रणदेशकाल: ॥७२॥
देवी पि नाम सुचिरं प्रतिजागरित्वा
सौदामनीप्रतिमरूपनिभा शयाना ।
निर्याणकालसमये नरलम्बकस्य
5 वरसुरपुरे सुरवधूप्रतिमा सलीला ॥७३॥
Sen. 155 सा दानि तस्य महिषी मनुजेश्वरस्य
माता सवत्सलविशालसुचारुनेत्रा ।
संपश्यमान करुणं प्रियविप्रयोगं
निद्राभिभूत न विजानति आलपन्तं ॥७४॥
10 सा दानि कुञ्जरवराश्वसमाप्तयोधा
नाराचप्रासशरशक्तिविचित्रवर्मा ।
सेना कहिं वसति कं वा गुणं करोति
या शाक्यपुङ्गवं न बुध्यति निष्क्रमन्तं ॥७५॥
कं बोधयामि मम को नु भवे सहायो
15 किं वा करोमि दिवसे अपि विप्रनष्टे ।
हा हेमकाञ्चननिभेन किल विहीनो
राजा जहिष्यति सबन्धुजनो शरीरं ॥७६॥
तं देवसंघ अवची मधुरप्रलापी
किं छन्दका लपसि किं ति विहन्यितेन ।
20 नैतस्य मारकपुत्राण्यपि उद्यतानि
विघ्नं समर्थ जनयेयु कुतो पुनस्त्वं ॥७७॥
भेरिमृदङ्ग यदि शंखसहस्रशब्दं

[a]कुर्यात्कोचित्कपिलवस्तुनि [b]बोधनार्थं ।

नैतद्विबुद्धि अमरे[c]श्वर[d]मादिकेहि

तं [e]सोपितं [f]पुरवरं हि [g]समृद्धवारं ।।७८।।

[h]पश्यासि ताव गगने मणि[i][j]रत्नचूडा

[k]देवा दिवि [l]गुरुकृतस्य वसानुवर्ती । 5 Sen. 156

[m]प्रह्वा [n]कृतांजलिपुटा [o]प्रणिपत्य [p]मूर्ध्ना

त्वं बन्धु त्वं च [q]शरणं ति नमस्यमाना ।।७९।।

[r][s]तत्साधु कण्ठकमुपानय [t]नायकस्य

गोक्षीरहेमवपुषं सहजं [u]तुरंगं ।

[v]न ह्यस्ति [w]सो भुवि दिवि [x]नरलम्बकस्य 10

[y]यो विघ्नं [z]कुर्या उपनेहि [a]तुरं[b]गश्रेष्ठं ।।८०।।

सो तं [c]प्रफुल्लकुमुदाकरकुन्दगौरं

[d]संपूर्ण[e]चन्द्र[f]वपुषं [g]सहजं तुरंगं ।

तस्य महागुणधरस्य [h]वचा[i]भि[j]तुन्नो

सुश्रूषकारि [k]उपनामयते रुदन्तो ।।८१।। 15

एषो ति नाथ वर[l]लक्षणभूषिताङ्गो

[m]सज्जः सुद्योतचरणो ललिताग्रगामी ।

यं दानि ते ध्यवसितं वररूप[n]धारि

तन्ते [o]समृध्यतु [p]विशालभुजान्तरांशा ।।८२।।

[q]शत्रुश्च ते ग्रबलदुर्बलभग्नशूको 20

शीघ्रं [r][s]तपेतु तव तेजवराभिभूतः ।

आसा च ते[a] नरलम्बक[b] महार्थयुक्ता[c]
[d]संपूर्यतां कनकपर्वतसन्निकाशा[e] ।।८३।।
ये तुभ्य[f] विघ्नकरा[g] ते तु अपक्रमन्तु
Sen. 157 श्रेयावहा[h] तु ति बलं विपुलं[i] लभन्तु ।
5 यं च व्रतं समुपगच्छसि[j] तस्य[k] पारं
गच्छासि मत्तवरवारण[l]खेल[m]गामि[n] ।।८४।।
मणिकुट्टिमा[o] च वसुधा राजकुले[p] कण्ठकस्य पादेहि ।
समनिहता रसति मधुरं[q] निशां स्फुरति[r] अद्भुतं शब्दं ।।८५।।
चतुरश्च[s] लोकपाला विगलितमकुटा प्रलम्बवरमालाः[t] ।
10 कण्ठकपादेषु[u] करां न्यसन्ति रक्तोत्पलसकाशां[v] ।।८६।।
[w]अग्रतो[x] वज्रवरधरो त्रिदशगुरू[y] आबद्धमणीचूडो[z] ।
इन्द्रो सहस्रनयनो गच्छति पुरतो नरवरस्य ।।८७।।
संज्ञाकृतमात्रमिदं कण्ठको[a] वहतीति वादिशार्दूलं[b][c] ।
देवा प्रवरकरहृतं[d] वहन्ति अंशुप्रवरवर्षं[e] ।।८८।।
15 निष्क्रम्य नगरवरातो[f] अवलोकयि[g] पुरवरं पुरुषसिंहो[h] ।
न तं पुनरहं[i] प्रवेक्ष्यमप्राप्य जरामरणपारमिति[j] ।।८९।।

[k]एवमभि[l]निष्क्रमणसंपन्ना[m] खलु भो धुतधर्मंधर सम्यक्संबुद्धा[n] इति । न प्रतिबलो[o] खल्वहं भो धुतधर्मंधर बोधिसत्वस्य गर्भावक्रान्तिमादौ[p] कृत्वा यावदभिनिष्क्रमणतो[q] विस्तरेण भाषितुं कल्पं[r] कल्पावशेषं वा न च गुणा[s] समन्ता शक्यमभिगन्तुं ।

20 [t]इत्यपि बहुगुणसंपन्ना[u] सम्यक्संबुद्धा[v] इति ।

Sen. 158 बोधिमूलमुपगम्य[w] चाप्राप्तायां सर्वाकारज्ञतायां[x] पंचचक्षुसमन्वागता[y] भवन्ति ।
[z]एवमुक्ते आयुष्मान्[a] महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच । विस्तरेण भो

जिनपुत्र पंच चक्षूणि[a] परिकीर्तय अवहितश्रोता देवमनुष्यसंकुला[b] परिषा सर्वभूतगणा[c] इति। एवमुक्ते आयुष्मान् महाकात्यायन[d] आयुष्मन्तं महाकाश्यपमुवाच। पंच इमानि भो धुतधर्मधर सम्यक्संबुद्धानां चक्षूणि[e] भवन्ति[f]। कतमानि पंच। मान्सचक्षुः[g][h] दिव्यचक्षुः[i] प्रज्ञाचक्षुः धर्मचक्षुः बुद्धचक्षुः। इमानि भो धुतधर्मधर पंचचक्षूणि[j] सम्य-क्संबुद्धानां भवन्ति असाधारणानि प्रत्येकबुद्धेभ्यः अर्हन्तेभ्यः शैक्षेभ्यः सर्वबालपृथग्-[k] 5 जनेभ्य[l] इति। तत्र भो धुतधर्मधर[m] मान्सचक्षुस्तथागतानां[n]। याये[o] प्रभाये[p] समन्वागतं[q] याये[r] शूक्ष्मदर्शनाये[s] समन्वागतं[t][u] याये तत्त्वदर्शनाये[v] समन्वागतं[w][x] तन्मान्सचक्षु[y] अन्यस्य सत्वस्य[z] सत्वकाये नास्ति। प्राप्ते च सर्वदर्शित्वे बोधिसत्वा यावत्तक[a]मवकाश[b]मवलोक-यितुमिच्छन्ति तं दर्शनं तत्र अप्रतिहतं प्रवर्तते[c]। किं कारणं[d][e]। विपुलकुशलसंचितत्वात्[f]। तद्यथापि[g] नाम[h] ऋद्धिबलेन[i] राजा चक्रवर्ति[j] सार्धं[k] चतुरंगिनीया सेनाये वैहायसं[l] द्वीपातो 10 द्वीपं संक्रामति[m] तथेदं[n] पि[o] द्रष्टव्यं। सम्यक्संबुद्धानां[p] चरिते[q] ऋद्धिबलेन[r] अनाकांक्षमाणानां[s] निश्चलां[t] वसुमतिं प्रतिक्रमन्तानां उन्नता[u] च[v] ओनमति[w] ओनता च उन्नमति तथैतदपि[x] द्रष्टव्यमित्येवमादिना[y] लक्षणमात्रेण[z] सम्यक्संबुद्धानां[a] मान्सचक्षुः[b] निरुपदिश्यते। न[c] च Sen. 159 कल्पेन सम्यक्संबुद्धानां मान्सचक्षुस्य[d][e][f] शक्यं गुणपर्यन्तमधिगन्तुं। किं कारणं[g]। न हि किंचित्सम्यक्संबुद्धानां[h] लोकेन समं। अथ खलु सर्वमेव[i] महर्षिणां लोकोत्तरं। तथा हि[j] 15 सम्यक्संबुद्धानां समुदागमः सो पि लोकोत्तरो[k]। तत्र[l] सम्यक्संबुद्धानां[m] मान्सचक्षुषः वर्णं प्रवृत्तं स्थानं च यथान्येषां सत्वानां[n] सत्वकाये। येन चक्षुषा भौम्या[o] देवाश्च यक्षाश्च राक्षसाश्च कामावचराश्च रूपावचराश्च[p] देवाः ततो विशिष्टतरं[q] च विपुलतरं[r] च स्फुटतरं[s] च सम्यक्संबुद्धानां दिव्यचक्षुः[t]। तत्प्रवृत्तं मनोमयेषु[u] रूपेषु[v]।

येनेह[w] प्रज्ञाचक्षुषा समन्वागता[x] चक्षुत्वपरीक्षया[y] अष्टमकादिका[z] पुद्गला[a] यावद-[b] 20 र्हत्पुद्गला इति[c] अतो परिव्यक्ततरं[d] सम्यक्संबुद्धानां[e] प्रज्ञाचक्षुः[f]। तत्र कतमं सम्यक्सं-बुद्धानां धर्मचक्षुः[g]। स[h] दशानां[i] बलानां मनोविभुता। तत्र कतमानि दशबलानि।

तद्यथा---

स्थानास्थानं[a] वेत्ति प्रथमं बलं अप्रमेयबुद्धीनां[b][c] ।
सर्वत्रगामिनीं[d] च प्रतिपदं[e] वेत्ति[f] बलं द्वितीयं ।।९०।।
नानाधातुकं[g] लोकं[h] विदन्ति ख्यातं[i] बलं तृतीयं ।
अधिमुक्तिनानात्वं वेत्ति[j] चतुर्थं बलं भवति[k] ।।९१।।
5 परपुरुषचरितकुशलानि वेत्ति[l] तत्पंचमं बलं च ।
Sen. 160 कर्मबलं[m] प्रतिजानन्ति शुभाशुभं[n] तद्बलं षष्ठं ।।९२।।
क्लेशव्यवदानं[o][p] वेत्ति सप्तमं बलं ध्यानसमापत्तिं[q] वेत्ति[r] ।
अष्टमं[s] बलं[t] पूर्वनिवासं[u][v] वेत्ति बहुप्रकारं[w] ।।९३।।
बलं[x] नवमं[y] भवति परिशुद्धदिव्यनयना[z] भवन्ति[a] ।
10 सर्वक्लेशविनाशं[b][c] प्राप्नोन्ति[d] दशमं बलं भवति[e] ।।९४।।

एतानि[f] मनोविभुबलानि यैः सर्वदर्शी दिवि भुवि च जातकीर्तिः[g] दशबल[h] इत्येव[i]-माख्यातो[j] । यं[k] एतेषु[l] दशबलेषु मनोविभुज्ञानं[m] इदमुच्यते[n] धर्मचक्षुरिति[o] । तत्र कतमं बुद्धचक्षुः । अष्टादशावेणिका[p] बुद्धधर्माः । तद्यथा अतीते अंशे तथागतस्य अप्रतिहतं[q] ज्ञानदर्शनं । अनागते अंशे अप्रतिहतं ज्ञानदर्शनं । प्रत्युत्पन्ने[r] अंशे अप्रतिहतं[s] ज्ञानदर्शनं[t] । 15 सर्वं[u] कायकर्म[v] ज्ञानपूर्वंगमं[w] ज्ञानानुपरिवर्ति । सर्वं वाचाकर्म[x] ज्ञानपूर्वंगमं[y] ज्ञानानुपरिवर्ति[z] । सर्वं मनोकर्म ज्ञानपूर्वंगमं[a][b] ज्ञानानुपरिवर्ति[c] । नास्ति छन्दस्य हानिः । नास्ति वीर्यस्य हानिः[d] । नास्ति स्मृतिये[e] हानिः । नास्ति समाधीये[f] हानिः[g] । नास्ति प्रज्ञाये[h] हानिः । नास्ति विमुक्तिये हानिः[i] । नास्ति खलितं[j] । नास्ति रवितं । नास्ति[k] मुषितस्मृतिता[l] । नास्ति असमाहितं[m] चित्तं । नास्ति अप्रतिसंख्याय[n][o] उपेक्षा । नास्ति नानात्वसंज्ञा[p] । यं[q] इमेषु[r] अष्टादश-20 स्वावेणिकेषु बुद्धधर्मेषु[s] ज्ञानमिदमुच्यते[t][u] बुद्धचक्षुरिति ।

Sen. 161

एवमुक्ते[a] आयुष्मान्महाकाश्यप आयुष्मन्तं महाकात्यायनमुवाच। किं पुनर्भो जिनपुत्र भगवतो एतदधिवचनं यादृशानां भूमीनां व्याकरणं उताहो[b] सम्यक्संबुद्धानामेतदिति[c]। एवमुक्ते[d] आयुष्मान्महाकात्यायन आयुष्मन्तं महाकाश्यपमुवाच। एकस्मिं[e] समये[f] भो धुतधर्मधर भगवां[g] वाराणस्यां विजहार[h] ऋषिवदने[i] मृगदावे अष्टाविंशतीनां वशीभूतशतानां[j] पुरस्कृतः[k]। तत्र[l] भगवता अष्टादश बुद्धधर्मा विभक्ताः[m] अतीते[n] अंशे[o] अप्रतिहतं ज्ञानदर्शनमेव[p] सम्यक्संबुद्धानां भवतीति दश भूमयो समुत्कीर्तये[q]। शाक्यमुनिं सम्यक्संबुद्धं[r] आदौ कृत्वा दश भूमयो देशिता[s t]। तत्रेदमुच्यते।

5

प्रियाणि[u] वस्तूनि[v] ददाति चक्षुमां
चिरं[w] प्रसन्नेन[x] मनेन संसरन्[y]।
ततो प्रियं बुध्यति ज्ञानमुत्तमं[z]
स्वयं महीमण्डगतो[a][b] तथागतो ॥९५॥

10

विचित्र वस्त्राभरणैरलंकृताः
स्त्रियो ददाति परितुष्टमानसो।
विचित्रमस्य प्रतिज्ञानमद्भुतं[c]
उदीर्यते[d] तस्य फलेन कर्मणः[e] ॥९६॥

15

न शक्तिनाराच न[f] प्रासतोमरा[g]।
प्रासेसि[h] सत्वेषु भवेषु[i] संसरन्।
तथास्य[j] मार्गोऽतृणखण्डकण्टको[k]
अघाति[l] ग्रामां नगरां[m] च संसरन्[n] ॥९७॥

Sen. 162

स्वकस्य दासस्य पि धर्मवादिनः[o]
शृणोति सत्कृत्य कथां[p q] न च्छिन्दति।
ततो स्य धर्मं[r] ब्रुवतो महाजने

20

न कश्चि[a] नो रम्यति नो च तुष्यति ॥९८॥

प्रणीत[b]दानानि[c] ददाति..............

विनेति कांक्षाञ्च[d] तथैव संशयं।

ततो स्य कायात्[e] ज्वलनार्चिसन्निभा[f]

5 प्रभा समुत्तिष्ठति[g] शीतल[h]प्र[i]भा[j] ॥९९॥

न कस्यचिद्याचनकस्य याचना

भवन्ति[k] बन्ध्या नरदेववेशिता[l]।

ततो अबन्ध्या भवि तस्य देशना

तदद्भुतं मारबलप्रमर्दने[m] ॥१००॥

10 मनोरमां[n] काञ्चनतालपर्णियो[o]

जिनेषु[p] देन्ति परितुष्टमानसाः[q]।

ततो[r] अनालोकिया लोकबान्धवा

सदा च लोकेषु... ...एतदद्भुतं[s] ॥१०१॥

उपानहा रत्नमया[t] च पादुका

15 ददाति नित्यं परि[u]तुष्टमानसः[v]।

Sen. 163 ततः[w] सदा चंक्रमते नरोत्तमः

असंस्पृशन्तो[x] चतुरंगुलं[y] महीं[z] ॥१०२॥

परेहि उक्तो परुषं[a] पुनः[b] पुनः

प्रभुः समानो क्षमते[c] न ऊहते[d]।

20 ततो[e] प्रियं चंक्रमतो सपर्वता[f]

समुन्नतान्तोनमति[g] वसुन्धरा[h] ॥१०३॥

करोति[i] दीनान नयेन संग्रहं

[a] पतन्तमभ्युद्धरते महाजनं ।

ततो [b] स्य रत्नामयरत्न[c]संचया

[d] समोनता [e] उन्नमते [f] वसुंधरा ॥१०४॥

[g] स्वगुण[h]परि[i]कीर्तनेन च सम्यक्संबुद्धेन [j] बुद्धानुस्मृतिर्नाम धर्म[k]पर्यायो [l] भाषितः ।

तस्य पर्य[m]वसाने[n] आयुष्मता [o] वागीसेन [p] सम्यक्संबुद्धो [q] संमुखमभिस्तुतो । 5

[r] नमो स्तु ते बुद्ध अनन्तदर्शन

समन्तचक्षुः शतपुण्यलक्षण ।

[s] हितानुकम्पी परमार्थ[t]कोविद

नमामि त्वां वल्गुगि[u]राहि गौतम ॥१०५॥

तारेसि [v] तीर्णो जनतां महामुने 10

[w] न भायसि [x] क्षेमकराग्रपुद्गल ।

[y] यथातथं [z] स्थानमभिप्रकाशयं Sen. 164

विनेसि [a] सत्ये [b] अमृते बहुं जनं ॥१०६॥

शीलं महर्षिस्य अनन्त[c][d]दर्शिनः

गम्भीरमा[e]र्यं [f] विपुलं सुभाषितं । 15

शीले [g] विशिष्टो त्वमरिप्रमर्द[h]नः

इमस्मि लोके परतश्च [i] सुव्रतः ॥१०७॥

अखण्डमच्छिद्रमकाच[j][k]मव्रणं

अनाश्रवन्ते चरणं महामुने ।

[l] शुचि विशुद्धि परमां [m] गतो सदा 20

विरोचसे नगशिखरे [n] यथा[o]नलो ॥१०८॥

चित्तस्थि[p]तित्वे असि [q] पारमिंगतो

[a]वशी समाधिस्मि [b]तथापि पुद्गल ।

[c]चित्ते वशी त्वं वशिनां परां गत:

[d]वंकावकाशा [e]विगतो विरोचसे ॥१०९॥

[f]यथेच्छ[g]कं अरणसमाधि [h]शान्तर

5 ................[i]देवनरेषु [j]अर्चित ।

[k]निवेशसन् [l]काञ्चनदामप्रभ:

[m]नमो स्तु ते गौतम [n]सत्यविक्रम ॥११०॥

[o]वि[p]रोचनो नभसि यथा [q]महाप्रभो

[r]शुद्धे नभे पंचदशीय [s]चन्द्रमा ।

10 Sen. 165 [t]तथा समा[u]धिस्मि स्थितो विरो[v][w]चसे

[x]सुवर्णमुत्तप्तमिवात्र पुद्गला ॥१११॥

आकांक्ष[y]माणा विगता [z]विपण्डिता

सत्वा न जानन्ति [a]सम[b]न्तउद्यमां ।

सुखं समाधिं अरणानि [c]सेवतो

15 [d]नमो स्तु ते देवमनुष्य[e]पूजित ॥११२॥

[f]यदा च आलोकसि [g]नागगामि

[h]यदा च आगत [i]मरणाय पारं ।

[j]मती[k]स्मृतीमां [l]विमलन [m]चेतसा

तदा अयं भूतधरा प्रकम्पते ॥११३॥

20 [n]सत्या [o]अभिसमेतिय [p]दशनं तथा

[q]स्वयं [r]अभिज्ञाये अनुश्रतं [s]पुरा ।

[a]इमां गिरां [b]व्याहर [c]अग्रपुद्गल
सहस्रनेत्रो [d]मघवां व [e]शोभसे ॥११४॥
इदं समाप्तं व्यसनं [f]महद्भयं
[g]इतो न भोति [h]अग्रे अस्य संभवो ।
[i]तस्यावरोधानमधो [j]प्रवर्तते 5
[k]निर्वाति [l]वातान स्वरो व पाकः ॥११५॥
विमुक्तिचित्तस्य [m]विमुक्तिदर्शना
[n]अचिन्तिया तर्कपथेन निश्रिता ।
[o]असंकिया वीरगिरा विरोचते Sen: 166
या सा सुवेला मृदु सत्यसंभवा ॥११६॥ 10
[p]अनुद्धतां तां च गिरां प्रकाशय
[q]त्वं............हि जनस्य सन्निधौ ।
[r]ते तुह्य श्रुत्वा मधुरां [s]सुभाषितां
[t]पिबन्ति [u]तृष्णार्तं इवाम्भसार्णवे ॥११७॥
[v]हतेषु त्वं प्राणिषु मैत्रं [w]चिन्तय 15
ऐश्वर्यंऋद्धि [x]प्रतिभानमुत्तमं ।
[y]श्रेष्ठेषु धर्मेषु हि [z]पारमीगतो
[a]यथा न कोची इह [b]लोकधातुये ॥११८॥
[c]प्रज्ञा च ते अस्ति अनुत्तरा मुने
सवस्मि लोकेऽप्रतिमा अनोपमी । 20
[d]त्वमेव [e]श्रेष्ठो सकलस्य प्राणिनो
[f]शिलोच्चयानां यथ [g]मेरुपर्वतः ॥११९॥

न ते स्ति तुल्यो सदृशो समानो
[a]कुतोत्तरो गुणेषु [b]गुणंधरस्य ।
[c]त्वमेव [d]श्रेष्ठो पर[e]मा[f]र्थपुद्गलो
[g]धर्माण [h]निर्वाणमिवाचलं सुखं ॥१२०॥
5 [i]रागं च मोहं च प्रहाय दोषं
मानं च म्रक्षं तर्सिणां च जालिनां ।
Sen. 167 विराजसे दोषविमुक्तमा[k]नसो
यथा [l]शशी [m]पूर्ण इव [n]नभे शुभे ॥१२१॥
[o]यदत्र [p]सत्यं तुवं [q]मार्गसे ऋजुः
10 सेतुर्महा [r]सत्पु[s]रुषेण [t]से[u]वितः ।
इमां [v]गिरं व्याहर [w]अग्रपुद्गल
सहस्रनेत्रो [x]मघवां व [y]शोभसे ॥१२२॥
क्लेशैर्वि[z]मुक्तं विमलं [a]सुशान्तं
निषेव [b]सत्व[c]शरणं [d]समाधिं ।
15 हिताय [e]भूतानभि[f]भुर्विराजसे
रवी यथा देवमनु[g]ष्यपूजितः ॥१२३॥
अनि[h]श्रितः त्वं इह च [i]परत्र च
ध्यायन्तो ध्याने [j]रमसे प्रतिष्ठितः ।
[k]वन्दन्ति देवा बहवो [l]स[m]मागता
20 [n]नमस्कृतं प्रांज[o]लियो महामुनिं ॥१२४॥
बहुधा [p]बहुप्रकारं चक्षुं भवते वि[q]शुद्धचक्षूणां ।
[r]जराम[s]रणमर्दनान [t]बुद्धान अदान्तदमकानां ॥१२५॥

लोकोत्तरा[a] भगवता[b] चर्या[c] लोकोत्तरं कुशलमूलं[d][e] ।

गमनं[f] स्थितं निषण्णं शयितं लोकोत्तरं मुनिनो ॥१२६॥

यत्तत्सुगतशरीरं भवते[g] भवस्य बन्धनक्षयकरणं[h] ।

लोकोत्तरं[i] तदपि[j] भो इत्यत्र न संशयः कार्यो[k] ॥१२७॥ Sen. 168

चीवरधरणं मुनिनो[l] लोकोत्तरं अत्र संशयो नास्ति । 5

आहाराहरणमथो[m] लोकोत्तरमेव सुगतस्य ॥१२८॥

देशना[n] नरनागानां सर्वलोकोत्तरा मता[o] ।

यथातथं[p] प्रवक्ष्यामि[q] माहात्म्यं[r] वरबुद्धिनां ॥१२९॥

देशकालवशं[s] प्राप्य परिपाकं च कर्मणः[t] ।

सत्यं[u] वा[v] अभिनिर्वृतं[w][x] धर्मं[y] देशेन्ति नायकाः[z] ॥१३०॥ 10

लोकानुवर्तनां[a][b] बुद्धा अनुवर्तन्ति लौकिकीं ।

प्रज्ञप्तिमनुवर्तन्ति यथा लोकोत्तरामपि ॥१३१॥

ईर्यापथां[c][d] दर्शयन्ति चत्वारः[e][f] पुरुषोत्तमाः ।

नो[g] च परिश्रमस्तेषां[h] जायते[i] शुभकर्मिणां ॥१३२॥

पादां च नाम[j] धोवन्ति[k] न चैषां सज्जते रजः । 15

पादाः[l] कमलपत्राभा[m] एषा[n] लोकानुवतना[o] ॥१३३॥

स्नायन्ति[p] नाम संबुद्धा[q] न चैषां विद्यते मलो ।

बिम्बे कनकबिम्बाभे[r] एषा[s] लोकानुवर्तना[t] ॥१३४॥

दन्तधोवञ्च[u] सेवन्ति मुखं[v] चोत्पलगन्धिकं[w] ।

निवसनं[x] निवासेन्ति प्रावारं च त्रिचीवरं[y] ॥१३५॥ 20

चैलं वातानि वायित्वा विकोपेन्ति न देहकं ।

वस्त्रं पुरुषसिंहानां एषा[z] लोकानुवतना[a] ॥१३६॥ Sen. 169

छायायां च निषीदन्ति[a] आतपश्च न बाधति ।
बुद्धानां शुभ[b]निष्यन्दानां एषा लोकानुवर्तना ॥१३७॥
औषधं प्रतिसेवन्ति [c]व्याधि चैषां न विद्यते ।
नायकानां [d]फलं महन्तं [e]एषा लोकानुवर्तना ॥१३८॥
5 [f]प्रभूश्च [g]कर्म वारयितुं कर्मं दर्शयन्ति च जिना ।
ऐश्वर्यं [h]विनिगूहन्ति एषा लोकानुवर्तना ॥१३९॥
करोन्ति नाम आहारं न चैषां बाधते [i]क्षुधा ।
जन[j]ताया उपदार्थं एषा लोकानुवर्तना ॥१४०॥
पिबन्ति नाम पानीयं पिपासा च न बाधते ।
10 [k]तदद्भुतं म[l]हर्षि[m]णां एषा लोकानुवर्तना ॥१४१॥
चीव[n]राणि निवासेन्ति सदा च प्रावृतो जिनः ।
[o]यथारूपो भवे [p]देवो [q]एषा लोकानुवर्तना ॥१४२॥
[r]केशां च ओरूपयन्ति न चैषां छिन्दते क्षुरः ।
[s]केशां नीलाञ्जन[t]निभां एषा लोकानुवर्तना ॥१४३॥
15 ज[u]रां च उपदेशेन्ति न चैषां विद्यते [v]जरा ।
[w]जिना जिनगुणोपेता [x]एषा लोकानुवर्तना ॥१४४॥
कल्पको[y]टीम[z]संख्येयां पुण्येषु पा[a]रमिंगता ।
[b]आरब्धमुपदेशेन्ति [c]एषा लोकानुवर्तना ॥१४५॥
Sen. 170 [d]न च मैथुनसम्भूतं सुगतस्य [e]समुच्छ्रितं ।
20 मातापितृश्च देशेन्ति [f]एषा लोकानुवर्तना ॥१४६॥
दीपंकरमुपादाय वीतरागस्तथागतः ।
राहुलं [g]पुत्रं [h]दर्शेति एषा लो[i]कानुवर्तना ॥१४७॥

कल्प[a]कोटीम[b]संख्येयां प्रज्ञा[c]पारमितां गता ।
बालभावं च [d]दर्शेन्ति एषा लोकानुवर्तना ॥१४८॥
[e]असन्मन्त्रा [f]विभाषित्वा अस्मि लोके सदेवके ।
पुनः [g]पर्येषन्ति तीर्थे [h]एषा लोकानुवर्तना ॥१४९॥
[i]बोध्यित्वामतुलां [j]बोधिं सर्वसत्वान कारणा । 5
[k]अल्पोत्सुकत्वं प्रदेशेन्ति [l]एषा लोकानुवर्तना ॥१५०॥

[m]परमगुणसं[n]पन्ना वचनसंप[o]न्नाश्च स[p]र्वे सम्यक्सं[q]बुद्धा । [r]ष[s]ष्टिभिः गुणैः सम्यक्सं-बुद्धानां [t]वाचा समन्वागता [u]भवति । कतमेहि [v]षष्टिभिः ।

गीत[w]रवम[x]धुर[y]वादी नर[z]वरवचना विनिश्चरति [a]वाचा ।
वीणारववेणुरवा हंसरवरुता सुगत[b]वाचा ॥१५१॥ 10
[c]जी[d]मूतरसितमधुरा [e]परभृतरथनेमितुल्यनिर्घोषा ।
[f]सागरनर्दित[g]सारसप्रभावा वर[h]बुद्धिनो वाचा ॥१५२॥
किन्नर[i]कल[j]विंकरुता मेघवरस्वररवा वरगजरुता ।
[k]ऋषभमृगराजरसिता वाचा वर[l]लक्षणधराणां ॥१५३॥ Sen. 171
दुन्दुभिरव[m]गम्भीरा वनदेव[n]अनिल[o]विधूतस्वरप्रपाता । 15
[p]भूमीविक्षोभनरवा [q]गिरा [r]नरमरु[s]प्रधानानां ॥१५४॥
[t]पंचांगिकतुल्य[u]रवा प्रलुलित[v]कल[w]हंसबर्हि[x]णनिवाता ।
[y]बिम्बोष्ठसुतनु[z]जिह्वा जिनवदना [a]निश्चरति वाचा ॥१५५॥
गन्धर्वगीतमधुरा [b]जलधाराणां निपात[c]तुल्यरवा ।
[d]अवि[e]स्तरपिण्डितरवा गिरा गुण[f]वरप्राधानानां ॥१५६॥ 20
वर[g]किंकणीकसलीलसुसंचिता [h]हेमजालतुल्यरवा ।
आभरण[i]घट्टितरवा [j]भुवि दिवि च गिरा [k]प्रधानानां ॥१५७॥

नातिद्रुता[a] अनमन्ती अनुपच्छिन्ना विवर्तते[b] मधुरा[c] ।
गलितपदसंचयवती[d] वाचा वरलक्षणधराणां[e][f] ॥१५८॥
सर्वामिवानुचरति[g][h] परिषां यदि लोकधातुनयुतानि[i][j][k] ।
विज्ञापयते[l] सर्वां[m] परिषां सुमधुरा वाचा दशबलानां ॥१५९॥
5 शकयावनचीणरमठपह्लवदरदेषु[n][o][p] दस्युपरिषायां[q] ।
एकविधमुच्यमाना सर्वविषयचारिणी भवति[r] ॥१६०॥
परिषां[s] नातिक्रमते निश्चरमाणा[t] गिरा नरवराणां[u] ।
Sen. 172 न वर्धते न च ह्रायति[v] गिरा स्थितलया दशबलानां[w][x] ॥१६१॥
न च भिद्यते[y] न नुद्यति[z] न,च उपतप्यते[a]······।
10 न च विखलखलखलायति[b] अभिस्वररुता[c] सुगतवाचा[d] ॥१६२॥
न च सा अपशब्दवती[e] शब्दभ्रष्टा अशेषं[f] अनुयुक्तशब्दा[g] ।
शब्देषु कुशलाकुशलां[h] सर्वां[i] जनतां[j] प्रहर्षयति ॥१६३॥
वदना सुविमलदशना[k] निश्चरति[l] गिरा यदा गुणधराणां[m] ।
माद्यन्ति[n] ,शकुनसंघा[o] गगनतलगता वनगताश्च ॥१६४॥
15 यो यस्य स्वर[p] अभिमतः[q] सा तं पूरयति तस्य संकल्पं ।
सुगतवचनप्रभूता[r] वाचा परिषदि विचरमाणा[s] ॥१६५॥
वरवासनसहितघोषा[t][u] गिरिनदिनिर्घोषसन्निभा शुद्धा[v] ।
उत्क्रोशकुररुतनया[w][x] प्रभवति,वाचा वररुतानां ॥१६६॥
शकुन्तजीवंजीवक[y] जिनवाचा[z] कनकतालपत्ररवा[a] ।
20 पटुपटहप्रवदमृदंगचाटुस्वरतुल्यनिर्घोषा[b][c][d] ॥१६७॥
अज्ञेया[e] विज्ञेया[f] गम्भीरभीष्मरूपा कर्णसुखा ।
हृदयंगमा[g] च नित्यं वाचा वरपारमिगतानां ॥१६८॥

[a]वल्लकी श्रवणी[b]या च [c]प्रेमणिया च गिरा गुणधारीणां ।

[d]विपुलशुभसंचयानां [e]सर्वेषां अनन्तयश[f]सानामिति ॥१६९॥

[g]यथाभूतं [h]देशिता [i]वाचा । सम्यक्संबुद्धा एवं [j]धर्मं [k]देशयन्ति । नाहं भिक्षवो Sen. 173
ये धर्मा [l]अनित्यास्ते नित्यतो देशयामि । नापि ये धर्मा [m]नित्या ते अनित्यतो देशयामि ।
नापि ये [n]धर्माः दुःखास्ते [o]सुखातो देशयामि । [p]नापि ये धर्मा [q]सुखा ते दुःखातो देशयामि । 5
[r]नापि ये [s]धर्मा अनात्मीया ते [t]आत्मतो देशयामि । नापि ये [u]धर्मा [v]आत्मीयास्ते [w]अनात्मतो
[x]देशयामि । नापि ये धर्मा अशुभास्ते [y]शुभतो देशयामि । नापि ये [z]धर्माः [a]शुभास्ते अशु-
भातो देशयामि । नापि ये धर्मा रूपिणस्ते अरूपिणो देशयामि । नापि ये धर्माः
[b]अरूपिणस्ते रूपिणो देशयामि । नापि ये [c]धर्माः [d]कुशलास्ते [e]अकुशलातो देशयामि । नापि
[f]ये धर्माः अकुशलास्ते कुशलातो [g]देशयामि । नापि ये धर्मा [h]अनाश्रवाः ते साश्रवा ति 10
देशयामि । नापि ये धर्माः [i]साश्रवास्ते अनास्रवा ति [j]देशयामि । नापि ये [k]धर्माः
व्याकृतास्ते अव्याकृता इति देशयामि । [l]नापि ये धर्मा॰ अव्याकृतास्ते व्याकृता इति
[m]देशयामि । नापि ये धर्मा हीनास्ते [n]प्रणीता इति देशयामि । [o]नापि ये [p]धर्मा प्रणीतास्ते
हीना इति देशयामि । नापि ये [q]धर्माः गृहाश्रितास्ते [r]नैष्क्रम्याश्रिता इति देशयामि ।
नापि ये धर्मा [s]नैष्क्रम्याश्रितास्ते गृहाश्रिता इति देशयामि । 15

अथ खलु भो धुतधमधर [t]सम्यक्संबुद्धाः [u]सत्यवादि कालवादि [v]भूतवादि अथवादि
तथावादि [w]अनन्यथावादि अवितथवादि धर्मवादि विनयवादि इति ।

भूतपूर्वं भो धुतधर्मधर [x]तुषितभवनका[y]यिको [z]देवपुत्रो शिखरधरो नाम बोधि[a]सत्वः Sen. 174
[b]सम्यक्संबुद्धं [c]ऋषिवदनगतं [d]वाराणस्यां [e]वनवरे वरचक्रप्रव[f][g]र्तनदिवसे भगवन्तं संमुखा-
[h]भिरध्यभाषे [i]सगौरवः सप्रतीसः [j]प्रह्वः [k]कृतांजलिपुटः । 20

[l]साधु [m]ते [n]साधुरूपस्य [o]वाचा न [p]प्रतिहन्यते ।

साधु अर्थान्विता साध्या वाचा तव [q]मनोरमा ॥१७०॥

साधु[a] सुखरसंयोगा[b] वर्णसन्धिगुणान्विता[c] ।
साधु[d] सत्यानि चत्वारि[e] प्रवदसे[f] महामुने[g] ॥१७१॥
साधु[h] ते देवगन्धर्वा पिबन्ति मधुरां गिरां ।
साध्वि[i]हा[j]प्रतिमं चक्रं[k] प्रवर्तेसि[l] अनिर्वर्तिकं[m] ॥१७२॥
5 तुभ्यं[n] लोके[o] समो[p] नास्ति रूपे[q] वर्णे[r] कुले[s] बले ।
ईर्यापथे[t] च वीर्ये च ध्याने[u] ज्ञाने[v] शमे दमे ॥१७३॥
अद्य[w] हृष्टा[x] दश वीर[y] कोट्यो[z] ते प्रथमे फले ।
विनीता देवपुत्राणां शासने प्रथमे मुने ॥१७४॥
त्रिंश[a] कोट्यो प्रभो[b] वीर विनेसि प्रथमे फले[c] ।
10 द्वितीये[d] शासने नर देवपुत्राण एव च ॥१७५॥
पञ्चाश[e] कोटीयो भूयो[f] शासने तृतीये मुने ।
विनीता[g] देवपुत्राणां[h] अपायेहि[i] विमोचिता[j] ॥१७६॥
Sen. 175 अशीति कोटीयो[k] भूयो[l][m] श्रोतापत्तिफले विभू[n] ।
चतुर्थे[o] शासने[p] दमेत्वा दुर्गतीहि[q] विमोक्षिताः ॥१७७॥
15 तस्मात्ते[r] सदृशो नास्ति मैत्राय[s] पुरुषोत्तम ।
करुणाये[t] कारुणिको[u] भूतो[v] भूयो नरर्षभ[w] ॥१७८॥
हृष्टा[x] पुरुषशार्दूला उत्पन्ना लोकसुन्दरा ।
हिताय सर्वसत्वानां[y] विचरन्ति महामुने ॥१७९॥
अतिचिरस्य राजसुत उत्पन्नो सि नरर्षभ ।
20 प्रणेता विप्रनष्टानां[z] आर्त्तानां नयनन्दनं ॥१८०॥
मा च कदाचिद्भूतगुरु[a] नाथो अन्तरहायतु[b] ।
अपर्यन्तं तव स्थानं[c] भवति लोकबान्धव[d] ॥१८१॥

अपाया तनुकीभूता[a] स्वयम्भू[b] तव तेजसा ।
अनोकाशा[c] कृता स्वर्गा त्वां प्राप्य पुरुषोत्तम[d] ॥१८२॥
यस्य[e] मिथ्यात्वनियतो राशिः पुरुषपुद्गल[f] ।
एष[g] वानियतं राशिं त्वां प्राप्य पूरयिष्यते ॥१८३॥
यस्याप्यनियतो[h] राशिः[i] त्वां प्राप्य[j] सुरवन्दित । 5
पूरयिष्यति[k] सो राशिं सम्यक्तेजकुलोदित[l] ॥१८४॥
अद्भुतानां[m] च धर्माणां विशुद्धिरुपलभ्यते[n] ।
त्वां[o] प्राप्य पुरुषादित्य तमोन्तकरमच्युतं[p] ॥१८५॥
तस्य ते भाषमाणस्य[q] भूतां धर्मां[r] जिनर्षभ[s] । Sen. 176
अभिनन्दन्ति[t] वाक्यन्ते सेन्द्रा लोका महामुने ॥१८६॥ 10
इति[u] स्तुवन्दि देवगणा वरदं प्रीतिमानसा[v] ।
अनन्तगुणसंपन्नं[w x] संस्तवार्हं[y] नरोत्तममिति[z] ॥१८७॥

उपचारविधिसंपन्ना[a] भो धुतधर्मधर[b] सम्यक्संबुद्धा[c] कालज्ञानसमर्थका[d] विशुद्ध-नेत्रा[e] अनुच्चावचदर्शना[f] पूर्वान्तिनयसंपन्ना[g] उच्छ्रापितधर्मध्वजा[h i j] निष्प्रतिमानध्वजा[k] कलहरणनिशातका[l m] प्रवचन।वदुषो[n] अनवसानज्ञानाः[o] समये च आवुसादयन्तो[p] अनयनानां 15 प्रवर्तकाः अपमार्गककुत्सका इति । तत्रेदमुच्यते[q] ।

सर्वाकारगुणोपेता[r] सर्वे सर्वार्थनिश्रिता[s] ।
प्रनेतारो विनेतारो बुद्धा[t] बुधजनार्चिताः[u] ॥१८८॥
असंकीर्णेन ज्ञानेन विशुद्धेन[v] मनेन च ।
त्रिषु[w] लोकेषु भ्राजन्ते पूर्ण चन्द्र इव नभे[x] ॥१८९॥ 20
चरणेन मनोज्ञेन[y] सतां कान्तेन नायकाः[z] ।
नदन्ति[a] च महानादं[b] सम्यक्कुशलसंभवाः ॥१९०॥

शासन्ति[a] जनतां वीरा[b] उपचारेषु निश्रिताः[c] ।
विवादं[d] परसत्वानां[e] मथन्ति तत्वदर्शिनः ॥१६१॥
लोके[f] जाता नरश्रेष्ठा[g] न[h] च लोकेन[i] लिप्यथ ।
प्रज्ञप्तिसमतिक्रान्ता[j] गम्भीरविषया[k] विभूः ॥१६२॥
5 Sen. 177 गुरुं[l] धुरं[m] समारोप्य[n] न विषीदन्ति पण्डिता[o] ।
यथावादी[p]तथाकारी[q] अनुपक्रु[r]ष्टचारणा[s] ॥१६३॥
दृष्टिविषं[t] तं घोरं च दग्ध्वा ज्ञानाग्निना प्रभूः ।
अनुत्रासिता[u]सन्त्रस्ता[v] परं[w] प्रदन्ति[x] प्राणिनां[y] ॥१६४॥
कान्तारं समतिक्रम्य क्षेमं प्राप्यनरर्षभाः[z] ।
10 आह्वायन्ति[a] जनधीरा इहैव निर्भयं[b] इदं ॥१६५॥
जरामरणरोगाणां[c] उत्पत्ति नेह विद्यते ।
इह आयासशोकानां प्रवृत्तिर्नोपलभ्यते[d] ॥१६६॥
ते तस्य वचनं श्रुत्वा मधुरं देवमानुषा[e] ।
अनुशास्ति[f] तथा कृत्वा प्रतिपद्यन्ति तत्सुखं ॥१६७॥
15 तेनास्ति कीर्तिविस्तीर्णाः[g] त्रिषु लोकेषु चोत्तमाः[h] ।
चरन्ति अर्चिता[i] सद्भिः न चैव प्रशमन्ति[j][k] ते इति ॥१६८॥

परोपहारांश्च[l] भो[m] धुतधर्मधर उपहरन्ति[n] सम्यक्संबुद्धाः सत्वानामनुग्रहार्थं[o] । तद्यथा कलिंगराज्ञः[p] कुसुमाये[q] देव्या परोपहारं[r] भगवां वृत्तवां ध्रुवस्य श्रेष्ठिनो[s] वचनोपहारं भगवां[t] वृत्तवां[u][v] ।

20 तथैव[w] च राजगृहे[x][y] पुरोत्तमे[z]
परोपहारं भगवां[a] प्रवृत्तवां ।

समुत्कर्षेसि[a] स्वविधानकोविदो[b] Sen. 178

उपालिनो[c] तं वचनोपहारं ।।१९९।।

तथापरं[d] मेरुतटे समागतां[e f]

स वादिसिंहो[g] वशिनां[h] वशी वशी ।

परोपहारं भगवां[i] स भिक्षु- 5

संघस्य[j] तं इदमवचा महामुनिरिति ।।२००।।

एतां सर्वां[k] प्रवक्ष्यामि[l] उपहारां[m] मनोरमां ।

तस्य सत्वप्रधानस्य शृणु[n] विक्रीडितं शुभं ।।२०१।।

उत्पन्ने पुरुषश्रेष्ठे[o] धर्मचक्रे[p] प्रवर्तिते[q] ।

कलिंगराजा कारयति[r] राज्यं स्फीतमकण्टकं[s t] ।।२०२।। 10

नामेन[u] अभयो नाम तस्येदं[v] दर्शनंअभूत्[w] ।

शुभाशुभानां[x y] कर्माणां[z] फलं नास्तीति[a] निश्चयः[b] ।।२०३।।

परलोको[c] तथा नास्ति दानफलं[d] क्वचिद्यत्र[e] ।

वीतरागो वीतदोषो वीतमोहो न विद्यते ।।२०४।।

सो[f] तं च दर्शनं[g] प्राप्य जनतां[h] सन्निपातयेत् । 15

स्वकां[i] दृष्टिं[j] समाख्याति[k] पश्चाच्च[l] न निवर्तते ।।२०५।।

यदि[m] मह्यं[n] पिता ब्रुयात्प्रत्यक्षं मम अग्रतः ।

स्वयमुपगम्य[o] एवन्तच्छ्रद्दधे[p] तदा[q] तथा ।।२०६।।

सर्वदा[r] स तदा आसि[s] शीलवां मैत्रमानसो ।

यदि तस्य फलमस्ति[t] तस्य[u] देवपुरं गतिः[v] ।।२०७।। 20 Sen. 179

देवभूतो मम ज्ञात्वा इमां दृष्टिं[w] विमोचयेत् ।

इत्युक्त्वास्ति[x] परलोको[y z] दृष्टिं मुञ्चाहि[a] पापकां[b] ।।२०८।।

यस्य च परलोकस्य प्रवृत्तिर्नोपलभ्यते ।
[a]तस्मात्[b]पिता ममागत्वा [c]संप्रहर्षयतु [d]मानसं ।।२०९।।
ततो लोकानुकम्पार्थं [e]कारुणो महद्विशारदः ।
[f]कलिंगराजस्य रूपं [g]निर्मिणति स्वयं [h]मुनिः ।।२१०।।
5 [i]प्रासादवरमारुह्य [j]अन्तःपुरगतो तथा ।
अन्तःपुरस्य [k]दर्शेति यत्तं प्रकृतिदर्शनं ।।२११।।
[l]ततो स निर्मितो राजा [m]अन्तरीक्षगतस्थितः ।
[n]राजानमभयं धीरो उवाच पुरुषोत्तमः ।।२१२।।
परित्यज्य स्वकार्याणि परकार्येषु [o]व्यापृतः ।
10 मिथ्या[p]दर्शनसंयुक्त[q] अराज्यं [r]राज्यसंज्ञितं ।।२१३।।
[s]अद्य भवे गती तुभ्यं नरको दारुणो महत् ।
ये च ते [t]दर्शयिष्यन्ति तेषामपि च सा गति ।।२१४।।
[u]अन्यान् हि विहतो हन्ति नष्टो [v]नाशयते परां ।
[w]अन्धीकरोति [x]अन्यां पि स्वयमन्धव्य[y]पत्रपो ।।२१५।।
15 [z]सुमुष्टो मुषसे [a]अन्या मृतो च मारसे परां ।
[b]सुखितानपि [c]सत्वा त्वं दुःखापयसि दुर्मते ।।२१६।।
निमग्नो [d]कामपंकस्मि [e]गृद्धु [f]कामेषु मूर्च्छितः ।
Sen. 180 परलोकं[g] द्रष्टुकामो धर्माणां [h]नयनं नृपः ।।२१७।।
[i]अस्थान[j]मेतं भूमिपति यस्त्वं [k]कामपरायणः ।
असमर्थो [l]तर्हि गन्तुं परलोकमिमं [m]प्रभो ।।२१८।।
20 [n]आस्वादं पि तु कामेषु [o]बुद्ध्वा दोषान्तथैव च ।
[p]कामे [q]निःसरणज्ञस्य [r]ते [s]वै जाने [t]परंपरां ।।२१९।।

एतच्छ्रुत्वा नरश्[a]श्रेष्ठो अभयो कम्पितो भयात् ।
प्रह्वो [b]इदमुवा[c]च तं अन्तरीक्षे सुदर्शनं ॥२२०॥
[d]श्रद्दधामि तं ते देव एवमेतं न अन्यथा ।
प्रसीद भव [e]मे नाथ अभयं परिमोचय ॥२२१॥
[f]तद्वशान्तः [g]पु[h]रामात्यः शास्ता [i]मे [j]अप्रतिपुद्गलः । 5
वि[k]नयवशी तवास्मि तथान्या [l]जनता बहु ॥२२२॥
परोपहार [m]इत्येषस्तेन परम[n]बुद्धिना ।
[o]वृत्तो अनुग्रहार्थाय सत्वानां वर[p]बुद्धिना ॥२२३॥
[q]देवी कुसुम्भराजस्य कुसुमा [r]इति [s]विश्रुता ।
[t]इष्टा कुसुम्भराजस्य स्त्रीसह[u]स्राणमु[v]त्तमा ॥२२४॥ 10
[w]तस्य माता पिता चैव [x]जीर्णा दण्डपरा[y]यणा ।
धीतरमेव[z]माहन्सु कुसुमे [a]पुत्रि हे शृणु ॥२२५॥
[b]वयं [c]जार्णा तुवं बाला [d]काम[e]प्रलुलिता असि ।
[f]इच्छेम प्रतिसृ[g]ज्य[h]न्तौ इच्छेम मरणमात्मनः ॥२२६॥ Sen. 181
एतच्च वचनं श्रुत्वा [i]कुसुमा लभते मतं । 15
[j]अवर्णो यं मम अस्या य[k]द्यम्बातातो प्रघात्यते ॥२२७॥
[l]दास्यामि विषसंयुक्तं भक्तमेषां सुदारुणं ।
भुक्त्वा [m]येन उभावेतौ मरिष्यन्ति न संशयः ॥२२८॥
[n]यदास्या निश्चिता बुद्धि मातापितृषु दारु[o]णा ।
[p]ततो [q]उत्पादये शास्ता का[r]रुण्यं कुसुमां प्रति ॥२२९॥ 20
ततः कुसुमाये शास्ता मातरं पितरं तथा ।
अपनामयति [s]संबुद्धो [t]अन्यौ [u]स्थापेति निर्मितौ ॥२३०॥

[a]कुसुमा [b]विषसंयुक्तं तं [c]भोजनमापद्यति ।
[d]निर्मितानाह भुंजन्तु अम्बा तातो च भोजनं ॥२३१॥
अविकम्प[e]माना भुंजन्ति [f]भोजनं जिननि[g]र्मिताः ।
[h]न चैषां बाधते [i]किंचित्[j]कायं निर्मितका हि ते ॥२३२॥
5 द्वितीयं दिवसं [k]चैव [l]तृतीयं [m]चतुर्थं [n]पंचमं ।
[o]विष[p]संयुक्तं [q]भुक्त्वान सुधां व यापेन्ति निर्मितौ ॥२३३॥
ततः कृतां[r]जली भूत्वा कुसुमा निर्मितां ब्रवीत् ।
आत्मानं मे निवेदयथ अनु[s]ग्राह्या यदि अहं ॥२३४॥
तां याचमानां प्राञ्[t]जलिकां कुसुमां नि[u]र्मिता ब्रवीत् ।
10 Sen. 182 [v]या तवापत्ति जानाथ त[w]था च अनुतिष्ठथ ॥२३५॥
[x]बुद्धः पुरुष[y]शार्दूलः [z]द्वात्रिंशवरलक्षणः ।
उत्पन्नः कुल[a]संपन्नः सर्वविद्यागुणान्वितः ॥२३६॥
तस्य [b]सर्वं [c]गुणाभूतं अतीतानाग[d]तस्थितं ।
विदितं वादिसिंहस्य अत्र विजह [e]संशयं ॥२३७॥
15 प्रासादवरमारुह्य सस्त्र्या[f]गारो स पार्थिवः ।
[g]याचे[h]द्द[i]र्शनमिच्छाम [j]वयं सर्वार्थदर्शिनः ॥२३८॥
[k]तं सर्वगुणसंपन्नं वन्दित्वा शरणं [l]व्रजे ।
[m]ततो अ[n]स्माकं यं त[o]त्रैव [p]पृच्छसि वक्ष्यते जिनो ॥२३९॥
साधूति प्रतिश्रु[q]त्वान निर्मितां [r]प्रति सो तदा ।
20 राजा सा[s]न्तःपुरो शीघ्रं [t]प्रासादमभिरूढवां ॥२४०॥
[u]सत्वरं स [v]प्रँह्वो राजा सस्त्र्यागारो कृतांज[w]लिः ।
इमां व्याहरते राजा वाचां कुसुमया [x]सह ॥२४१॥

ये सर्वगुणस[a]म्पन्ना लोकानामनुकम्पका ।

[b]गृहीता अत्यन्तं तेषां सा[c]ञ्जली सौमनस्यका ॥२४२॥

ततो [d]अमन्त्रये शास्ता श्रावकांछासने रतां ।

[e]चारुवर्ण सिंहहनुं दृढबाहुं अनिन्दितं ॥२४३॥

कीर्तिमन्तं [f]महानागं च चातुरन्तं महाबलं । 5

नीलकेशं च बृद्धं च शान्तं शास्त्रविशारदं ॥२४४॥

तथा [g]शारसमतुल्यं गुप्तकाम[h]मनिन्दितं ।

[i]सिंहनन्दि [j]विशालाक्षं लक्षणेयमनुत्तमं ॥२४५॥ Sen. 183

[k]एष [l]भिक्षवो गच्छामि शास्तारमनु[m]बन्धथ ।

कुसुमां प्रमुखां कृत्वा [n]विनेष्यामि [o]बहुं जनं ॥२४६॥ 10

साधूति ते प्रतिश्रुत्वा वशीभूता स्वयंभुवः ।

प[p]रिवारयित्वा संबुद्धं इदं वचनमाहु ते ॥२४७॥

अस्मा[q]कं पि पादो वीरा विहं[r]गमध्यमक्रमः ।

[s]अनुयास्यामः संबुद्धं यत्र गच्छति चक्षुमां ॥२४८॥

[t]निमेषान्तरेण संप्राप्तो भगवां शिष्यसंवृतः । 15

[u]नगरं [v]कुसुमायास्तु अनुकम्पाय प्राणिनां ॥२४९॥

[w]आकारं [x]वज्रपाणिस्य ना[y]यको अभिनि[z]र्मिणे ।

देवसंघं च मनसा ध्याये ध्यानवि[a]शारदः ॥२५०॥

प्रभामण्डलमु[b]त्सृजे योजनानि च[c]तुर्दश ।

[d]देवता च अभिवादे[e]न्ति यात्रां परमबु[f]द्धिनः ॥२५१॥ 20

ततो च कुसुमा दे[g]वी प्रह्वी सुगतमब्रवीत् ।

[h]एषा ते प्राञ्जली नाथ पादां इच्छामि व[i]न्दितं ॥२५२॥

ततः प्रतिष्ठितो शास्ता प्रासादवरमूर्धनि[a] ।
प्रभया च दिशा सर्वा[b] अभिभूय यशस्करः ॥२५३॥
ततो च कुसुमा[c] देवी सह राज्ञा जिनक्रमां[d] ।
वन्दते परिवारो[e] च देवियै[f][g] नरपुङ्गवं[h] ॥२५४॥
5 शरणं[i] त्वां नरश्रेष्ठ गच्छाम सुरवन्दित ।
मातरं[j] पितरं हत्वा कीदृशं लभते फलं ॥२५५॥
Sen. 184 शृणोहि कुसुमे सत्यं मातापितृवधे फलं ।
अनन्तरं[k] महावीचिं नरकं[l] उपपद्यते ॥२५६॥
ततो बुद्धानुभावेन शास्ता वदथकोविदः ।
10 कुसुमाया[m][n] महावीचिं उपदर्शेति नायकः ॥२५७॥
ततो[o] च कुसुमा देवी निरयं[p] त्रस्य दारुणं ।
अश्रुवेगं[q][r] प्रमुञ्चन्ती[s] इदं[t] वचनमब्रवीत् ॥२५८॥
मातापितृभ्यां कारुणिका दुष्टचित्तस्य कीदृशं[u] ।
परलोके[v] फलं भवति यत्सत्यं[w] तदुदीरय ॥२५९॥
15 दुष्टचित्तस्य कुसुमे[x] तं चित्तं[y] स्यादमुञ्चियं[z] ।
तदेव[a] परलोकस्मिं फलं सद्यं च हिंसया[b] ॥२६०॥
ततो च[c] प्रतिनिःसृजति[d] कुसुमा[e] दारुणं मनं ।
पुरतो धर्मराजस्य प्रीतिसुखसमर्पिता[f] ॥२६१॥
ततो कामान आस्वादं भाषते सर्वकोविदः ।
20 आदीनवं[g] च कामानां[h] भाषते पुरुषोत्तमः ॥२६२॥
ततो[i] कामानां निःसरणं भाषते चिन्त्यविक्रमः ।
गुणान्वदति[j] निर्वाणे अद्भुतां भूतदर्शिमान्[k] ॥२६३॥

कुसुमां प्रमुखां कृत्वा कोटीयो द्वादश मुनिः ।

मानुषाणां विनयति उपहारो [a]अयं इति ॥२६४॥

ध्रुवो नाम [b]अभूच्छ्रेष्ठी नगरे [c]काशिवर्धने ।

[d]तस्येदं दर्शनं पापं मातापितृसमागमे ॥२६५॥

[e]यो मातरं च पितरं च [f]जीर्णकं [g]गतयौवनं । 5

ज्ञातिपक्षं [h]समानेत्वा [i] [j]भक्ष्यभोज्येन तर्पयेत् ॥२६६॥ Sen. 185

[k]अग्निस्कन्धे च ज्वलिते दाहयेय पितृनुभौ ।

उपहारो विधातव्यो तस्य [l]पुण्यमनन्तकं ॥२६७॥

राक्षसीनां सहस्राणि नायको [m]अभिनिर्मिणि ।

प्रासादवर[n]सुप्तस्य ध्रुवस्य पुरतः [o]स्थिता ॥२६८॥ 10

[p]दण्डहस्ता [q]कशाहस्ता शक्तिहस्ता तथैव च ।

[r]कुठार[s]हस्ता [t]असि[u]हस्ता उल्काहस्ता तथैव च ॥२६९॥

अथ [v]तोमरहस्ता [w]च नाराचशत[x]पाणियो ।

[y]कुन्त[z]मुद्गर[a]हस्ताश्च [b]श्रेष्ठिस्य [c]पुरतः स्थिताः ॥२७०॥

धिक्कृतां धिक्कृतां [d]दृष्टिं प्राप्तोऽसि पुरुषाधमा । 15

[e]धिक्कृतं [f]मिथ्यात्वमासाद्य [g] न [h]श्रद्दधितुमर्हसि ॥२७१॥

[i]ये ते दुष्करकर्तारः ये ते [j]पूर्वोपकारिणः ।

[k]मैत्रचित्ता आपन्नेषु तेषु त्वं [l]वधमिच्छसि ॥२७२॥

येषां न शक्यं [m]प्रतिकर्तुं [n]अपत्येन [o]कथं [p]चन ।

सर्वरत्नं पि [q]ददता तेषां [r]त्वं वधमिच्छसि ॥२७३॥ 20

[s]जीवितात्ते मृतं श्रेयो न च दर्शनमीदृशं ।

[t]यः त्वं सुपुरुषाचीर्णं दर्शनं प्रतिबाधसे ॥२७४॥

अद्य ते. जीवितं नास्ति सभार्यस्य सबन्धुनः ।
[a]सभृत्यस्य [b]सपुत्रस्य प्रेत्य च निरयं गतिः ॥२७५॥
इमंहि नाम एवं वा मारिष भद्रमस्तु[c] वः ।
मिथ्यादर्शनसम्पन्नं मूढापण्डितमानसं ॥२७६॥
5 Sen. 186 [d]परां [e]अन्यां पि जनतां ग्राहेन्तं पापदर्शनं ।
ध्रुवं [f]श्रेष्ठि [g]विनाशेम आर्यदर्शनकुत्सकं ॥२७७॥
एतन्तु वचनं श्रुत्वा ध्रुवो [h]उद्विग्नमानसः ।
[i]सस्विन्नगात्रो [j]प्रह्लश्च [k]बभूव त्रस्तमानसः ॥२७८॥
[l]भ्रान्तचित्तो दिशोवेक्षी त्रस्तो भवति मानसः ।
10 कृताञ्जलिपुटो [m]भूत्वा इदं वचनमब्रवीत् ॥२७९॥
रक्षोगणो [n]प्रसीदंतु परिवारस्य मह्य च ।
[o]युष्मे गतिश्च लेनश्च मम शरणमेव च ॥२८०॥
आज्ञापयथ किं कृत्वा [p]मह्याद्य अभयं [q]भवे ।
मम सबन्धुवर्गस्य [r]न चागच्छेय [s]दुर्गतिं ॥२८१॥
15 [t]ते च ब्रवीन्सु भूतगणा ध्रुवं [u]श्रेष्ठि नभे स्थिता ।
मा [v]अस्माकं शरणं गच्छ तमेव शरणं [w]व्रज ॥२८२॥
[x]हितैषिणं सर्वभूतानां बुद्धं [y]धुतजनार्चितं ।
सर्वलोको[z]त्तरं वादिं शाक्यसिंहं मनोरमं ॥२८३॥
[a]कहिन्नु सो......[b]भगवां [c][d]भूतवन्दितो ।
20 [e]वयं पि तं [f]नरश्रेष्ठं [g]गच्छेम शरणं मुनिं ॥२८४॥
[h]एषो सर्वगुणोपेतः [i]पुरे [j]रतनखोलके ।
नाना [k]कुसुमसंछन्ने · [l]उद्याने गन्धमादने ॥२८५॥

वशीभूतसहस्राणां नवतीहि पुरस्कृतो ।

विहार[a]कुशलो धीरो तत्र विहरते [b]मुनिः ॥२८६॥

तं त्वं [c]शरणं [d]गच्छाहि सर्वेहि ज्ञातिभिः [e]सह । Sen. 187

तं च [f]पश्य [g]नरादित्यं तां च दृष्टि परित्यज ॥२८७॥

यं च सो देशते [h]धर्मं [i]दृष्टा[i]न्तविहितं शुभं । 5

तं च [k]प्रज्ञाय [l]पश्याहि एवन्ते जीवितं भवेत् ॥२८८॥

[m]अगत्वा च तुवं [n]श्रेष्ठि न ध्रुवं [o]प्रतिपत्स्यसे ।

इदन्ते मरणं [p]सद्यं तं श्रद्धानो [q]समाचर ॥२८९॥

[r]ततः [s]श्रेष्ठि [t]सबन्धुजनो भूत्वा [u]सुदीनमानसो ।

[v]मूर्धिना पतितो भूमौ [w]यतो सोपुरुषोत्तमः ॥२९०॥ 10

सर्वाकारगुणोपेतो महाकारुणिको [x]मुनि ।

[y]सबन्धुपक्षो शरणं [z]उपेमि त्वा महायशा ॥२९१॥

भीतस्य भयान्तकर [a]अभयं [b]दातुमर्हसि ।

[c]सपक्षो भो महासत्व अहं [d]भय[e]परायणो ॥२९२॥

[f]इच्छामि चरणं [g]शास्तुः [h]वन्दितुं [i]वादिनां वर । 15

द्रष्टुमिच्छामि [j]सत्पुरुषं अनुग्राह्या यदि वयं ॥२९३॥

[k]ततो अभ्युद्गतो शास्ता वशीभूतपुरस्कृतः ।

[l]निमेषान्तरेण [m]संप्राप्तो सत्वानुकम्पाय नायकः ॥२९४॥

[n]तं दृष्ट्वा गगणे [o]स्थितं दान्तं क्षान्तं पुरस्कृतं ।

सौमनस्यं समुत्पन्नं [p]श्रेष्ठि[q]स्य सह बन्धुभिः ॥२९५॥ 20 Sen. 188

[r]शरणं [s]वादिशार्दूलं [t]श्रेष्ठी तत्र [u]उपागतः ।

[v]सुजातदर्शनत्वं च [w]श्रेष्ठी [x]पर्य[y]धिगच्छसि ॥२९६॥

तस्यात्ययं[a] नरश्रेष्ठो[b] परिगृह्य तथागतो[c] ।
सत्यवादी[d] उदीरेति सत्यानि चतुरामुनिः[e] ॥२९७॥
शुभाशुभानां कर्मणां फलं विस्तरशो[f] विभुः ।
प्रकाशये[g] नरादित्यो[h] सिंहो[i] वा[j] नदते वने ॥२९८॥
सिंहनादं[k] इमं श्रुत्वा श्रेष्ठि[l] परिजनैः[m] सह ।
प्राप्नोति मधुरं सत्यं फलं प्रथमके[n] क्षणे ॥२९९॥
यत्तस्य परिकर्म[o] तत्कृतं पन महर्षिणा ।
तमाहुरुपहारोति[p] [q] सर्वधर्मविशारदाः ॥३००॥
तरुर्नाम[r] अभू[s] राजा द्वीपे[t] कस्मि[u] चि सागरे ।
तस्य दर्शनमुत्पन्नं पापकं[v] बालिशप्रियं ॥३०१॥
यो[w] ब्राह्मणं[x] वा श्रमणं वा अन्यं[y] वापि वनीयकं ।
आमन्त्रेत्वा न भोजयते[z] तमाहुः[a] श्रेष्ठलक्षणं[b] ॥३०२॥
महाजनं[c] निमन्त्रेत्वा बहुं च[d] शूद्रब्राह्मणां[e] ।
यो[f] बुभुक्षायमानेति[g] कृत्वा[h] कारानिबन्धनं ॥३०३॥
(Sen. 189) उत्तरागमने[i] कुलवा महेशाख्यो[j] महायशाः ।
प्रभूतवस्त्राभरणो[k] तत्र[l] सो चोपपद्यते ॥३०४॥
ग्राहेति जनतां राजा[m] एवं पापेन[n] चेतसा ।
ते तस्य वचनं श्रुत्वा श्रद्दधाति[o] महाजनः ॥३०५॥
एतं दर्शनं[p] विज्ञाय देवगन्धर्ववन्दितः ।
पंच भिक्षुसहस्राणि[q] क्षणेन निर्मिणे[r] मुनिः ॥३०६॥
ते तं द्वीपमुपागम्य[s] तरुर्यत्र[t] जनाधिपः ।
राज्यं[u] पालयते तत्र चंक्रमिषु[v] वशीगणा[w] ॥३०७॥

ते तु नराधिपो[a] दृष्ट्वा[b] निर्मिता[c] भिक्षुवर्णिता[d] ।

वाहनतो[e]तरित्वान[f] वन्दित्वा[g] पादमब्रवीत् ॥३०८॥

निमन्त्रयामि[h] ऋषयो प्रीतो भक्तेन तत्त्वतः[i] ।

अधिवासेन्तु[j] मे[k] ऋषयो अनुग्राह्या यदि वयं ॥३०९॥

अधिवासितं[l] विदित्वा ततो निर्धावते[m] पुनः । 5

पादां वन्दित्वा ऋषीणां[n] गतो[o] राजकुलं[p] स्वकं ॥३१०॥

रात्रिं प्रभातां विज्ञाय राजपुरुषमब्रवीत् ।

गच्छ[q] त्वं ऋषयोपगम्य[r] सिद्धेन त्वं निमन्त्रय[s] ॥३११॥

ते च प्रवेशिता[t] राज्ञा[u] ऋषि वेशमत्यद्भुतं[v] ।

शरण्यं[w] गुणसंपन्नं[x] दृढार्गलसुयन्त्रितं[y][z] ॥३१२॥ 10

सप्ताहे[a] समतिक्रान्ते[b] राजा[c] तां प्रत्यवेक्षते[d][e] ।

अदीनमुखवर्णाश्च[f][g] ध्यायन्ते[h] भिक्षुवर्णिता[i] ॥३१३॥ Sen. 190

सो भूयः परिवर्जेत्वा[j] निर्मिता मनुजाधिपः ।

द्वितीयं[k] समतिक्रम्य द्वितीये[l] प्रत्यवेक्षते ॥३१४॥

तृतीये[m] च चतुर्थे[n] च पंचमे षष्ठसप्तमे[o] । 15

नवमे दशमे[p] सप्ताहे इदं वचनमब्रवीत् ॥३१५॥

देवा[q] च नागा गन्धर्वा यक्षा च गुह्यकासुरा ।

आगता[r] ऋषिरूपेण[s] मम संवेगकारणात् ॥३१६॥

निवेदयथ आत्मानमनुग्राह्या[t] यदि वयं ।

अथास्माकमनुग्राह्यो[u][v] आत्मानं[w] परिवेदये ॥३१७॥ 20

अनुग्राह्योसि[x] भूमिपते इदं[y] वचनमुवाच[z][a] ते ।

यद्वयं[b] वचनं[c] ब्रूम तथा[d] तमनुतिष्ठत[e] ॥३१८॥

एषो[a] काशीपुरे शास्ता वाराणस्यां बने[b] शुभे।
पारगः[c] सर्वधर्माणां सर्वसंशयसूदनः[d] ॥३१९॥
प्रासादवरमारुह्य[e] याचे प्रह्वः सबान्धवः।
इच्छाम पुरुषश्रेष्ठं[f] द्रष्टुमप्रतिपुद्गलं[g][h][i] ॥३२०॥

5 स एतद्वचनं श्रुत्वा तथेति[j] उदपादयि[k]।
अथ वैहायसं शास्ता तं द्वीपमुपसंक्रमीत्[l][m] ॥३२१॥
वशीभूताश्च चत्वारो[n] कुंजरो करभोगजः।

Sen. 191 वारणो[o] थ महाध्यायी मनापो[p] थ समागता[q] ॥३२२॥
ते पश्यितून[r][s] संबुद्धं विरोचन्तं शशिप्रभं।

10 तथा[t] स्तुवन्ति प्रांजलियो भूतधर्मगुरुं[u] गुरु ॥३२३॥
प्रसन्नचित्ता सुमना[v] सर्वाकारगुणान्विता[w]।
नाथ[x] मरुमनुष्याणां नमस्ते नरलम्बक[y] ॥३२४॥
को नाम त्वं महासत्व महातेजा महाद्युते[z]।
महाबुद्धि महाबाहु[a] यथातथमुदीरय[b] ॥३२५॥

15 राजवंशसमुत्पन्नो[c][d] धर्मराज्यप्रतिष्ठितः[e][f]।
शरणं सर्वभूतानां[g] अहं बुद्ध[h] इति विदुः ॥३२६॥
अहं मरुमनुष्याणां नाथो[i] नेता चिकित्सकः[j]।
अहं संशयान्तकरः[k] संबुद्धो देववन्दितः ॥३२७॥
एतच्छ्रुत्वा[l] तरु राजा संबुद्धमिदमब्रवीत्।

20 नमस्ते वादिशार्दूल[m] सर्वसंशयसूदन[n] ॥३२८॥
प्रासादवरमारुह्य[o] सबन्धुपक्षो[p] सज्जना[q]।
सराष्ट्रीं[r] शरणं गच्छामि तस्य नो शरणं[s] भव ॥३२९॥

स्वकं च दर्शनं[a] राजा समाख्याति महर्षिणः ।

तच्छ्रुत्वा नरशार्दूलो[b c] राजानमिदमब्रवीत् ॥३३०॥

न[d] ते लाभा[e] भूमिपते[f] यस्त्वं दुर्गतिगामिनं ।

पापं[g] श्रद्दधसे मार्गन्तां[h] दृष्टि[i] प्रतिनिःसृज[j] ॥३३१॥ Sen, 192

तां[k] दृष्टि[l] प्रतिनिःसृज्य[m] राजा वचनमब्रवीत्[n] । 5

धर्ममाख्याहि[o p] मां धीर यत्र[q] दुःखं निरुध्यते ॥३३२॥

तस्य च धर्मसंयुक्तं भावये[r] पुरुषोत्तमः[s] ।

कुशलं सर्वसत्वानां बुद्धधर्मविशारदः ॥३३३॥

सो तं धर्मं[t] विजानित्वा[u] राजा परिजनैः[v] सह ।

त्रीणि संयोजनां[w] त्यक्त्वा[x] प्राप्तवां प्रथमं फलं[y] ॥३३४॥ 10

असंख्येया च जनता प्राप्तवान्प्रथमं फलं ।

पश्य सत्पुरुषा राजं[z] मन्त्रिया[a] बलमुत्तमं[b] ॥३३५॥

ये[c] तत्र निर्मिता[d] भिक्षूः न चैते[e] भिक्षुणो[f] मता ।

उपहारं वदन्त्येतं[g h] जिना शास्त्रविशारदाः[i j] ॥३३६॥

अस्थानमेव[k] जिनपुत्र[l] यदा[m] स्थूलाहि भूमिहि । 15

तत्पुरे[n] अधिगच्छेयुः सवज्ञत्वं तथागताः[o] ॥३३७॥

कालं[p] व नातिनामेन्ति[q] परिपूर्णाहि भूमिहि ।

दर्शेन्सु[r] वादिशार्दूला[s] इत्येवं पुरुषोत्तमा[t] ॥३३८॥

वाराणसीं[u] वनं गत्वा बुद्धधर्मपुरस्कृतो ।

विस्तरेण[v] प्रकाशयति[w] नायको भूमयो[x] दश ॥३३९॥ 20

नयानयज्ञाः[y] संबुद्धाः सर्वपरमतं विदुः ।

अध्याशयं परीक्षन्ति[z a] जातका सर्वप्राणिनां ॥३४०॥

मधुरेण सुगीतेन नयेन[a] गुणदर्शिन: ।

Sen. 193 सुविनीता[b] बहु जनता[c] संबुद्धेन प्रजानता ॥३४१॥

न[d] जायन्ति न[e] जीर्यन्ति न म्रियन्ति[f] कथं चन ।

परमं मित्रमासाद्य विनीता वरबुद्धिना[g] ॥३४२॥

5 गम्भीरचरितं[h i] धीरा[j] प्रजानन्ति परस्परं ।

अनन्तप्रतिभानं च सर्वे सर्वाङ्गशोभना[k l] इति ॥३४३॥

इति श्रीमहावस्तुअवदाने अभिषेकवती नाम दशमा[m] भूमिः समाप्ता ॥

शिखरे गृध्रकूटस्मि[n] पञ्चानां वशीभूतशतानां[o] समवाये दशभूमिकं[p] नाम उपदेश-मुखं भाषितं । समाप्तं[q] दशभूमिकं । ये सत्वा[r] बुद्धत्वाय प्रणिधेन्ति[s t] तेहि उद्देशितव्यं[u v] 10 दशभूमिकं बोधिसत्वानां च दृष्टसत्यानां[w] श्रद्दधानानां दातव्यं[x] नान्येषां एते[y] ह्यत्र श्रद्दधाना अन्ये विचिकित्सेयुः[z] ।

समाप्ता आदिभूमि[a] यावद्दशमा दशभूमयः महावस्तुपरिसरं[b] ।

दीपंकरवस्तुस्यादिः । इतो महामौद्गल्यायन[c] अपरिमिते[d] असंख्येये कल्पे[e] राजा अर्चिमां[f] नाम अभूषि[g] चक्रवर्ती कृतपुण्यो महेशाख्यो सप्तरत्नसमन्वागतो[h] चातुर्द्वीपो 15 विजितावी अनुरक्तपौरजानपदो धार्मिको धर्मराजा दश कुशला कर्मपथा[i] समादायवर्ती । तस्य सप्त रतनानि अभूत्[j] । तद्यथा चक्ररत्नं हस्तिरतनं अश्वरत्नं मणिरतनं स्त्रीरतनं[k] गृहपतिरत्नं परिणायकरतनं एवं[l] सप्तरत्नं । पूर्णं चास्य पुत्रसहस्रं अभूषि[m] शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानां । सो इमां चत्वारि महाद्वीपां सागरगिरि-पर्यन्तां[n] अखिलां अकण्टकां अदण्डेनाशास्त्रेणानुत्पीडेन धर्मेणेमां अभिनिर्जिणित्वा[o p] 20 Sen. 194 अध्यावसि । अर्चिमतो खलु पुनः महामौद्गल्यायन[q] राज्ञो दीपवती[r] नाम राजधानी अभूषि[s] द्वादश योजनानि आयामेन पुरस्तिमेन[t] च पश्चिमेन[u] च सप्त योजनानि

विस्तारेण द[a]क्षिणेन च उत्तरेण च सप्तहि प्राकारेहि परिक्षिप्ता अभूषि सौवर्णेहि सुवर्ण-[b]प्रच्छन्नेहि। दीपवती खलु पुन[c]र्महा[d]मौद्गल्या[e]यन राजधानी सप्तहि तालप[f]ङ्क्तिहि परिक्षिप्ता अभूषि चित्राहि दर्शनीयाहि सप्तानां रत्नानां सुवर्णस्य रूप्यस्य मुक्ताया [g]वै[h]डूर्यस्य स्फटिकस्य मुसारगल्वस्य लोहि[i]तिकायाः। सौवर्णस्य तालस्कन्धस्य रूप्यमयं पत्रं च फलं च अभूषि। रू[j]प्यमयस्य तालस्कन्धस्य [k]मुक्ताया पत्रा च फला च अभूषि। मुक्तामयस्य तालस्कन्धस्य वैडूर्यमया पत्रा च फला च अभूषि। वैडूर्यमयस्य ताल-स्कन्धस्य स्फटिकस्य पत्रा च फला च अभूषि। स्फटिकमयस्य तालस्कन्धस्य मुसारगल्वमया पत्रा च फला च अभूषि। मुसारगल्वमयस्य तालस्कन्धस्य लोहिति-कामया पत्रा च फला च अभूषि। लोहितिकामयस्य तालस्कन्धस्य मुक्तामया पत्रा च फला च अभूषि। [l]तेषां खलु पुनः [m]महामौद्गल्या[n]यन तालानां वाते[o]रितानां वातसंघट्टितानां घोषो निश्चरति वल्गु मनो[p]ज्ञः [q]आसेचनको अप्रतिकूलो श्रवणाय। तद्यथापि नाम पंचाङ्गिकस्य तूर्यस्य कुशलेहि वादकेहि स[r]म्यक्सुप्रवादितस्य [s]घोषो निश्चरति वल्गु [t]मनोज्ञो आसेचनको [u]अप्रतिकूलो [v]श्रवणाय। [w]एवमेव······भो [x]महामौद्गल्यायन तेन कालेन तेन समयेन दीपवतीये राजधानीये मनुष्या [y]अभूषि [z]शुण्डापेया ते तेन तालपत्रनिर्घोषेण पंचहि कामगुणेहि समर्पिता [a]समङ्गी[b]भूता क्रीडेन्सु रमेन्सु प्रविचारेन्सु।

दीपव[c]ती खलु पुनर्म[d]हामौ[e]द्गल्यायन [f]राजधानी सप्तहि वेदिकाजालेहि परिक्षिप्ता [g]अभूषि चित्राहि दर्शनीयाहि सप्तानां वर्णानां सुवर्णस्य रूप्यस्य मुक्ताया [h]वैडूर्यस्य स्फटिकस्य मुसारगल्वस्य लोहि[i]तिकाया। [j]सौवर्णस्य पादकस्य रूप्यमयी सूचिका आलम्बनमधिष्ठानकं चाभूषि। रूप्यमयस्य पादकस्य मुक्तामया सूचिका आलम्बन-[k]मधिष्ठानकं च अभूषि। [l]मुक्तामयस्य वैडूर्यमयी वैडूर्यमयस्य स्फटिकमयी स्फटिकमयस्य मुसारगल्वमयी मुसारगल्वमयस्य लोहितिकामयी। लोहितिकामयस्य [m]पादकस्य सौवर्णिका सूचिका आलम्बनमधिष्ठानकं च अभूषि। ते[n] च खलु पुनर्म[o]हामौद्गल्यायन वेदिकाजाला

द्विहि हेमजालेहि प्रतिच्छन्ना अभूषि[a] सुवर्णमयेन च हेमजालेन[b] रूप्यमयेन[c] च। सौवर्णस्य[d][e]
हेमजालस्य रूप्यमयीयो[f] किंकिणीयो अभूषि। रूप्यमयस्य[g] हेमजालस्य सौवर्णिका
किंकिणिका अभूषि। दीपवतीयं खलु पुनः राजधानीयं[h] समन्ततो[i] त्रीणि त्रीणि द्वाराणि
अभूषि[j] चित्राणि दर्शनीयानि सप्तानां रत्नानां सुवर्णस्य रूप्यस्य मुक्ताया वैडूर्यस्य
5 स्फटिकस्य मुसारगल्वस्य लोहितिकायाः। तेषां खलु पुनर्महामौद्गल्यायन[k] द्वाराणां[l]
द्विन्नां वर्णानां व्यामोत्संगा[m] अभूषि[n] सुवर्णस्य च रूप्यस्य च। द्विन्नां[o] वर्णानां[p] तुला
अभून्सुः सुवर्णस्य च रूप्यस्य[q] च। द्विन्नां[r] वर्णानां अनुवर्गा अभून्सुः सुवर्णस्य च रूप्यस्य
च। द्विन्नां[s] वर्णानां फटिकफलकानि अभून्सुः सुवर्णस्य च रूप्यस्य च। द्विन्नां[t] वर्णानां[u]
फलकस्तारा अभून्सुः[v] सुवर्णस्य च रूप्यस्य[w] च। चतुर्णां वर्णानां पटिमोदका अभुन्सुः[x]
10 सुवणस्य च रूप्यस्य मुक्ताया वडूर्यस्य[y]। तेषां[z] खलु पुनर्महामौद्गल्यायन[a] द्वाराणां[b]
द्विन्नां[c] वर्णानां एलूका अभून्सुः[d] सुवर्णस्य[e] रूप्यस्य च। तेषां खलु पुनर्महामौद्गल्यायन[f]
द्वाराणां चतुर्णां वर्णानां इन्द्रकीलका[g] अभुन्सु[h] सुवर्णस्य च रूप्यस्य च मुक्ताया वैडूर्यस्य
च। द्विन्नां[i] वर्णानां कपाटानि अभून्सुः सुवर्णस्य च रूप्यस्य[j] च। द्विन्नां[k] वर्णानां अर्गल-
Sen. 196 पाशा अभुन्सुः सुवर्णस्य च रूप्यस्य च। तेषां खलु पुनर्महामौद्गल्यायन[l] द्वाराणां पुरतो
15 इषिकानि मापितानि अभून्सुः[m] त्रिपौरुषनैखान्यानि[n] त्रिपौरुषपरिगोह्यानि[o] द्वादशपौरुषा[p]
उद्वेधेन चित्राणि दशनीयानि सप्तानां वर्णानां सुवर्णस्य रूप्यस्य मुक्ताया वैडूर्यस्य[q]
स्फटिकस्य[r] मुसारगल्वस्य लोहितिकायाः। ते खलु पुनमहामौद्गल्यायन[s][t] द्वारा[u] द्विहि
द्विहि हेमजालेहि प्रतिच्छन्ना अभून्सुः सौवर्णिकेन[v] हेमजालेन रूप्यमयेन हेमजालेन[w]।
सुवणस्य हेमजालस्य रूप्यमयीयो[x] किंकिणीयो[y][z] अभून्सुः रूप्यमयस्य हेमजालस्य सौवर्णिका
20 किंकिणीयो अभून्सुः। तेषां[a] खलु पुनर्महामौद्गल्यायन[b] हेमजालानां[c] वातेरितानां[d]
वातसंघट्टितानां घोषो निश्चरति वल्गु मनोज्ञः आसेचनको अप्रतिकूलो श्रवणाय।
........एवमेव महामौद्गल्यायन[e][f] तेषां हेमजालानां वातेरितानां वातसंघट्टितानां[g][h]· घोषो

निश्चरति वल्गु मनोज्ञः आसेचनको अप्रतिकूलो श्रवणाय। [a]दीपवती खलु पुनर्भो [b]महामौद्गल्यायन राजधानी अशून्या अभूषि इमेहि एवंरूपेहि श[c]ब्देहि सय्यथापि हस्तिशब्देहि रथशब्दे[d]हि पत्तिशब्देहि भेरीशब्देहि मृदङ्गशब्देहि पणवशब्देहि शंख-शब्देहि वेणुशब्देहि वीणाशब्देहि गीतशब्देहि वा[e]दित्रशब्देहि अश्नुथ खादथ पिवथ देथ दानानि करोथ [f]पुण्यानि धर्मे चरथ श्रमणब्राह्मणेषु [g]भद्रमस्तु वः ति शब्देहि। 5

दीपवतीयं खलु पुनः राजधानीयं मध्ये वल्गुया नाम यष्टि [h]अभूषि [i]चित्रा दर्शनीया स[j]प्तानां वर्णानां सुवर्णस्य रूप्यस्य मुक्ताया [k]वैडू[l]र्यस्य स्फटिकस्य मुसारगल्वस्य लोहितिकाया द्वादशयोजनानि उद्वेधेन [m]चत्वारि योजनानि अभिनिवेशेन।

अर्चिमतो खलु [n]पुनः महा[o]मौद्गल्यायन [p]राज्ञः सुदीपा नाम अग्रमहिषी अभूषि प्रासादिका दर्शनीया [q]अक्षुद्रावकाशा परमाये शुभाये वर्णपुष्कलताये समन्वागता। 10

[r]द्वादशेहि [s]महामौद्गल्या[t]यन वर्षेहि दीपंकरः बोधिसत्वो तुषितभवनातो [u]च्यविष्यति शुद्धावासा देवा प्रत्येकबुद्धानां [v]आरोचय[w]न्ति। बोधिसत्वो च्यविष्य[x]ति Sen. 197 रिंचथ बुद्धक्षेत्रं।

तुषितभवना[y]दतियशो च्यविष्यति अनन्तज्ञानद[z]र्शावी।
रिंचथ बुद्धक्षेत्रं.........................वरलक्षणधरस्[a]य ॥१॥ 15
ते [b]श्रुत्व बुद्धशब्दं प्रत्येकजिनाः महेश्वरवराणां।
[c]निर्वांसु मुक्तचित्ता स्वयंभुनो चित्तवशवर्ती ॥२॥

द्वादशेहि [d]महामौद्गल्या[e]यन वर्षेहि दीपंकरो बोधिसत्वो [f]तुषितभवनातो च्यविष्यति शुद्धावासा देवा ब्राह्मण[g]वेषं [h]निर्मिणित्वा मन्त्रांश्च वे[i]दांश्च द्वा[j]त्रिंशच्च महापुरुषलक्षणानि ब्राह्मनानां वाचेन्ति यथा बोधिसत्वे इहागते [k]व्याकरेन्सुः। 20

अथ खलु [l]महामौद्गल्यायन बोधिसत्वो च्यवनकाले तुषितभवनातो चत्वारि [m]महाविलोकितानि विलोकयति। तद्यथा कालविलोकितं देशविलोकितं द्वीपविलोकितं

कुलविलोकितं। द्विहि कुलेहि महामौद्गल्यायन[a] बोधिसत्वा[b] जायन्ति[c] क्षत्रियकुले ब्राह्मणकुले वा। यस्मि कुले महामौद्गल्यायन[d] बोधिसत्वा जायन्ति तं कुलं षष्टीहि अङ्गेहि[e] समन्वागतं भवति। कतमेहि षष्टीहि[f] अङ्गेहि[g] समन्वागतं भवति। अभिज्ञातं च महामौद्गल्यायन[h] तं कुलं भवति। परिज्ञातं च तं कुलं भवति। अक्षुद्रावकाशं च तं कुलं भवति। जातिसम्पन्नं च भवति[i]। गोत्रसम्पन्नं च पूर्व[j]पुरुषयुगसम्पन्नं[k] च। अभिज्ञात-पूर्वयुगसम्पन्नं च। महेशाख्यपूर्वयुगसम्पन्नं च। बहुस्त्रीकं[l] च। बहुपुरुषं च। अलोलं[m] च। अलुब्धं च[n]। अभीतं च। अदीनं च। प्रज्ञावन्तं च[o]। शीलवन्तं च[p]। स्वापतेयमप्रेक्षमाणं[q] च। तं कुलं भोगां च भुंजति[r]। दृढमित्रं च तं कुलं भवति[s]। कृतज्ञं च[t]। विधिज्ञं च। [Sen. 198] अच्छन्दगामी च। अदोषगामि[u] च। अमोहगामि[v] च। अभयगामि च[w]। अवद्यभीरु च। स्थूलभिक्षं[x] च। पुरुषकारमतिं च। दृढ[y]विक्रपणं[z] च[a][b]। चेतियपूजकं च। देवपूजकं च[c]। पूर्वपितृ-पूजकं च[d]। क्रियाधिमुक्तं च[e]। त्यागाधिमुक्तं च[f]। व्रताधिमुक्तं[g] च। लब्धपूर्वापरं[h] च। अभिदेवघोषघुष्टं[i] च। कुलज्येष्ठं[j] च। कुलश्रेष्ठं च। कुलप्रवरं[k] च। कुलवशिप्राप्तं च। महेशाख्यं च[l]। महापरिवारं[m] च। अश्रमपरिवारं च। अनुरक्तपरिवारं[n] च। अभेद्यपरिवारं[o] च। मातृज्ञं च[p]। पितृज्ञं च। श्रामण्यं च[q]। ब्राह्मण्यं च। कुलज्येष्ठापचायकं[r] च। प्रभूतधन-धान्यं च। प्रभूतकोशकोष्ठागारं[s] च। प्रभूतहस्त्यश्वगवेडकं[t] च। प्रभूतदासीदासकर्मकर[u]-पौरुषेयं च। दुष्प्रधर्षं[v] च तत्कुलं भवति[w] परेहि प्रत्यर्थिकेहि प्रत्यमित्रेहि। यस्मि कुले महामौद्गल्यायन[x] बोधिसत्वा जायन्ति तत्कुलं इमेहि षष्टीहि अंगेहि समन्वागतं[y] भवति। ये ते सत्वा कुलसंपन्ना[z] भवन्ति एवंरूपा सत्वा महाकरुणां प्रतिलभन्ति।

अथ महामौद्गल्यायन[a] बोधिसत्वो च्यवनकाले महासंविधानं करोति। देवपुत्र-सहस्राणि देवपुत्रेण उक्ता[b]। षोडशहि[c] महाजनपदेहि मध्यदेशेहि उपपद्यथ[d] क्षत्रियमहा-शालेषु च कुलेषु गृहपतिमहाशालेषु कुलेषु च राजकुलेषु च राजामात्यकुलेषु च। युष्मेहि[e] विनीतेहि महाजनकायो विनयं आगमिष्यति[f]।

बोधिसत्वो च्यवनकाले अवलोकयति कहिमुपपद्यामि। [a]अयं अर्चिमो राजा कतपुण्यो महेशाख्यो च [b]चक्रवर्ती चतुर्द्वीपाधिपतिः एषो मम [c]पिता योग्यो। मातर- Sen. 199 [d]मन्वेषति या प्रासादिका भवेय [e]कुलीना च [f]शुचिगात्रा च मन्दरागा च अल्पायुष्का च यस्या शेषा ससप्तरात्रा दश मासा आयुष्प्रमाणतो अवशिष्टा भवेन्सुः।

[g]सर्वेषां बोधिसत्वानां जनेत्वा पुरुषोत्तमां। 5
[h]चरमे सप्तमे दिवसे माता जहति जीवितं ॥३॥
अत्र किं कारणं [i]भवति यदि सर्वज्ञमातरो।
जनेत्वा [j]पुरुषश्रेष्ठं शीघ्रं जहन्ति जीवितं ॥४॥
[k]वसन्तो तुषिते काये बोधिसत्वो महास्मृतिं।
लभते [l]शुभकर्मेण परीक्षन्तो जनेत्रियं ॥५॥ 10
यस्येह परिशेषं स्या नारीये जीवितं भवेत्।
दिवसानि सप्त [m]मासा च दश [n]तस्या [o]उरमोतरेत् ॥६॥
किं कारणं [p]अयुक्तं हि अस्मद्विधमनुत्तरं।
धारेत्वा उत्तरे काले मैथुनं परिसेवितुं ॥७॥
[q]अथापि प्रतिसेवेयुः कामां सुगतमातरि। 15
न पिता [r]देवसंघानां भिन्नवृत्तो ति वक्ष्यते ॥८॥
भगवां च नाम [s]कामानां दोषां सततं भाषति।
अथ च लोकनाथस्य [t]माता कामां निषेवति ॥९॥
[u]ये च [v]नृपतिनां वेश्मस्थानि [w]रत्न[x]करण्डका।
[y]रतनं [z]पुरुषश्रेष्ठा भाजनं जिनमातर [a]इति ॥१०॥ 20

[b]समन्वेषन्तो महामौद्गल्यायन बोधिसत्वो अद्राक्षीत्। [c]दीप[d]वतीये राजधानीये राज्ञो अर्चिमस्य सुदीपा देवी प्रासादिका च कुलीना शुचिगात्रा च मन्दरागा च Sen. 200 [e]अल्पायुष्का च [f]ससप्तरात्राणि चास्या दश मासानि [g]आयुष्प्रमाणतो [h]अवशिष्टा।

[a]पश्यति [b]विलोकयन्तो लोकं अथ अर्चिमस्य ओरोधे ।
[c]नारीं अमरवधुनिभां विद्युल्लतानिभां इव सुदीपां ॥११॥
सो तां निशाम्य जननीं आमन्त्रयते अमरां च्यविष्यामि ।
[d]अन्तिममुपेष्यि वासं गर्भे मरुमानुषसुखार्थं ॥१२॥
5 [e]तं अवच देवसंघो कृतांजलिपुटो वराभरणधारी ।
ऋध्यतु [f]उत्तमपुद्गल तव [g]प्रणिधि अहीनगुणरूप ॥१३॥
[h]वयं अपि [i]लोक[j]हिताय मनोरमामोशिरित्व कामरतिं ।
[k]पूजार्थं तव अतिदेव मनुष्यलोके [l]वसिष्यामो ॥१४॥
ते [m]विमलरुचिरवर्णं मन्दार[n]वपुष्प[o]वर्षमाकाशे ।
10 [p]प्रवर्षिन्सु उदग्रचित्ताः [q]शुचि सुमधुराहि [r]वाचाहि ॥१५॥
[s]यम[t]मरवसना प्रशमनमनोरमा शोकदुःखविनिमिश्रा ।
न [u]नन्दसि न च [v]निषेवसि कामानिदमद्भुतं [w]तुभ्यं ॥१६॥
यं पि अभिभूय मरुगणं [x]जम्बूनदपर्वतोपमप्रकाशो ।
उद्योतयसि दश दिशां [y]सुरर्षभ इदं पि आश्चर्यं ॥१७॥
15 अभिभवसि [z]देवसंघां समहेश्वरदा[a]नवां [b]समारगणां ।
[c]तारागणां [d]खगचरां अमितमति इदं पि आश्चर्यं ॥१८॥
किं चापि विप्रयोगं त्वया न इच्छाम [e]भूतसंघगुरु ।
Sen. 201 [f]अपि त्वर[g]विन्दनयना भविष्यसि गतिर्नर[h]मरूणां ॥१९॥
अथ च्यवनकालसमये विशुद्धशतपत्रपद्मनयनस्य ।
20 [i]आनन्दितो मरुगणः [j]घोषेति दिशाहि [k]सर्वाहि ॥२०॥
[l]एषा च वर्तति कथा तुषितपुरे सा च अप्रतिमा सुदीपा ।
[m]राज्ञोर्ऽर्चिमस्य महिषी राजानमुपेत्य [n]इदमाह ॥२१॥

सा हरिणवत्सनयना विशुद्धगन्धर्व[a]वधुनि[b]भा श्यामा।
सहितमिदं अ[c]र्चिमस्य सुमधुरमिदमब्रवि सुदीपा ॥२२॥
आभरणस्तम्भितभुजा प्रवरवसनधारिणी[d] सखीहि सह।
त्वया विना रा[e]जर्षभ रजनीमिमां [f]क्षपयितुं छन्दो ॥२३॥
[g]शतरश्मिस्य [h]नरवरा [i]प्रासादवरस्य उत्तमां [j]भूमिं। 5
[k]शयनवरमारुहे यत्र [l]कुमुदवसनसन्निभं विमलं ॥२४॥
तेन वचनेन तुष्टो देवीये अर्चि[m]मां मनापेन।
आमन्त्र[n]यति नरवरो परि[o]वारमुदग्रसंकल्पो ॥२५॥
प्रतिवेदयन्तु[p] मे[q] लघु शतरश्मि प्रवरकुसुमसंच्छन्नं।
मुक्तकुसुमावकी[r]र्णं करोथ दिवि देवभुवनं वा ॥२६॥ 10
[s]ओसक्त[t]पट्टदामं शतरश्मि [u]शोभतां चपलमेव।
[v]वरहेमजालच्छन्नं सुमेरु[w]वरशृं[x]गसंकाशं ॥२७॥
चतुरं[y]गिनी च [z]सेना सशूलनाराचतोमरविचित्रा।
परि[a]वारयतां चपलं शतरश्मिमनोज्ञसंघा[b]तं ॥२८॥
[c]ओसृष्टा येवाज्ञा नरपतिना सज्जं एव च सर्वं। 15
[d]कृत्वा तत्र स्व[e]कुलं राजानमुपेत्य इदमाहु ॥२९॥
वर्षसहस्र[f]मनूनं आयुः परिपालेतु महीपालो। Sen. 202
[g]सज्जं ति विमानवरं शोभति तव हर्षसंजननं ॥३०॥
अथ सा अमरवधु[h]निभा देवी उत्थाय आसनवरा[i]तो।
[j]अब्रवीत् [k]महीपतिवरं आ[l]दि[m]त्ये अस्तमितमात्रे ॥३१॥ 20
एषा समादियामि [n]प्राणिषु अवि[o]हिंसं ब्रह्म[p]चरियं च।
विरमामि[q] चा[r]प्यदि[s]न्नान्मद्यादनिबद्धवचनाच्च ॥३२॥

अखिल[a]वचनाच्च नरवर प्रतिविरमामि तथैवं पैशून्यात् ।
परुषवचनाच्च नरपति विरमा[b]मि अयं मम च्छन्दो ॥३३॥
परका[c]मेषु च ईर्ष्यां न संजनेष्यं नापि अभिद्रोहं ।
भूतेषु उ[d]पजनेष्यं विपरीतमतिं च विजहामि ॥३४॥
5 ए[e]कादशप्रकारं शीलं सेवाम्यहं पृथिवीपाल ।
र[f]जनीमिमा[g]मनूनामेवं मम जायते छन्दः ॥३५॥
अ[h]पि च कुखु भूमिपाला कामवितर्को मा मां प्रतिकांक्षि ।
प्रे[i]षय मा ते अपुण्यं भवेय मम ब्रह्मचारिणिये ॥३६॥
सर्वे तव संकल्पां परिपुरेमीति पार्थिवो अवचि[j] ।
10 अभिरम भवनवरग[k]ता अहं[l] च राज्यं च ते वश्यं ॥३७॥
सा स्त्रीसहस्र[m]मग्रचं अनुरक्तं गृह्य तं विमानवरं ।
अभिरुह्य अभिनि[n]षीदे[o] मनापपरिपूर्णसंक[p]ल्पा ॥३८॥
सा कञ्चि[q]देव कालं तस्मिं हिमकुमुदपुण्डरीकनिभे ।
श[r]यने प्रसमदमरता तुष्णींभावेन क्षेपयति ॥३९॥
15 Sen. 203 सा[s] दानि दक्षिणेन पार्श्वे[t]न परिन्यासे शरीरवरं ।
कु[u]सुमलता व द्रुमवरं[v] शयनं परिवेल्लियाशयिता ॥४०॥
अथ तां निशाम्य शयनोपगतां देवीं दिवि प्र[w]मदारूपनिभां ।
तुषिता[x]लया च्च्य[y]विय देवगणाः प्रासादमूर्ध्नि प्रतिस्थिहिं[z]सु ॥४१॥
ते[a] मूर्धना अभिनता सर्वे हृष्टा कृतांजलिपुटाः अमरा ।
20 व[b]न्दन्ति तां विपुलपुण्यधरां देवीं जिनस्य जननीं शयने ॥४२॥
अथ कौ[c]तूहलपरं संजनिया बहुदे[d]वकन्या शुचिमाल्य[e]धरा ।
जि[f]नमातुरुपगता द्रष्टुमना प्रासादमूर्ध्नि प्रतिष्ठिहिं[g]सु ॥४३॥

उपसंक्र[a]मित्वा शयनोपगतां देवीं निशाम्य[b]वरविद्यु निभां ।
[c]प्रीतिसुखं विपुलं [d]संजनिया अथ संप्रवर्षि दिविजं[e]कुसुमं ॥४४॥
[f]मानुष्यकं पि किल एद्दशकं रूपं सुजातमिदमाश्चर्यं[g] ।
[h]कंचित्कालं [i]स्थिहियमन्तरतो [j]नायं समा मरुवधूहि [k]भवे ॥४५॥
लीलां [l]निशामयथ हे सखिका [m]प्रमदायिमस्य [n]यथ [o]ओपयिकां ।
शयने [p]विरोचति मनं हरति विभ्राजते कनकमरीचिरिव ॥४६॥
अयन्तं धरेष्यति महापुरुषं[q] अत्यन्तदानदमशीलरतं ।
सर्वाश्रवान्त[r]करणं वि[s]रजं किं हायते तव नरेन्द्रवधू ॥४७॥
[t]चापोदरे करतलप्रतिमे वररोमराजिवि[u]चित्रे रुचिरे ।
[v]इह सो भविष्यति अनन्त[w]मतिः[x]सततं [y]अलिप्त [z]अशुभेन शुचि ॥४८॥
[a]बहुदीर्घरात्रनिचितं कुशलं प्रमदायिमस्य विपुलं परमं ।
या तं [b]धरेष्यति अनन्तगुणं चिररात्र[c]सन्निचितपुण्यबलं ॥४९॥ Sen. 204
[d]अनुरूपा त्वं च प्रमदा प्रवरा माता स चैष पुरुषप्रवरो ।
पुत्रो [e]प्रहीनवनथो [f]विरजो किं हायते तव नरेन्दवधू ॥५०॥
अथ राक्ष[g]सा विविधरूप[h]धरा आणत्ता दिवि [i]परितो चपलं ।
[j]तिष्ठन्तु भो प्रवरशस्त्रधराः सर्वदिशा कुरुथ असंवरणा ॥५१॥
तेषामनन्तर [k]द्विजिह्वगणा आरक्षहेतु दिशतासु [l]स्थिताः ।
[m]वातं पि [n]येष चलितं [o]श्रुणिय क्रोधं [p]समुत्पतति अग्निसमो ॥५२॥
तेषामनन्तर[q]गताः थपिता यक्षाः प्रदीप्त[r]शिखरा वि[s]कृता ।
[t]ये [u]दुष्टचित्ता [v]विनिवारयाथ मा च वधं कुरुथ कस्यचापि ॥५३॥
तेषामनन्तरस्थिता [w]बलवां गन्धर्वसंघो शुभरूपधराः ।
आरक्षहेतु [x]शुभचापधरा [y]वरलक्षणा विपुलबुद्धिमतो ॥५४॥

चत्वारि[a] लोकपतिनो[b] स्थपिता गगने[c] स्वयंपरिवारेण सह ।
अद्य[d] च्यविष्यति किल भगवां लोकस्य अर्थसुखवृद्धिकरो ॥५५॥
त्रिदशेहि सार्धं त्रिदशप्रवरो स्थितु अन्तरीक्षे वरचक्रधरो[e] ।
अचिरं[f] च्यविष्यति[g] च्युतिं चरमां आकांक्षमाण[h] सुखं अप्रतिमं ॥५६॥
देवीय मूले[i] बहु[j] देवगणा[k] कृत्वा दशांगुलिं नताभिमुखा ।
समुदीरयन्ति वचनं मधुरं[l] उल्लोकयन्ति[m] तुषितेषु जिनं ॥५७॥
व्यवदानसन्निचितपुण्यबला[n] समयो खु अन्तिममुपेतु[o] भवं[p] ।
सज्जा[q] ताव[r] भवति ते जननी अनुकम्प दानि दुःखितां जनतां ॥५८॥

Sen. 205

एषो च्यवामि[s] इति मुंचि गिरां[t] शुभं वचनं उदीरयि······ ।
अथ सुपिनं[u] जननि[v] जिनस्य तस्मि क्षणे पश्यते वरविपाकफलं ॥५९॥
हिमरजतनिभो[w] से षड्विषाणो सुचरणचारुभुजो[x] सुरक्तशीर्षो ।
उदरमुपगतो[y] गजप्रधानो ललितगतिः अनवद्यगात्रसन्धिः ॥६०॥

न खलु पुनर्महामौद्गल्यायन[z] बोधिसत्वा[a] कालपक्षे मातुः कुक्षिमवक्रामन्ति । अथ पूर्णायां पूर्णमास्यां[b] पुष्यनक्षत्रयोगयुक्तायां[c] बोधिसत्वा[d] मातुः कुक्षिमवक्रामन्ति । उपोषधिकायां आरोहसम्पन्नायां परिणाहसम्पन्नायां व्यक्तायां अग्रयौवनमण्डप्राप्तायां विनीतायां बहुश्रुतायां[e] स्मृतायां सम्प्रजानायां सर्वाकारप्रदक्षिणचित्तायां[f] सर्वाकार-प्रतिरूपायां प्रमदोत्तमायां बोधिसत्वा[g] मातुः[h] कुक्षिमवक्रामन्ति । बोधिसत्वेन महामौद्गल्यायन[i] तुषितभवनगतेन च्यवनकाले प्रभा ओसृष्टा याये प्रभाये सर्वं बुद्धक्षेत्रं ओभाषितं ।

देवपुत्रो देवपुत्रं पृच्छति ।

किं कारणं[j] सुरवरेण प्रभा प्रमुक्ता
चन्द्रांशुशीतलतरा[k] कनकावदाता[l] ।

येनासुरेश्वरगणा[a] मनुजेश्वराश्च

प्रह्लादिता च नरका[b] ज्वलनार्चिकल्पा ।।६१।।

सो दानि[c] आह ।

ये तत्र तत्र[d] जनतां प्रतिपालयन्ति

संसारपंजरगतां[e] मदनाभिभूतां । 5

तेषां विमोक्षकरणेन[f] महायशेन

आमन्त्रणार्थं अनघेन प्रभा प्रमुक्ता ।।६२।।

बोधिसत्वो[g] आह । Sen. 206

मुंचथ अमरा पुराणि न किल[h] प्रामोद्यस्य अयं कालः ।

जरामरणपुरं भेत्तुं[i] कालो ज्ञानप्रहारेण[j] ।।६३।। 10

बोधिसत्वो स्मृतो संप्रजानो प्रदक्षिण[k]चित्तो मातुः कुक्षिमवक्रान्तो इति ।

सो नदिय[l] सिंहनादं[m] नरसिंहो च्यवनकालसमयस्मिं[n] ।

अन्तरहितो क्षणेन नरेन्द्रभवने समुत्पद्ये[o] ।।६४।।

यो सो तुषितं[p] कायं ओभासेति[q] शुभेन वर्णेन ।

देवपुराच्च्यवमानो[r] अनतिवरो लोकप्रद्योतः ।।६५।। 15

सब्रह्मकं[s] च लोकं सश्रमण[t]ब्राह्मणा[u] प्रजा सर्वा ।

वर्णेनोभासेति[v][w] अनतिवरः लोकप्रद्योतो[x] ।।६६।।

आश्चर्यमद्भुतमिदं[y] पश्यथ यावत् महर्द्धिकः शास्ता ।

स्मृतिमां[z] सुसंप्रजानो मातुः कुक्षिस्मि ओक्रान्तो[a] ।।६७।।

यावच्च[b] नरवरप्रवर[c] उत्तमलक्षणसमंगि अस्थासि । 20

माताये कुक्षिस्मि स्मृतिमतिमां[d] संप्रजानो च ।।६८।।

[a]समनन्तरौक्रान्ते च [b]महामौद्गल्यायन [c]बोधिसत्वे महासत्वे [d]मातुः कुक्षिस्मि इयं महापृथिवी अतीव [e]षड्विकारं कम्पे संकम्पे प्रकम्पे संहर्षणीयं च कम्पे दर्शनीयं च हर्षनीयं च मोदनीयं च प्रेमनीयं च प्रह्लादनीयं च [f]निर्वर्णनीयं च उल्लोकनीयं [g]च आसेचनकं च अप्रतिकूलं च [h]प्रासादिकं च प्रसरणीयं च निरुद्वेगं च [i]निरुत्त्रासं च। कम्पमाना च पुनर्न कंचित्सत्वं [j]व्याबाधति [k]यमिदं जंगमं स्थावरं वा।

Sen. 207

ततो अयं सागरमेरुमण्डला
[l]प्रकम्पिता [m]षड्विधमासि [n]मेदिनी।
[o]कृतो च लोको विमलो मनोरमो
[p]महान्धकारापनु[q]दस्य तेजसा ॥६९॥
सोऽयं महानुभावो स्मृतिमां तुषितभवनाच्च्यवित्वान।
[r]पाण्[s]डरवराहकनि[t]भो [u]भवित्व गजरूपी षड्डुन्तो ॥७०॥
वीरशयने [v]शयन्तिये पोषधि[w]काये विशुद्धवसनाये।
स्मृतो संप्रजानो [x]कुशलो मातुः कुक्षिस्मि ओक्रान्तः ॥७१॥
सा च रजनीप्र[y]भाते आख्यासि भर्तुनो मनापस्य।
राजवर [z]पाण्डरो मे गज[a]राजा कुक्षिमोक्रान्तो ॥७२॥
[b]तं श्रृणुय भर्तु राजा वैपंच[c]निकां समा[d]गतां अवचि।
[e]सुपिनस्मि अस्या सर्वे भणाथ भूतं [f]फलविपाकं ॥७३॥
[g]ते तत्रापि अवचिंसु [h]निमित्तिका पृच्छि[i]ता स्वयं राज्ञा।
द्वात्रिंशल्लक्ष[ण]धरो [j]कु[k]क्षि देवीय [l]ओक्रान्तो ॥७४॥
[m]हृष्टो भवासि [n]नरवर यस्य तव [o]कुलस्मि प्रत्युत्पन्नो।
पृथिवीधर [p]वरगर्भो [q]अनुपमसत्वो महासत्वो ॥७५॥

[a]यथ मय [b]पौराणानामाचार्याणां [c]स्वयं समुपाहृतं ।

[d]द्वे ऽस्य गतयो अनन्या [e]भवन्ति नरवीर[f]शार्दूल ॥७६॥ Sen. 208

यदि आसि[g]ष्यति अगारे महीपति होति सरतनो महर्द्धिको ।

नित्यानुबद्ध[h]विजयो राजशतसहस्रपरिवारो ॥७७॥

[i]अथ खलु प्रव्रजिष्यति चातुर्द्वीपां महीं विजहियान । 5

[j]होहिति [k]अनन्यनेयो बुद्धो नेता [l]नरमरूणां ॥७८॥

[m]यावत्तका नागराजानो नागाधि[n]पतयो ते सर्वे बोधिसत्वस्य रक्षावरणगुप्तीये [o]औत्सुक्यमापद्ये न्सुः । बोधि[p]सत्वे खलु पुनर्महामौद्गल्यायन मातुः कुक्षिगते याव[q]न्तो सुवर्ण[r]राजानो सुवर्णाधि[s]पतयो ते सर्वे बोधिसत्वस्य रक्षावरणगु[t]प्तीये औत्सुक्यमापद्ये न्सुः । चत्वारो पि महाराजानो बोधिसत्वस्य [u]रक्षावरणगुप्तीये औत्सुक्य- 10
मा[v]पद्ये न्सुः ।

चतुरो पि लोक[w]पाला रक्षामकरिन्सु लोकना[x]थस्य ।

[y]मा कोची अहितैषी नमुचि[z]बलनुदं विहिंसेय ॥७९॥

शक्रो देवानामिन्द्रो सुयामो पि देवपुत्रो [a]संतुषितो पि देवपुत्रो सुनिर्मि[b]तो पि देवपुत्रो वशवर्ती पि देवपुत्रो महाब्रह्मा[c] पि शुद्धावासो पि देवपुत्रो बोधिसत्वस्य मातुः 15
कुक्षिगतस्य रक्षावरणगु[d]प्तीये औत्सुक्यमापद्ये न्सुः ।

सहस्राणि देवाना[e]र्मा[f]र्चिमपुरमुपगतानि तु[g]ष्टानि ।

आरक्षार्थं........वर[h]बुद्धिनो अमरपुरमिव ॥८०॥

मनोरमं दीपवतीपुरमुत्तमं [i]कृतमनुविशन्तेहि ।

मनोमयविक्रमगतेहि अमरग[j]णेहि अभिविरोचति ॥८१॥ 20

[k]देवीं परि[l]वारेत्वा महेश्वरगणानां किल सहस्राणि । Sen. 209

अष्टौ गगणत[m]लगता आकाशगता अभि[n]निषण्णा ॥८२॥

तेषां दा[a]नि पृष्ठतो इन्द्रसहस्राणि विमलशि[b]ख[c]राणि ।
सुबह्वनि बहुगुणस्य आर[d]क्षार्थं निषण्णानि ।।८३।।
तेषां[e] दानि पृष्ठतो देवेन्द्राणां सहस्रनयु[f]तानि ।
कामाव[g]चरा देवा निषण्णा गगने नि[h]रालम्बे[i] ।।८४।।
5 तेषां देव[j]गणानां पृष्ठतो असु[k]राणां च द्विजिह्वगणा ।
य[l]क्षाश्च विकृतरूपा रा[m]क्षससंघाश्च सन्नि[n]षण्णा ।।८५।।
एताये विधिये ग[o]गणं अमरशतसहस्रसंकुलं श्रीमं ।
अत्यन्तसुपरिशुद्धं कुशलमुपचितं हि विरजेन ।।८६।।

महाब्रह्मा आह ।

10 स्वप्नान्तरे[p] या प्रमदा ददर्श
सूर्यं न[q]भा कुक्षिमनुप्रविष्टं ।
प्रसूयते सा वरल[r]क्ष[s]णांगं
सो भवति राजा बलचक्रवर्ति[t] ।।८७।।
स्वप्नान्तरे या प्रमदा द[u]दर्श
15 चन्द्रं न[v]भा कुक्षिमनुप्रविष्टं ।
प्रसूयते सा नरदे[w]वगर्भं
सो भवति राजा वरचक्रवर्ती ।।८८।।
स्वप्नान्तरे या प्रमदा द[x]दर्श
श्वेतं गजं कुक्षिमनुप्रविष्टं ।
20 प्रसूयते सा गज[y]सत्त्व[z]सारं
सो भवति बुद्धो बुधिता[a]र्थधर्मो ।।८९।।

Sen. 210 [b]देवीं स पृच्छति । किं धरेसि । सा आह । च[c]क्र[d]वर्तिन्ति ।

कुक्षि [a] प्रभासयन्तं कनकवपुं [b] प्रवरलक्षणसमंगिं ।
[c] धारेमि [d] चक्रवर्ति वरपुरुषं राजशार्दूलं ॥६०॥

[e] देवा नभे भगवतो [f] घोषमुदीरयेन्सुः । बुद्धो [g] भविष्यति न राजा बलचक्रवर्ती [h] [i] ।

[j] महाब्रह्मा गाथां [k] भाषति ।

[l] गजं [m] रत्न[n]श्रेष्ठं मदनबलवे[o]गापनयनं 5
प्रदीपं लोकस्य तमतिमिरमोहापनयनं ।
गुणानां [p] कोषं त्वं, अपरिमितरत्नाकरधरं
[q] धरेसि [r] राजर्षि अप्रतिहतचक्रं [s] अमररुचिं ॥६१॥

देवी आह ।

[t] यथा मम न रागदोषा प्रसहन्ति नरेन्द्रगर्भमुपलभ्य । 10
निःसंशयं [u] भविष्यति समरुचि [v] यथ निश्चरति वाचा ॥६२॥

बोधिसत्वे खलु पुनर्महामौद्गल्यायन [w] मातुः कुक्षिगते बोधिस[x]त्वमाता सुखं गच्छति तिष्ठति [y] पि निषीदति पि शय्यामपि कल्पयति बोधिसत्वस्यै[z]व तेजेन [a] । शस्त्रं [b] काये न क्रमति न विषं नाग्निर्नाशनिः प्रसहति बोधिसत्वस्यैव तेजेन । बोधिसत्वे खलु पुनर्महामौ[c]द्गल्यायन मातुः कुक्षिगते बोधिसत्वमातरं [d] देवकन्या दिव्येहि [e] उच्छादन- 15
[f] परिमर्दनपरिष्कारेहि परिजागरन्ति । दिव्य[g]वस्त्र[h]संवृतशरीरा दिव्याभरणधारिणा भवति बोधिसत्वस्यैव तेजेन । लाभिनी भवति दिव्यानां [i] गन्धानां दिव्यानां माल्यानां दिव्यानां विलेपनानां दिव्यानां [j] ओजानां बोधिसत्वस्यैव तेजेन । बोधिसत्वे खलु Sen. 211
पुनर्म[k]हामौद्गल्या[l]यन मातुः कुक्षिगते योऽस्या अभ्यन्तरपरिवारो सोऽस्या [m] अतीव शुश्रूषि-
[n] तव्यं श्रोतव्यं मन्यति बोधिसत्वस्यैव तेजेन । बोधि[o]सत्वे खलु पुनर्महा[p]मौद्गल्यायन 20
मातुः कुक्षिगते बोधि[q]सत्वमातरं ये पश्यन्ति ते ता[r]मुपसंक्रमित्वा किंकरणीयकप्रति-
[s] संयुक्तेहि व [t] निमन्त्रेन्ति बोधिसत्वस्यैव तेजेन । न किंचिदुपरिमेन [u] गच्छति

अन्तमशतो पक्षी पि बोधिसत्वस्यैव तेजेन। बोधि[a]सत्वे खलु पुन[b]र्महामौद्गल्यायन
[c]मातुः कुक्षिगते बोधिसत्वमाता अल्पाबाधा भवति अल्पातंका। समाये विपाक[d]नीय-
ग्रहणीये [e]समन्वागता [f]नाप्यतिशीताये नाप्यतिउष्णाये सम्मापरिणामाये बोधिसत्वस्यैव
तेजेन। बोधिसत्वे खलु पुनर्म[g]हामौद्गल्यायन मातुः कुक्षिगते बोधिसत्वमाता लाभिनी
5 प्रणीतानां खादनीयभोजनीयानामग्ररसानां प्रत्यग्ररसानां बोधिसत्वस्यैव तेजेन।
बोधिसत्वे खलु पुनर्महामौद्गल्यायन मातुः कुक्षिगते बोधिसत्वमाता वीतरागा भवति।
अखण्डमच्छिद्रमशबल[h]मकल्माषं परिशुद्धं परिपूर्णं ब्रह्मचर्यं चरति। मनसापि तस्याः
प्रमोदोत्तमाया [i]रागो न उत्प[j]द्यति सर्वपुरुषेहि [k]अन्तमसतो [l]राज्ञापि [m]अर्चिमता।
बोधिसत्वे खलु पुनर्महा[n]मौद्गल्यायन मातुः कुक्षिगते बोधिसत्वमाता पञ्च [o]शिक्षापदानि
10 समादाय वर्तते। तानि च [p]सपूर्वसमादिन्नानि भवन्ति[q]। बोधिसत्वे खलु पुनर्महा-
[r]मौद्गल्यायन [s]मातुः कुक्षिगते यावता नागराजानो नागराजाधिपतयो अण्डजा वा
[t]जरायुजा वा संस्वेदजा वा औपपादुका वा ते निवेशनमुपसंक्रमित्वा दिव्यानि चन्दन-
चूर्णानि प्रकिरन्ति। एवमगुरुचूर्णानि मुक्तकुसुमानि च प्रकि[u]रेन्सुः [v]समा[w]साये च नं
अर्चनाये अर्च[x]येन्सुः परिपू[y]र्णाये [z]च नमर्चनाये अर्च[a]येन्सुः परि[b]शुद्धाये च नमर्चनाये
15 अर्च[c]येन्सुः। ते दिव्यानि चन्दनचूर्णानि [d]प्रकिरित्वा [e]केशरचूर्णानि [f]तमालपत्रचूर्णानि
Sen. 212 मुक्तकुसुमानि प्रकिरेन्ति। समा[g]साये नं अर्चनाये अर्च[h]येन्सुः परिपू[i]र्णाये च नमर्चनाये
[j]अर्चयेन्सु परि[k]शुद्धाये च नं अर्चनाये अर्चयेन्सुः। परिपूर्णाये अर्चनाये अर्चयित्वा
[l]परिशुद्धाये अर्चनाये अर्चयित्वा दिव्येहि चन्दनचूर्णेहि प्रकिरित्वा दिव्येहि अगुरुचूर्णेहि
[m]केशरचूर्णेहि तमालपत्रचूर्णेहि मुक्तकुसुमेहि ओकिरित्वा [n]अध्योकिरित्वा अभिप्रकिरित्वा
20 [o]बोधिसत्वमातां [p]त्रिखुत्तं अभिप्रदक्षिणं कृत्वा येनकामं प्रक्र[q]मिन्सुः बोधिसत्वस्यैव
तेजेन। बोधि[r]सत्वे खलु पुनर्महामौद्गल्या[s]यन मातुः कुक्षिगते [t]यावता सुवर्णराजानो
[u]सुवर्णाधिपतयो अण्डजा वा जरायुजा वा संस्वेदजा वा उपपादुका वा ते निवेशनं

प्रविशित्वा दिव्या[a]नि चन्दनचूर्णानि प्रकिरन्ति दिव्यान्यनेकचूर्णानि प्रकिरन्ति दिव्यानि [b]केशरचूर्णानि प्रकिरन्ति दिव्यानि तमालपत्रचूर्णानि प्रकिरन्ति दिव्यानि कुसुमचूर्णानि प्रकिरन्ति। [c]समाप्ताये च नं अर्चनाये अर्चयेन्सु परिपूर्णाये च नं अर्चनाये अर्चयेन्सु [d]प[e]रिशुद्धाये च नं अर्चनाये अर्च[f]येन्सुः। दिव्यानि चूर्णानि प्रकि[g]रित्वा अगुरुचूर्णानि केशरचूर्णानि तमालपत्रचूर्णानि प्रकिरित्वा दिव्यानि च मुक्तकुसुमानि प्रकिरित्वा 5
बोधिसत्वमातां [h]त्रिष्खुत्तं प्र[i]दक्षिणं कृत्वा येनकामं प्र[j]क्रमेन्सुः बोधिसत्वस्यैव तेजेन। बोधिसत्वे खलु पुनर्महा[k]मौद्गल्यायन मातुः कुक्षिगते बोधिसत्वमातां चतुर्महाराज-कायिका [l]देवाः त्रायस्त्रिंशा यामा तुषिता निर्माणरतिपरनिर्मितवशवर्त्ती ब्रह्मकायिका शुद्धावासकायिका देवा तस्य निवेशनं प्रविशित्वा दिव्येहि चन्दनचूर्णेहि प्र[m]किरेन्सुः दिव्येहि [n]अगुरुचूर्णेहि केशरचूर्णेहि त[o]मालपत्रचूर्णेहि दिव्येहि च मुक्त[p]कुसुमेहि प्रकि[q]रेन्सुः 10
[r]समाप्ताये च नं अर्चनाये अर्च[s]येन्सुः संपरिपूर्णाये च नमर्चनाये अर्चयेन्सुः [t]परिशुद्धाये [u]च नं अर्चनाये अर्चयेन्सुः। ते दिव्येहि चन्दनचूर्णेहि ओकिरित्वा दिव्येहि अगुरुचूर्णेहि दिव्येहि केशरचूर्णेहि दिव्येहि तमालप[v]त्रेहि दिव्येहि मुक्तकुसमेहि [w]प्रकिरित्वा समा[x]प्ताये च नं अर्चनाये अर्चयित्वा परिपूर्णाये च नं अर्चनाये [y]अर्चयित्वा [z]परिशुद्धाये च नं अर्चनाये अर्चयित्वा बोधिसत्वमातां [a]त्रिष्कृत्वो प्रदक्षिणीकृत्य येनकामं प्रक्रमेन्सुः 15
बोधिसत्वस्यैव ते[b]जेन।

Sen. 213

बो[c]धिसत्वो खलु पुनर्महा[d]मौद्गल्या[e]यन मातुः कुक्षि[f]गतो न चातिनीचं ति[g]ष्ठति न [h]चातिउच्चं ति[i]ष्ठति न च अवकुब्जको [j]न उत्तानको न वामपार्श्वे तिष्ठति न उत्कुटिको। अथ खलु मातुर्द[k]क्षिणे पार्श्वे पर्य[l]ङ्कमाभुंजित्वा तिष्ठति। बोधि[m]सत्वो खलु पुनर्महामौद्गल्यायन मातुः कुक्षि[n]ग[o]तो न पित्तेन वा श्ले[p]ष्मेण वा रुधिरेण वा अन्येन 20
वा [q]पुन केनचिदशुचिनापरिशुद्धो तिष्ठति। अथ [r]खलु अच्छादितस्नापितविशदगात्रो

बोधिसत्वो मातुः कुक्षिस्मि तिष्ठति। बोधिसत्वो खलु पुनर्महामौद्गल्यायन[a] मातुः कुक्षिगतो[b] मातरं पश्यति[c]। बोधिसत्वमातापि[d] कुक्षिगतं बोधिसत्वं पश्यति विग्रहमिव जातरूपस्य दृष्ट्वा च भवति आत्तमना[e] [कुक्षिं[f] ओभासेन्तं विग्रहमिव जातरूपस्य]। यथा[g] वेरुलियस्य मणि स्फाटिकसमुद्गस्मि[h] निहितो अस्या[i] एवमेव[j] बोधिसत्वं पश्यति माता[k] कुक्षिमोभासेन्तं[l] विग्रहमिव जातरूपस्य।

Sen. 214 बोधिसत्वे खलु पुनर्महामौद्गल्यायन[m][n] मातुः कुक्षिगते देवसंघाः सुखरात्रिं सुखदिवसं पृच्छका आगच्छन्ति[o]। तां च बोधिसत्वो[p] अभिनन्दति[q] दक्षिणकरमुत्क्षिप्य[r] मातरमबाधमानो[s]। बोधिसत्वं[t] खलु पुनर्महामौद्गल्यायन[u][v] मातुः कुक्षिगतं[w] देवा नागा यक्षा दानवा राक्षसा पिशाचा न जहन्ति[x] दिवा वा रात्रिं वा न चात्र[y] आसंगकथा कथीयति कामोपसंहिता[z] वा अन्या वा[a] असत्या कथा। नान्यत्र बोधिसत्ववर्णमेव[b] भाषन्ति[c] रूपतः सत्त्वतः तेजतः वर्णतः यशतः कुशलमूलतः। बोधिसत्वस्य[d] मातुः कुक्षिगतस्य पूजा[e] नोपरमति। दिव्यानि तूर्याणि[f] वाद्यन्ति दिव्यानि अगुरुधूपानि[g] धूपेन्ति दिव्यं पुष्पवर्षं[h] वर्षति दिव्यं चूर्णं वर्षति। अप्सरसहस्राणि च उपगायन्ति उपनृत्यन्ति पि। बोधिसत्वे खलु पुनर्महामौद्गल्यायन[i] मातुः कुक्षिगते[j] बोधिसत्वमातां[k] देवकन्यासहस्रेहि[l] सार्धं अभ्याभवति हास्यं च कथा[m] च। प्रसुप्तां[n] च पुनर्बोधिसत्वमातरं देवकन्या[o] मान्दारवदामेन परिवीजेन्ति[p] बोधिसत्वस्य तेजेन। अयं च पुनर्महामौद्गल्यायन[q][r] त्रिसाहस्रमहासहस्रायां लोकधातूयमनुत्तरा गर्भावक्रान्तिपारमिता।

अन्यं[s] च दानि पश्यथ आश्चर्यं[t] तस्या देवपर्षाये।
ताव विपुलाये[u] या कथा अभू परमहर्षसंजननी[v] ॥९३॥
न[w] च कामकथान्या वा नाप्यप्सरसां कथा न[x] गीतकथा[y]।
न[z] च वाद्यकथा[a] तेषां[b] न पि भुक्तकथा[c] न पानकथा[d] ॥९४॥

नाभरण[a]कथा तेषां[b] न पि वस्त्र[c]कथा प्रवर्तति[d] कदाचित् ।

यानो[e]द्यान[f]कथा वा मनसापि न जायते तेषां[g] ॥९५॥ Sen. 215

साधू[h] पुण्यबलवतो द्युती अनुपमा सदेवकं लोकं ।

अभिभवति[i] नायकस्य विकसति एषा[j] कथा तत्र[k] ॥९६॥

साधुं[l] गर्भा[m]वक्रमण[n]मनोपमं[o] रूपपारमिगतस्य । 5

इति[p] विकसति वहुविधा कथा परिषामध्ये एतस्मि ॥९७॥

साधूहि[q] निरामिषेहि संज्ञापदेहि क्षपेन्ति तं कालं[r] ।

वरबुद्धिनो[s] इयं[t] अपि कथा विकसति परिषामध्ये ॥९८॥

एवं[u] च बहुप्रकारां कथां कथेन्ता[v] रमन्ति[w] देवगणा ।

रूपं वर्णं[x] तेजं बलं च विरजस्य कथयन्ता ॥९९॥ 10

सर्वेषां बोधिसत्वानां मातरो परिपूर्णे दशमे मासे प्रसूयन्ति। दशमे मासे पूर्णे[y] सुदीपा नाम देवी राजानमर्चिमं आह। देव[z] अभिप्रायो मे पद्मवनं उद्यानं निर्गन्तुं। राजा देवीये सुदीपाये श्रुत्वा अमात्यानाह। पद्मवनमुद्यानं सान्तःपुरो[a] निष्क्रमिष्यामि क्रीडार्थमिति।

पद्मिनिवनं[b] सुचपलं अपगततृण[c]खण्डपत्रसंस्कारं । 15

वरसुर[d]भिकुसुम[e]निकरं करोथ गन्धोदक[f]सुगन्धं ॥१००॥

पद्मिनिवने[g] च वाता तमालपत्र[h]गन्धवासितशरीरा ।

सिञ्चन्तु[i] अमृत[j]गन्धां मदजनना[k] च[l] पलायन्तु ॥१०१॥

अगरु[m]वर[n]धूपगर्भा समोनमन्तु[o] नभतो जलधरा तं ।

पद्मिनिवनं[p] छादेतुं वरचूर्णरसाकुलं क्षिप्रं ॥१०२॥ 20

एकैकं[q] च द्रुमवरं दुकूल[r,s]पट्टोर्णकोशिकारेहि[t] । Sen. 216

कल्पयथ[u] कल्प[v]वृक्षान्[w] यथ[x] दिवि देवप्रधानस्य ॥१०३॥

देवा च देवकन्या[a] च गन्धमाल्यां गृह्य पद्मिनिवनउद्यानमर्चिमतो आगच्छन्ति ।

स्फटिकमणिकुण्डलधरा[b] विगलितवसना प्रलम्बमणिहारा ।
आदाय गन्धमाल्यं[c] गगनपथगता ओलीयन्ति ॥१०४॥
मान्दारवाण[d][e] भरिता काचित्संगेरियो भरित्वान ।
5 हरिचन्दनस्य[f] काचित्काचि पुनः कल्पदुष्याणां[g] ॥१०५॥
स्थलजजलजं[h] च माल्यं गृहीत्वा अप्सरा मुदितचित्ता ।
रतना[i] आभरणानि च[j] जम्बुद्वीपं अभिमुखीयो ॥१०६॥
चतुराशीतिमनूनं छत्रसहस्राणि[k] देवकन्यायो[l][m] ।
कनकरतनामयानि[n] आदाय[o] नभे प्रलीयन्ति ॥१०७॥
10 कूटागारशतेहि स्फटिकमणिचित्रेहि[p] लेपनलेपितैः ।
भरितमपि[q][r] अन्तरीक्षं दुष्यशतसमुच्छ्रितपताकं ॥१०८॥
गजश्वसनसन्निकाशा[s] शारदमेघा चाभिविरोचन्ति ।
वरसुरभिकुसुमगन्धा[t][u] कमलोत्पलचम्पकविमिश्रा[v] ॥१०९॥
भुजगपतिनो पि मुदिता[w] मेघेहि सुगन्धतोयभरितेहि[x] ।
15 अभ्योकिरन्ति गगणं[y] अन्यानि च अद्भुतशतानि ॥११०॥

अथ महामौद्गल्यायन[z] राजा अर्चिमो महता राजानुभावेन महता राजऋद्धिये[a] महतीये विभूषाये सान्तःपुरो[b] पद्मिनीवनमुद्यानं[c] निर्यासि ।

Sen. 217 अवगाह्य[d] तं वनवरं देवी सखिपरिवृता[e] जिनजनेत्री ।
विचरति चित्ररथे[f] देवी अमरवधु[g] यथा रतिविधिज्ञा ॥१११॥

20 अथ महामौद्गल्यायन[h] सुदीपा देवी[i] सखीहि संपरिवृता पद्मिनीये[j] पुरिमपश्चिम[k][l]-वेदिहि विततवितानेहि विचित्रदुष्यपरिक्षिप्तेहि ओसक्तपट्टदामकलापेहि[m] लेपनलेपितेहि[n]

धूपनधूपितेहि मुक्तपुष्पावकीर्णेहि वेदिकाजालसंप्रतिक्षिप्तेहि उच्छ्रितच्छत्रध्वजपताकेहि नावायानेहि [a]प्रक्रीडिता। अथ सुदीपाये देवीये [b]नावायानेन [c]क[d]ड्ढीयन्तिये किल [e]चित्तं उत्पन्नं। नावातो ओतरिष्यामीति। बोधि[f]सत्वानुभावेन च म[g]ध्ये तडागस्य द्वीपो प्रादुर्भूतो [h]समो अविषमो सुवर्णवालिकासंस्तृतो तृणानि च जातानि मृदूनि नीलानि तूलसंस्पर्शोपमानि मयूरग्रीवासन्निकाशानि [i]चतुरङ्गुलं पृथिवीतो [j]निक्षिप्ते पदे 5
[k]ओ[l]नमन्ति वृक्षाणि चात्र प्रादूर्भू[m]तानि फ[n]लोपेतानि सुमनोज्ञानि। [o]देवी तम्हि द्वीपे प्रतिष्ठिता। न खलु पुनर्म[p]हामौद्गल्यायन बोधिसत्वमा[q]ता शयाना निषण्णिका वा बोधिसत्वं जनेति। न खलु म[r]हामौद्गल्यायन बोधि[s]सत्वमाता बोधिसत्वं पित्तेन वा श्लेष्मेण वा रुधिरेण वा अन्यतरान्यतरेण वा अशुचिनापरिशुद्धं [t]जनेति अथ [u]खलु उच्छादितस्नापितविशदगात्रं [v]येव बो[w]धिसत्वं जनेति। 10

[x]सा परि[y]किलिन्तकाया [z]द्रुमस्य शाखां भुजाय अव[a]लम्ब्य।
[b]प्रविजृम्भिता सलीला तस्य यशवतो जननकाले ॥११२॥
अथ [c]विंशति सहस्रा [d]मरु[e]कन्या आशुरेव स[f g]न्निपतिता।
[h]देवीं कृतांजलिपुटाः इदमवच प्रसन्नसंक[i]ल्पाः ॥११३॥ Sen. 218
अद्य जरा[j]व्याधिमथनं जनयिष्यसि अमरगर्भसुकुमारं। 15
[k]देवी दिवि [l]भुवि महितं हितं हितकरं नरमरूणां ॥११४॥
मा खु [m]जनयी विषादं परिकर्म वयं तवं करिष्यामः।
[n]यं कतव्यमुदीरय दश्यतु कृतमेव तत्सर्वं ॥११५॥
[o]अथ चतुरि लोकपाला सपरि[p]वारा आशुरेव स[q]न्निपतिता।
दिव्य[r]प्रवेणिहस्ता [s]देविमुपगता [t]प्रदक्षिणतो ॥११६॥ 20
सर्वे ऽपि देवसंघा देवीं [u]परिवारयित्व आकाशे।
स्थिता माल्यगन्धहस्ता स्व[v]परिंवारेणोपशो[w]भन्ति ॥११७॥

बोधिसत्वो[a] स्मृतो[b] संप्रजानो मातरमबाधमानो दक्षिणेन पार्श्वेन प्रादुर्भवति।

दक्षिणेन[c] हि पार्श्वेन जायन्ते पुरुषोत्तमाः।
सर्वे[d] पुरुषशार्दूला[e] भवन्त्यग्र्यविहारिणः[f] ॥११८॥
किं तं न भिद्यते पार्श्वं[g] तस्या जिनजनेत्रिये[h]।

5 जनेन्तिये[i] नरश्रेष्ठं[j] वेदना[k] च[l] न जायति ॥११९॥
मनोमयेन[m] रूपेण प्रादुर्भोन्ति तथागता।
एवं[n] न भिद्यते पार्श्वं[o] वेदना च न जायते ॥१२०॥
गर्भावासपरिश्रान्तो[p] सप्तधा[q] विक्रमते भुवि।
दिशां च प्रविलोकेति[r] महाहासं च ऊहति ॥१२१॥

10 अत्र किं[s] कारणमुक्तं[t] यं सप्त क्रमते क्रमान्।
न च अष्ट न च षष्ठि अत्र आगमनं शृणु ॥१२२॥
Sen. 219 गर्भावासपरिश्रान्तो[u] सर्वलोकहितो मुनिः[v]।
पश्चिमो गर्भावासो[w] यं अथ वेगेन प्रक्रमि ॥१२३॥
भूमौ[x] सप्तक्रमे न्यस्ते देवसंघा निलीयथ[y]।

15 सहसा[z] लोकपालानामंकेहि[a] धरितो मुनिः ॥१२४॥
अथ[b] वर्षं समुत्पद्यि दिव्यकुसुमशीकरः[c]।
मन्दारवरजाकीर्णं[d] दिव्यचन्दनसंकुलं ॥१२५॥
दीर्घकालं[e] उदग्राश्च[f] सुरमुख्याग्रधूपनं[g]।
प्रमुंचिषु[h] विभूषार्थं[i] तस्य[j] उत्तमबुद्धिनः ॥१२६॥

20 यदर्थश्च विलोकेति दिशां[k] अप्रतिपुद्गलः[l]।
तत्राहमागमं[m] वक्ष्ये[n] उपदेशं मनोरमं ॥१२७॥

न सो वि[a]द्यति [b]सत्वानां देवेषु मनुजेषु च।
[c]यस्यैवं सं[d]भवो भवेत् गर्भो[e]क्रमणमेव च ॥१२८॥
[f]खद्योतकनकनि[g]र्भासं पार्श्वं जिनजनेत्रिये।
जायते [h]यदा [i]सर्वज्ञः जायन्तो चरमे भवे ॥१२९॥
जातमा[j]त्रस्य तच्चित्तं अभूत्प्रवरवादिनो। 5
अ[k]स्ति कश्चित्समबु[l]द्धि मे च्चेतं तर्कं निर्वर्तितुं ॥१३०॥
[m]केचित्संसारपा[n]शेन अर्त्तियन्ते यथा अहं।
[o]इत्यर्थं पुरुषादि[p]त्यो दिशां सर्वां निरीक्षति ॥१३१॥
अथ दिशा विलोकेन्तो प[q]श्यति वदतां वरो।
देवकोटिसहस्राणि [r]तस्मात् हासं प्रमुंचति ॥१३२॥ 10
तं जात[s]मात्रमित्याहु देवता मारका[t]यिका। Sen. 220
चातुर्द्वीपो महाकोशो च[u]क्रवर्ती भविष्यसि ॥१३३॥
अथास्य हासो सं[v]भवति न मम सत्वाभिजानथ।
सर्वज्ञो सर्वदर्शी च भविष्यं पुरुषोत्तमः ॥१३४॥
एवमेतं [w]प्रशंसन्ति वि[x]शेषा उपदे[y]शकाः। 15
तथा हि नरसिंहानां शासनं [z]संप्रकाशितं ॥१३५॥
[a]यं तिष्ठन्ती जनये वीरं सं[b]कुसुमितेषु शालेषु।
शरी[c]रमवलम्ब्यमाना तं अनतिव[d]रं जिनं वन्दे ॥१३६॥
संप्रति[e]जातो सुगतो समेहि पदेहि ध[f]रणिं अवतिष्ठेत्।
सप्त च प[g]दानि अगमा सर्वां च दिशां विलोकेसि ॥१३७॥ 20
[h]तं सामं चंक्रमन्तमन्वागमि वीज[i]नं च [j]च्छत्रं [k]च।
मा वरविदुनो काये दंशा मशका च निपतेन्सुः ॥१३८॥

संप्रतिजातं सुगतं[a] देवा प्रथमं जिनं[b] प्रतिगृह्णे ।
पश्चाच्च तं मनुष्याः[c] अनतिवरं[d] अङ्के धारेन्सुः ।।१३९।।
प्रत्यग्रहेन्सु[e] देवाः[f] सुगतं द्वात्रिंशलक्षणप्रदर्शि[g] ।
पश्चाच्च तं मनुष्या[h] अनतिवरं[i] अंके धारेन्सुः ।।१४०।।
5 निर्वायेन्सु प्रदीपा मानुषका[j] ओभाषितभूल्लोकं ।
संप्रतिजाते सुगते उल्काधारे[k] नरमरूणां ।।१४१।।
संप्रतिजाते सुगते ज्ञाती[l] उदकार्थिका प्रधाविन्सुः[m] ।
अथ पुरतो उदुपाना[n][o] पूरा मुखतो विष्यन्देन्सु ।।१४२।।
Sen. 221 द्वि वारिधारा उद्गमि एका[p] शीतस्य एका उष्णस्य[q] ।
10 यत्र स्नपयेन्सु[r] सुगतं विग्रहं इव जातरूपस्य[s] ।।१४३।।

संप्रतिजाते सुगते बोधिसत्वमाता[t] अक्षता चैव अभूषि अव्रणा च बोधिसत्वस्यैव तेजेन। सम्प्रतिजाते खलु पुनर्महामौद्गल्यायन[u][v] बोधिसत्वे[w] बोधिसत्वमातुः कुक्षि[x] प्रतिपूर्णा येव[y] अभूषि अनारब्धा[z] च बोधिसत्वस्यैव तेजेन। संप्रतिजाते[a] खलु पुनर्महा[b]-मौद्गल्यायन[c] बोधिसत्वे अन्तरद्वीपे चन्दनवनं प्रादुर्भवे[d] बोधिसत्वस्य उपभोगपरिभोग-15 मागच्छे बोधिसत्वस्यैव तेजेन। तत्र देवपुत्रशतसहस्राणि सह गच्छन्ति[e] गन्धमाल्यहस्ता बोधिसत्वस्य पूजार्थं[f]। देवपुत्रो देवपुत्रं पृच्छति कहिं गमिष्यसीति। सो तानाह।

एषा[g] प्रसूष्यति[h] नरेन्द्रवधूत्तमं[i] तं
वत्सं विबुद्धवरपुष्करगर्भगौरं[j] ।
यो[k] प्राप्स्यते धरणिमण्डगतोत्तमार्थं
20 मारं निहत्य[l] सबलं तमुपेमि[m] वीरं ।।१४४।।
अम्रक्षिता[n] गर्भमलेन गात्रा[o]
जातं जले पंकजमुत्तमं वा ।

वपुष्[a]मतो बालरविप्रका[b]शो

सब्रह्मकानमरानभिभोति ॥१४५॥

ततो जातमात्रो[c] कु[d]ले अर्चिमस्य

अतिक्रम्य धीरो पदानीह सप्त[e][f] ।

समो[g]लोकयित्वा दिशां ऊहसासि 5

अयं दानिमेको भवो पश्चि[h]मो ति ॥१४६॥

ततश्च च्छ[i]त्रं एकं विभ्राजमानं Sen. 222

मणीमुक्तश्रेष्ठं पराभाविभ्राजं ।

विधूतेन दामेन म[j]न्दारवाणां

बहू दे[k]वपुत्रा न[l]भे धारयेन्सुः ॥१४७॥ 10

सबा[m]लार्कशंखप्रतीकाशवर्णं

वरं हेमच्छत्रं नभे धारयेन्सुः ।

ततो वीजनी[n]यो विसृष्टा भ्रमेन्सुः

करेण गृहीत्वा जिनं[o] वीज[p]येन्सुः ॥१४८॥

ततो पु[q]ण्यगन्धा सुखोष्णा प्रभूता 15

लहुं प्रेमणीया[r] हिता मानुषाणां ।

शि[s]वा नन्दनीया तुषारानुबद्धा

दुवे वारिधारा नभे उद्गतासुः ॥१४९॥

ततो मेरुशृ[t]ङ्गादनेकप्रकारा

प्र[u]मुक्तोत्तरीया समन्तोर्मिजाता । 20

भृशं विश्वगन्धाधिवासानुवाता

दृढ़ं षड्वि[v]कारं महीं कम्पयेन्सुः ॥१५०॥

सुवर्णस्य [a]रूप्यमणीनां शुभाना
विमानेषु [b]देवा सतूर्याविघुष्टा।
[c]सुजातानुजातं [d]जिनं [e]प्रेक्षमाणा
सचन्द्रार्कतारं नभं शोभयेन्सुः ॥१५१॥
5 [f]अयं सो [g]सदेवं [h]सनागं [i]सयक्षं
Sen. 223 महोघं महर्षी जगं उत्तरित्वा।
ततः क्षेममेकां [j]दिशं प्राप्स्यतीति
प्रहृष्टास्य देवा नभे व्याहरेन्सुः ॥१५२॥

राजा अर्चिमो [k]आणापेसि। कुमारं [l]इमाये व देवीये पादवन्दनं नेथ। 10 कीदृशेन यानेन [m]कुमारो अभिनिषीदतीति। देवेहि [n]रतनामयी शिविका निर्मिता। को इमां शिविकां वहिष्यतीति। चत्वारो महाराजा [o]उपस्थिता। [p]वयं सत्वसारं वहिष्याम बोधिसत्वं सुदीपां च [q]देवीं धात्रीं च बोधिसत्वस्य। शिविकामारूढा [r]शक्रो च देवानामिन्द्रो महाब्रह्मा च [s]उत्सारणं [t]करोन्ति। एवं बोधिसत्वो [u]महतीये विभूषाये महतीये समृद्धीये महतीये देवऋद्धीये महतीये राजऋद्धीये पद्मिनीवनातो उद्यानातो 15 दीपवतीं राजधानीं [v]प्रवेशीय[w]ति देवीये कलमुपनीतः।

नरो चेतियेषु [x]प्रविष्टो अकामो
महालोकनाथो नरेन्द्राण शास्ता।
यदा [y]उत्तमांगेन [z]वन्दापयेन्सुः
ततो अस्य पादानि [a]प्रादुर्भवेन्सुः ॥१५३॥
20 ततो [b]देवता देवतां इत्यवोचत्
न एषोऽनुरूपो ममं वन्दमानो।

प्रणामं च एषो यद्यन्यस्य कुर्यात्

दृढं स[a]प्तधा अस्य मू[b]र्ध्न फलेया इति ॥१५४॥

जातमात्रे कु[c]मारे[d]ऽर्थसिद्धी सुखी सर्वे सत्वा अभूद्याव[e]दवीचिं। प्रणामं च कुर्वी देवाः। तस्य सव प्र[f]हृष्टाः।

राजकुलं च कु[g]मारे प्रविष्टे उवाच पुरोहितं नृपति[h]ः। 5 Sen. 224

[i]लक्षणविधिगुणकुशलां विप्रान् पर्येषथ शीघ्रं ॥१५५॥

तं विज्ञाय च देवा महेश्वरा नाम चित्तवशव[j]र्ती।

मा [k]लक्षणा अकुशला विकल्पयिष्यन्ति [l]द्विजसंघा ॥१५६॥

[m]विगतमदमानदर्पाः अष्ट सहस्रा महेश्वरवराणां।

देवगणेहि गुरुकृतं संप्रतिजा[n]तं उपगमे[o]न्सुः ॥१५७॥ 10

ते राजकुलद्वारे शुचिवसनवर[p]स्थिता स्तिमितशब्दा।

प्रतिहार[q]रक्षमब्र[r]वीत् सुमधुरकरविंकरुतघोषाः ॥१५८॥

राजवरं उपग[s]म्य ब्रूवीहि इमे लक्षणगुणविधिज्ञाः।

तिष्ठन्ति अष्टसहस्र[t]ं प्रविशेन्सुः यदि अनुमतन्ते ॥१५९॥

साधूति प्रतिश्रुत्वा [u]प्रतिहाररक्षो प्रविश्य राजकुलं। 15

[v]अब्रवीत्कृतांजलिपुटो प्रीतिमनसो पृथिवीपा[w]लं ॥१६०॥

[x]अतुलबल [y]दीप्तयशसा का[z]रय राज्यं चिरं निहतशत्रुः।

द्वारे ते अमरसदृशास्तिष्ठन्ति प्रवेष्टुमिच्[a]छन्ति ॥१६१॥

प्रतिपूर्णविमलनयना मधुरस्वरमत्तवारणविचारी।

[b]भवति मम ते[c]षु सं[d]का न ते मनुजा देवपुत्रा ते ॥१६२॥ 20

[e]परिचंक्रमतां तेषां धरणिरजो क्रमवरा न संकिरति।

[f]न च सान पश्यामि पदं पृथिव्यामिदं अपि आश्च[g]र्यं ॥१६३॥

[a]गम्भीरस्तिमितचेष्टा आर्याकारा प्रशान्तदृष्टिपथा ।
[b]विपुलां जनेन्ति प्रीतिं जनस्य समुदीक्षमानस्य ॥१६४॥
[c]अन्यं च [d]दानि अद्भुतं शरीरच्छाया न दृश्यते तेषां ।
Sen. 225 न च [e]तेषु सन्धिशब्दो चंक्रमतां श्रूयते कश्चित् ॥१६५॥
5 निःसंशयं उपगता पुत्रवरं तव नरवराधिप [f]द्रष्टुं ।
[g]अभि[h]नन्द्य च अभिवन्द्य च [i]पश्यासि अयोनिजां देवां ॥१६६॥
वरमाल्यगन्धहस्ता लीला[j]चेष्टा मनोरमशरीरा ।
[k]दीप्यन्ता इव शिरिये असंशयं प्रवरमरुतस्ते ॥१६७॥
तं अर्चिमो निशाम्य वचनमिदं हर्षकम्पितशरीरो ।
10 [l]अब्रवीद्द्रूणे सुचपलं प्रविशन्तु निवेशनमुदारं ॥१६८॥
किं कार[m]णं न एदृशाः प्राकृतपुरुषाण भोन्ति आकाराः
[n]न पि मानु[o]षाण [p]एदृशी ऋद्धि भवति यादृशीं भणसि ॥१६९॥
अथ सो प्रतिहाररक्षो उपगम्य महे[q]श्वरानिदमवोचत् ।
[r]प्रह्वो कृतांजलिपुटो प्रणम्य हृष्टो मुदितचित्तो ॥१७०॥
15 अभि[s]नन्दते नरपतिः प्रविशन्तु भवन्तो दे[t]वपुरकल्पं ।
राजवृषभ[u]स्य वेश्मं नराधिपतिना अनुज्ञाताः ॥१७१॥
[v]एतं श्रुत्वा [w]वचनं अष्टसहस्रं महेश्वरव[x]राणां ।
प्रविशन्ति पार्थि[y]वकुलं अनिहतकुल[z]वंशमुख्यस्य ॥१७२॥
[a]अथ अर्चिमो पि राजा महेश्वरां दूरतो निशा[b]मेत्वा ।
20 प्र[c]त्युत्थितो सपरि[d]वारो गौरवबलभावितशरीरो ॥१७३॥
[e]तानवच राजवृषभो स्वागतमनुरागतं वः सर्वेषां ।
प्रीतोऽस्मि द[f]र्शनेन प्रशमदमबलेन च भवतां ॥१७४॥

संविद्यन्ते[a] इमानि अस्माकं आसनप्रधानानि ।
आस्तां ताव[b] भवन्तो अस्माकमनुग्रहार्थाय[c] ॥१७५॥
अथ[d] ते तेष्वासनेषु बहुरतनविशुद्धचित्रपादेषु ।
विगतमदमानदर्पा[e] निषीदि अनवद्यकर्मान्ता:[f] ॥१७६॥ Sen. 226
ते[g] कंचिदेव कालं आगमयित्वा नराधिपमवोचत् । 5
शृण्वतु[h] भवां[i] प्रयोजनं[j] यं अस्माकमिह गमनाये[k] ॥१७७॥
सर्वानवद्यगात्र:[l] उत्पन्नो[m] लोकसुन्दरो तुह्यं[n] ।
पुत्रो किल मनुजपते[o] लक्षणगुणपारमीप्राप्तो[p] ॥१७८॥
वयमपि[q] लक्षणकुशला: समर्था गुणदोषलक्षणं ज्ञातुं ।
यदि न गुरुत्वं भवतो पश्येम[r] महापुरुषरूपं ॥१७९॥ 10
सो[s] अवच हंत पश्यथ सुव्यपदेशक्षेमं[t] मम पुत्रं ।
मरुमनुजहर्षजननं[u] लक्षणगुणपारमिप्राप्तं[v] ॥१८०॥
अथ[w] स मृदुकाचिलिन्दिकप्रवेणियं[x][y] गुणधरं[z] ग्रहेत्वान[a] ।
अंकेन वादिचद्रं[b] उपनामयति सुरवराणां ॥१८१॥
आलोकयित्व[c] दूरात् महेश्वरा: वरक्रमान्दशबलस्य । 15
मूर्धनि[d] विगलितमुकुटा निपतेन्सु महीतले हृष्टा[e] ॥१८२॥

ते दानि राजानमारोचेन्ति[f] । लाभा[g] ते महाराज सुलब्धा यस्य ते यं महापुरुषो कुले उत्पन्नो द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतो ।

तद्यथा[h] ।

समा[i] हेष्टा च दीर्घा च आयता च उच्छंग पंचमा[j] । 20
एणि बृहच्च[k] तिष्ठन्तो कोश न्यग्रोध ते दशा ॥१८३॥

मृदु जाला[a] च प्रतिपूर्णा एका[b] ऊर्ध्वाग्र पंचमा।
श्लक्ष्णच्छवि[c] हंसान्तरा च उत्सदा च ते[d] दश ॥१८४॥
Sen. 227 रसं[e] सुवर्ण सीहो च समा[f] शुक्ला च पंचमा।
समा प्रभूता[g][h] ब्रह्मा च नीला गोपक्ष्म ते दश।
5 ऊर्णा उष्णीषशीर्ष[i] च नाथो[j] द्वात्रिंशलक्षणो ॥१८५॥

ते दानि ब्राह्मणा राज्ञा[k] अर्चिमेन उच्यन्ति। यं कुमारस्य नामं अनुरूपं तं
करोथ। ते ब्राह्मणा आहन्सु[l]। महाराज कुमारे[m] जायमाने[n] दीपो[o] प्रादुर्भूतो महां[p]
ओभासो तस्मात् कुमारो दीपंकरो नाम भवतु। एवं कुमारस्य शुद्धावासेहि देवेहि
ब्राह्मणवेशं[q] निर्मिणित्वा दीपंकरो ति नाम कृतं।

10 तस्य सदृशीयो धात्रीयो कुमारं उपस्थिहन्ति[r] संवर्धयन्ति। यदा च बोधिसत्वो
यौवनप्राप्तो राज्ञा त्रयो प्रासादा[s] कारिता कुमारस्य क्रीडार्थं परिचारार्थं विस्तीर्णं च
अन्तःपुरं उपस्थापितं[t]। बोधिसत्वो महता राजानुभावेन महता राजऋद्धीये[u] महता
राजविभूषाये[v] सान्तःपुरो[w] पद्मिनीवनमुद्यानभूमिं[x] निर्गतो क्रीडार्थं। राज्ञा अर्चिमेनान्तः-[y]
पुरमाणत्तं। सुष्ठु[z] कुमारं क्रीडापेथ[a]। बोधिसत्वो नावायानेहि पुरिमपश्चिमवेदिहि[b]
15 वेदिकाजालेहि वेदिकाजालपरिक्षिप्तेहि विततवितानेहि चित्रदुष्यपरिक्षिप्तेहि ओसक्त-[c]
पट्टदामकलापेहि[d] धूपनधूपितेहि मुक्तपुष्पावकीर्णेहि हारार्धहारचन्द्रसुचित्रेहि उच्छ्रित-
च्छत्रध्वजपताकेहि[e] नावायानेहि निष्पुरुषे तटे ओतरति। किलान्तं[f] अन्तःपुरमासुप्तं
काचि हनुकामुपग्रहियाण काचित्पणवमुपगुह्य[g] काचिद्वेणुं काचिद्वीणां काचिद्वल्लकीं[h]
काचित्सुघोषकीं[i] काचिन्नूपुरं[j] काचित् मृदंगं[k] काचिल्लालाधरन्ति। बोधिसत्वस्य तां
20 दृष्ट्वा[l] श्मशानसंज्ञा प्रादुर्भूता[m]। मध्ये[n] पुष्करणीये[o] पद्मं प्रादुर्भूतं[p] रथचक्रमात्राहि[q]
Sen. 228 कर्णिकाहि अपरेहि पद्मसहस्रेहि अनुपरिवारितं[r]। बोधिसत्वो[s] तत्पदुमे पर्यङ्केन

निषण्णो[a] तं च पद्मं[b] संकुचितं[c] कूटागारे संस्थितं। बोधिसत्वस्य सर्वं[d] गृहिलिंगमन्तर्हितं[e] काषायाणि[f] प्रादुर्भूतानि[g]।

अथ खलु महामौद्गल्यायन[h][i] दीपंकरो बोधिसत्वो विविक्तं कामेहि विविक्तं पापकैरकुशलैर्धर्मैः[j] सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य[k] विहरेसि। सवितर्कविचाराणां[l] व्युपसमादध्यात्मसंप्रसादाच्चेतसः[m] एकोतीभावादवितर्क[n]-मविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसंपद्य विहरेसि। स[o] प्रीतेर्विरागा-दुपेक्षकश्च विहरति स्मृतः[p] संप्रजानं सुखं च कायेन प्रतिसंवेदयति। यत्तं आर्या आचक्षते उपेक्षकः[q] स्मृतिमां सुखविहारी[r] निष्प्रीतिकं तृतीयं ध्यानमुपसंपद्य[s] विहरति। सुखस्य च प्रहाणा दुःखस्य[t] च प्रहाणात्पूर्वं[u] च सौमनस्यदौर्मनस्ययोरस्तंगमात् अदुःखा-सुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं[v] ध्यानमुपसंपद्य विहरेसि। सो तथा[w] समाहितेन चित्तेन परिशुद्धेन पर्यवदातेन अनंगणेन[x] विगतोपकिलेशेन[y][z] मृदुना कर्मण्येन[a] स्थितेनानिज्यप्राप्तेन रात्रीये पुरिमे यामे दिव्यचक्षुदर्शनप्रतिलाभाय[b] चित्तमभिनिर्हरेसि निर्णामेसि[c]।

सो दिव्येन चक्षुषा सत्वान्पश्यति[d] च्यवन्तां[e] उपपद्यन्तां सुवर्णां दुर्वर्णां[f] सुगतां दुर्गतान् यथाकर्मोपगान् सत्वान् प्रजानाति। सो तथा समाहितेन चित्तेन[g] परिशुद्धेन पर्यवदातेन अनंगणेन विगतोपक्लेशेन[h] मृदुना कर्मण्येन स्थितेनानिज्यप्राप्तेन रात्रीये मध्यमे यामे अनेकविधं पूर्वनिवासं समनुस्मरेत्। सय्यथीदं[i] एकां[j] वा जातिं द्वौ वा जातिं त्रयो वा जातिं[k] चत्वारि वा जातिं पंच वा जातिं दश[l] वा विंशद्वा त्रिंशच्चत्वारिंशं[m] वा पंचाशं वा जातीशतं[n] वा जातीसहस्रं वा अनेकानि च जातीशतानि अनेकानि [Sen. 229] जातीसहस्राणि अनेकान्यपि जातीशतसहस्राणि संवर्तकल्पां[o] वा विवर्तकल्पां[p] वा संवर्तविवर्तकल्पां[q] वा अनेकां पि संवर्तां अनेकां पि विवर्तां[r] अनेका पि संवर्तविवर्तानि कल्पानि। अमुत्राहं आसिं[s] एवंनामो एवंगोत्रो एवंजात्यो[t] एवमाहारो एवमायुःपर्यन्तो

एवंसुखदुःखप्रतिसंवेदी इति साकारं सोद्देशं[a] अनेकविधं पूर्वनिवासं समनुस्मरति[b]। सो
तथा समाहितेन चित्तेन परिशुद्धेन पर्यवदातेन अनंगणेन[c] विगतोपकिलेशेन[d]
स्थितेनानिञ्ज्यप्राप्तेन[e] रात्रीये पश्चिमे यामे नन्दीमुखायां रजन्यां अरुणोपघाटकालसमये[f][g]
यत्किञ्चित्पुरुषनागेन[h] पुरुषसिंहेन पुरुषर्षभेण[i] पुरुषपद्मेन पुरुषपुण्डरीकेण[j] पुरुषधौरेयेण
5 पुरुषेण सत्पुरुषेण पुरुषाजानेयेन अनुत्तरेण[k] पुरुषदम्यसारथिना[l] गतिमेन स्मृतिमेन
धृतिमेन मतिमेन सर्वंशो सर्वत्रताये ज्ञातव्यं[m] प्राप्तव्यं बोद्धव्यं[n] अभिसंबोद्धव्यं[o] सर्वन्तमेक-
चित्तक्षणसमायुक्तया[p] प्रज्ञया अनुत्तरां[q] सम्यक्संबोधिमभिसंबुद्धो।

इयं च महापृथिवी षड्विकारं कम्पे संप्रकम्पे भूम्या[r] च देवा घोषमुदीरयेन्सुः[s]
शब्दं[t] नभे श्रावयेन्सु[u]। एष मारिष भगवां[v] दीपंकरो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धो[w]
10 भविष्यति[x] बहुजनहिताय बहुजनसुखाय लोकानुकंपाय महतो[y] जनकायस्यार्थाय हिताय
सुखाय देवानां च मनुष्याणां[z] च। भूम्यानां देवानां घोषं श्रुत्वा अन्तरीक्षेचरा देवा[a]
त्रायस्त्रिंशा यामा तुषिता निर्माणरतयः परनिर्मितवशवर्तिन[b][c] इति तत्क्षणन्तन्मुहूर्तं
यावद्ब्रह्मकायं घोषमभ्युद्गच्छेत्[d]। एष मारिष भगवां[e] दीपंकरो सम्यक्संबुद्धो[f]
भविष्यति तं भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकंपाय महतो जनकाय-
15 स्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। अप्रमेयस्य उदारस्य[g] महतोऽवभासस्य
लोके प्रादुर्भावो अभूषि। यावता[h] लोके लोकान्तरिका अन्धकारा अन्धकारार्पिता[i]
Sen. 230 तमिस्रा तमसार्पिता अघा अघसंभूतपूर्वा[j] यत्र इमे पि चन्द्रमसूर्या एवं महर्द्धिका[k] एवं
महानुभावा[l] आभया[m] आभां नाभिसंभुणन्ति आलोकेन वा आलोकं न स्फरन्ति ते पि
तेन ओभासेन[n] स्फुटा अभून्सुः[o]। ये पि तत्र सत्वा उपपन्ना[p] ते पि अन्यमन्यं संजानेन्सुः
20 अन्ये पि किल इह भो सत्वा उपपन्ना अन्ये पि किल भो सत्वा उपपन्ना अन्ये पि
किल भो सत्वा उपपन्नाः। एकान्तसुखसमर्पिता[q] च पुनस्तत्क्षणं तं[r] मुहूर्तं सर्वे[s] सत्वा
अभून्सु[t]। ये पि अवीचे महानरके उपपन्ना[u] अतिक्रमे व देवानां देवानुभावं नागानां

नागानुभावं यक्षाणां [a]यक्षानुभावं। [b]ध्यामानि च अभून्सुः मारभवनानि निष्प्रभाणि निस्तेजानि निरभिरम्याणि। [c]क्रोशिकान्यपि तत्र खण्डानि [d]प्रपतेन्सु द्विक्रोशिकान्यपि तत्र खण्डानि [e]प्रपतेन्सु त्रिक्रोशिकान्यपि तत्र खण्डानि [f]प्रपतेन्सु योजनिकान्यपि तत्र खण्डानि [g]प्रपतेन्सु [h]ध्वजाग्राण्यपि प्रपतेन्सु। मारो च [i]पापीमां दुःखी दुर्मनो विप्रतिसारी [j]अन्तोशल्यपरि[k]दाघजातो अभूषि। 5

[l]तत्रैव च [m]मौद्गल्यायन [n]पद्मकूटागारे भगवां दीपंकरो चतुर्हि महाराजेहि शक्रेण च देवानामिन्द्रेण [o]सुयामेन च [p]देवपुत्रेण संतुषितेन च देवपुत्रेण [q]वशवर्तिना च देवपुत्रेण महाब्रह्मणा च अनेक[r]देवसंघपरिवारेहि संवृतो। भगवतो दीपंकरस्य [s]उदारा पूजा कृता। दिव्येहि मन्दारवेहि कुसुमेहि महामन्दारवेहि [t]कर्णिकारेहि [u]रोचमानेहि भीष्मेहि महाभीष्मेहि समन्तगन्धेहि महासमन्तगन्धेहि चन्दनचूर्णेहि अगुरुचूर्णेहि केशरचूर्णेहि 10 [v]तमालपत्रचूर्णेहि भगवन्तं [w]दीपंकरं ओकिरित्वा प्रकिरित्वा अभिप्रकिरित्वा दिव्येहि तूर्यसहस्रेहि संपूजयित्वा [x]तत्रैव [y]महाब्रह्मणा याचितो अनुत्तरं धर्मचक्रं [z]प्रवर्तनाय। अधिवासयति [a]महामौद्गल्यायन भगवां दीपंकरो [b]महा[c]ब्रह्मणो तुष्णीभावेन। देवा [d]अधिवासनां [e]विदित्वा हृष्टा तुष्टा आत्तमना प्रमुदितप्रीतिसौमनस्यजाता भगवतो Sen. 231 दीपंकरस्य पादां शिरसा वन्दित्वा [f]त्रिष्कृत्यो प्रदक्षिणीकृत्वा तत्रैवान्तर्हायेन्सु। 15

भगवान् [g]तस्यैव [h]रात्र्या अत्ययेन [i]प्रतिसंलयनाद्व्युत्थाय जनपदेषु चारिकां प्रक्रमेत्।

[j]आदित्यो वरवर्णो बालो [k]अभ्युद्गतो [l]यथाकाशे।

योजनशतं प्रभाये दीपंकरो [m]भरित्व [n]अस्थासि॥१८६॥

[o]भगवां दीपंकरो चारिकां चरमाणो [p]महतो जनकायस्य [q]देवानां मनुष्याणां च 20 अर्थंचर्यां चरमाणो अशीतिहि भिक्षुसहस्रेहि सार्धं दीपवतीं राजधानीं आगच्छति [r]पितुः अर्चिमतो ज्ञातीनां च अनुकम्पार्थं। [s]राज्ञा अर्चिमेन श्रुतं। भगवां दीपंकरो

अशीतिहि भिक्षुसहस्रेहि [a]सार्धं दीपवतीं राजधानीं आगच्छति ज्ञातीनामनुकम्पायेति । [b]ते च यावद्दीपवती [c]याव च [d]पद्मिनीवनमुद्यानं [e]दशक्रोशमार्गं प्रतिजागृहन्सुः [f]अष्टापदसमं अविषमं पाणितलसमं सिक्तं संमृष्टं [g]विततवितानं विचित्रदुष्यपरिक्षिप्तं ओसक्तपट्ट-दामकलापं धूपनधूपितं दशदिशेहि च [h]नटनर्तकऋल्लमल्लपाणि[i]स्वर्यालंकृतं [j]चक्रवर्तिपुरं भूयस्य च शतपत्रालंकृतं । [k]राज्ञा अर्चिमेन प्रभूतं गन्धमाल्यं गृहीतं तथा गृहीतं महाजनकायेन [l]समन्ताद्द्वादश[m]योजनातो गन्धमाल्यं समुदानीतं । [n]राजा अशीतिहि कोट्टराजसहस्रेहि सार्धं अन्याये च जनताये भगवन्तं दीपंकरं [o]प्रत्युद्गतो ।

अपरो [p]श्रोत्रियो [q]षडङ्गवित् त्रयाणां वेदानां पारगो साक्षरप्रभेदानामितिहास-पंचमानां [r]स[s]निघण्टकैटभानां माणवकानां आचार्यो कुशलो ब्राह्मणकेषु [t]देवेषु पंचमाणव-कशतानि वेदमन्त्रा वाचयति । [u]तहिं द्वे माणवका संमोदिका प्रियमाणा मेघो च नाम माणवको मेघदत्तो च । मेघमाणवको पण्डितो धीरो मेधावी [v]तीक्ष्णबुद्धिको । तेन [w]नचिरस्यैव सर्वे मन्त्रा अधीता । सो दानि अधीतवेदाध्ययनो [x]अनुहिमवन्ता जनपदं [y]ओकस्तो आचार्यस्य आचार्यधनं पर्येषयिष्यामि इति । [z]यष्टि[a]कमण्डलुच्छत्रं [b]उपा[c]नहां[d]श्च स्नानशाटिं आदाय यस्य ग्रामस्य वा नगरस्य वा निगमस्य वा सीमामाक्रामति तं निरीतिकं [e]निरुपद्रवं च [f]भवति मेघस्य माणवकस्य तेजोधातुभावेन । तेन [g]यायिना पुरुषो विज्ञप्तो । [h]तेनैवं पंच पुराणशतानि दिन्नानि । तस्य दानि एतदभूषि । [i]यं नूनाहं आगतको येन दीपवती राजधानी चक्रवर्तिपुरं सप्तरतनामयं [j]अभिरमणीयं पश्येयं ति । सो दानि [k]दीपवतीं राजधानीं प्रविष्टो पश्यति च दीपवतीं राजधानीं [l]अलंकृतां । [m]तस्य एतदभूषि । किमिदं अद्य दीपवतीये राजधानीये पर्वं वा प्रयोगं वा उत्सवं वा । अथ [n]राज्ञो [o]अर्चिमस्य श्रुतं मेघो माणवको अधीतवेदाध्ययनो अनुहिमवन्तातो जनपदमोकस्तो सो [p]दीपवतीं राजधानीं आगमिष्यति । ततो इमं [q]नगरवरमलंकृतं ति । [r]सो पुरेगामी यो जनो प्रविशति [s]सो तं कंचित्पृच्छति । तहिं

अपरा [a]माणविका प्रासादिका दर्शनीया [b]अचपला [c]अनुद्धता अप्रगल्भा उदकघटमादाय सप्त च उत्पलानि गच्छति। [d]सा तेन [e]पृच्छिता भवति। अद्य नगरे [f]उत्सवो। अथ खलु प्रकृति [g]माणविका [h]मेघं माणवकं गाथाभिरध्यभाषे।

[i]अपि तु नासि [j]माणवा इतो [k]अन्य[l]पुरादसि त्वं इहागतो।
यो [m]लोकहितं प्रभंकरं दीप[n]वतीं [o]प्राप्तं न बुध्यसे ॥१८७॥
[p]दीपंकर लोकनायको अर्चि[q]मतो तनयो [r]महायशो। Sen. 233
[s]बुद्धो नगरं प्रवेक्ष्यति [t]तस्य क्रुते नगरं अलंक्रुतं ॥१८८॥

सा तेन [u]पृच्छिता। कथं ते [v]भवति [w]इमा उत्पला[x]नि क्रीतानि। [y]सा तं आह। पंचहि पुराण[z]शतेहि पंच उत्प[a]लानि क्रीतानि [b]द्वे च मे मैत्राय लब्धानि। मेघो माणवो आह। अहं ते पंचपुराण[c]शतानि देमि देहि मे तानि पंच उत्पलानि। अहं एतेहि पंचहि [d]उत्पलेहि भगवन्तं दीपंकरं पूजयिष्यामि। त्वं हि [e]द्वीहि पि अर्चय। [f]सा आह। समयतो ते पंच उत्पला[g]नि ददेहं। यदि मम भार्या[h]मुपादियसि यत्रयत्र उपपद्यसि अहं च तव भार्या भवेयं त्वं च मम स्वामिको भवेसि। मेघो माणवो आह। [i]अनुत्तराये सम्यक्सम्बोधये चित्तमुत्पादयि[j]ष्यामि कथं संयोगे चित्तमुत्पादयिष्यामि। [k]सा आह। [l]उत्पादेहि तुवं तव न अन्तरायं करिष्यामि। तेन मेघेन [m]माणवकेनाभ्युपगता। [n]उपादियामि तव भार्या तेषामुत्पलानामर्थाये। भगवन्तं दीपंकरं पूजयिष्यामि अनुत्तराये[o] च सम्यक्सम्बोधये चित्तमुत्पादयि[p]ष्यामि। तेन पञ्च पुराणशतानि [q]दत्त्वा पंचोत्पलानि गृहीता उदारं च से प्रीतिप्रामोद्यं काये उत्पन्नं बुद्धशब्दं प्रकृतिये माणविकाये श्रुत्वा।

[r]यदिच्छसि पूजितुं लोकनायकं
जलजेहि [s]माल्येहि मनोरमेहि।

[a]उपादियाहि मममद्य भार्यां
प्रेम्णानुरक्ता [b]स[c]ततं ति भेष्यं ॥१८९॥
उदुम्बरस्य [d]यथ पुष्पं दुल्लभं
कदाचिदुत्पद्यति लोके माणव ।
5 Sen. 234 [e]एमेव बुद्धान महायशान
कदाचिदुत्पादं त[f]थागतानां ॥१९०॥
पूजेहि बुद्धं [g]न[h]रदम्यसारथिं
जलजेहि माल्येहि मनोरमेहि ।
बो[i]धाय ते भेष्यति हे[j]तुभूतं
10 भार्या [k]च ते भेष्यि अहं तहिं तहिं ॥१९१॥

मेघ आह ।

[l]उपादियामि तव अद्य भार्यां
जलजान अर्थयि मनोरमाणां ।
पूजेष्यि बुद्धं नरदम्यसा[m]रथिं
15 बोधाय मे भेष्यति हेतुभूतं ॥१९२॥
सा [n]हृष्टा संवृत्ता अ[o]दासि उत्पलां
स्नेहेन [p]प्रेम्णानुगतं विदित्[q]वा ।
गच्छ[r]न्तमेनं अनुगच्छि चारिकां
शृंगाटके यत्र स्थितो हि माणवो ॥१९३॥

20 भगवान[s]शीतिहि भिक्षुसहस्रेहि परिवृतो राज्ञा च अर्चिमेन अशीतिहि च कोट्टराजान सहस्रेहि अनेकेहि च क्षत्रियमहाशालसह[t]स्रेहि [u]श्रमणब्राह्मणतीर्थकरेहि दीपवतीं राजधानीं संप्रस्[v]थितो ।

गमनसमये भगवतो देवसहस्राणि सन्निपतितानि[a] ।
सप्तरतनामयानि[b] च्छत्रसहस्राणि आदाय[c] ॥१९४॥
अथ सो[d] महागुणधरो संप्रस्थितो अग्रतो गणवरस्य ।
मत्तगजखेलगामी मरीचिजाला[e]वततकायो[f] ॥१९५॥
वेरुलिकस्फा[g]टिकमयकांचनघनकनकसुकृतदण्डानि[h] । 5 Sen. 235
छत्राणि[i] देवपुत्रा धारेन्ति विशुद्धदेवस्य ॥१९६॥
देवाभिनिर्मितानि[j] नभे तरुणादित्यमण्डलनिभानि ।
तपनीयकिंकिणीया[k]रुचिरा वरनन्दिघोषाणि ॥१९७॥
सप्तरतनामयं[l] पि च दिव्यं दिव्यकुसुममण्डितच्छत्रं[m] ।
छत्राधरस्य लोके धारयि च्छत्रं त्रिदशराजा[n] ॥१९८॥ 10
त्रिसहस्राधिपतिं पि[o] च कांचनघनकनकसुकृतदण्डाये[p] ।
वरचामराये विरजं[q] वीजेन्ति नरेन्द्रं[r] चानुगताः ॥१९९॥
अत्युन्नता च नमति नतापि[s] अत्युन्नता भवति भूमिः ।
प्रविशन्तस्य[t] भगवतो समं दशबलानुभावेन ॥२००॥
समनन्तरं च भगवां[u] दक्षिणमेव चरणं कनककमलं[v] । 15
परिहरति इन्द्रकीले[w] तत्र भवति अद्भुतो घोषो ॥२०१॥
आडम्बरा मृदङ्गा[x] पटहा असंघट्टिता[y] प्रवाद्यन्ति ।
शंखा[z] पणवा च वेणु प्रविशन्तस्मि नरवरस्मि ॥२०२॥
यानि रतनानि[a] नगरे निहितानि[b] पेटककरण्डगतानि ।
तानि पि[c] संघट्टेन्सुः रतनवरविदुस्मि[d] प्रविशन्ते ॥२०३॥ 20
अथ महारहाणि[e] मृदूनि[f] वस्त्रयुगा मार्गे संस्तरयेन्सु ।
भगवतो[g] नानाविधानि[h] रंगरक्ता काशिकदुकूला[i] ॥२०४॥

अलंकृतो लोकनायको[a][b] कोशिकारकं[c] क्षौमं यं तूला काचिलिन्दिक अजिनप्रवेणि[d]

Sen. 236 च वनरुस्ता तमकूटातपकोट्टवकसुभूमि[e] तोषलकोलमचिरावोकोद्धव[f][g] आमं रक्तक पञ्चविधा[h] नय···ल्लं।

याव[i] च अग्रोद्यानं याव च अन्तःपुरं[j] महिपतिस्य[k]।

5 शोभति[l] नरेन्द्रमार्गो दुष्यशतसहस्रसंस्तीर्णो ॥२०५॥

अथ च वनखण्डरगता[m][n] प्रमदा[o] अध्योकिरन्ति[p] नरसिंहं।

कुसुमनिकरकं[q] ग्रहेत्व[r][s] कनकगिरिनिभं अभिकिरन्ति ॥२०६॥

यथयथ[t] महानुभावो दीपवतीमभ्युपेति कारुणिको[u][v]।

तथातथा कुसुमनिकरं[w] मुंचन्ति यशस्विनो भवतो ॥२०७॥

10 तानि च करप्रमुक्ता[x] सुरभीणि पंचवर्णो······।

संस्थिहति[y] पुष्पकंचुको भगवतो लोकनाथस्य ॥२०८॥

गगनपथे[z] निरालम्बे[a] अभ्यन्तरकण्टकानि[b] सुरभीणि।

स्थातु[c] प्रादक्षिणिये अभिदक्षिणं[d] कुर्वि कुसुमानि ॥२०९॥

गच्छति[e] अनुगच्छन्ति तिष्ठन्ति स्थाति लोकप्रद्योते[f]।

15 ईर्यापथमृद्धिमतो[g] सर्वाभिभुनो[h][i] न विजहन्ते ॥२१०॥

संवर्तका[j] पि वाता यदि विवहेन्सुः इमां त्रिसाहस्रां[k]।

न विकोपये कुतो पुन वहेन्सु तं[l] पुष्पकंचुककं ॥२११॥

भगवन्तं[m] कनकनिभं कनकवरमुच्छुसमवर्णं दृष्ट्वा।

दिवि[n] मरूण गणा तद उदीरयेन्सुः अहो धर्मं[o] ॥२१२॥

20 Sen. 237 प्रमुक्तपुष्पावकीर्णं[p] च अम्बरं धरणियं[q] च कुसुमोघा[r]।

शोभन्ति[s] जानुमात्रा पुष्पं[t] च कञ्चुकमाकाशे ॥२१३॥

हिक्कारा तूर्य[a]मिश्रा समन्ततो वर्तन्ति अहो धर्म ।
[b]ओना[c]देन्ति पुरवरं नरवृषभस्मि प्रविशन्तस्मि ॥२१४॥
हंस[d]कर[e]विंकर्वाहिणपरभृतसुरवा च भृ[f]ङ्गनिर्घोषा ।
दीप[g]वतीये निशा[h]म्यति निधि[i]रतनध्वनितविमिश्रा ॥२१५॥

[j]अद्दशासि महा[k]मौद्गल्यायन मेघो माण[l]वो भगवन्तं दीपंकरं दूरतो येव आगच्छन्तं 5
द्वात्रिंशतीहि महापुरुषलक्षणोहि समन्वागतमशीतिहि अनु[m]व्यंजनेहि उपशोभितश[n]रीरं
अष्टादशेहि आवे[o]णिकेहि बुद्धध[p]र्मेहि समन्वागतं दशहि तथागतबलेहि [q]बलवं चतुर्हि
वैशारद्येहि समन्वागतं । नागो विय कारितका[r]रणो अन्तोगतेहि इन्द्रियेहि अवहिर्गत-
मानसेन स्थितो ध[s]र्मावस्थाप्राप्तः शान्तेन्द्रियो शान्तमानसो उत्तमदमशमथपारमिप्राप्तो
[t]गुप्तो नागो जितेन्द्रियो ह्रदमिव अच्छो अनाविलो विप्रसन्नो प्रासादिको दर्शनीयो 10
आसेचनको अ[u]प्रतिकूलो द[v]र्शनाये योजनगताये प्रभाये ओभासयन्तो । दृष्ट्वा च पुन[w]रस्य
अद्वयसंज्ञा उदपासि । अहमपि बुद्धो लोके भ[x]विष्यामि । अथ ख[y]लु [z]मौद्गल्यायन मेघो
माणवो ताये वेलाये इमां गाथामभाषि ।

चिरस्य [a]चक्षुं उदपासि लोके
चि[b]रस्य उत्पादो तथागता[c]नां । 15
चिरस्य म[d]ह्यं प्र[e]णिधिः समृद्धा
बुद्धो भविष्यामि न मेऽत्र संशयः ॥२१६॥

[f]अथ महा[g]मौद्गल्यायन मेघो माणवो उदारं हर्षसंवेगं उदारं प्रीतिप्रामोद्यं Sen. 238
[h]संजनयित्वा तानि पंचो[i]त्पलानि भगवतो दीपंकरस्य क्षिपि । तानि पि प्रभाजालं
मुखमण्डलमनुपरिवारेत्वा [j][k]अस्थासु । प्रकृतिये पि [l]माणविकाये तानि [m]दुवे उत्पलानि 20
क्षिप्तानि । [n]तानि पि अन्तरीक्षे अस्था[o]न्सु । त्रीहि प्रातिहार्येहि बुद्धा भगवन्तो
सत्वां विनेन्ति ऋद्धिप्रातिहार्येण आदेशनाप्रातिहार्येण अनुशासनीप्रातिहार्येण ।

भगवतो दीपंकरस्य[a] या च मेघेन[b] माणवेन[c] पंच उत्पलानि क्षिप्ता[d] या च प्रकृतिये[e] माणविकाये[f] या च अन्याये जनताये क्षिप्ता तं भगवतो पुष्पवितानमधिष्ठितं[g] सत्वानां वैनेयवशेन[h] मेघस्य[i] च माणवस्य प्रीतिप्रामोद्यसंजननार्थं[j] प्रासादिको दर्शनीयो चतुःस्थूणो चतुःद्वारो ओसक्तपट्टदामकलापो ।

5 मेघस्य[k] तानि जलजानि भगवतो प्रभामण्डलस्योपरि समन्तेन स्थितानि दृष्ट्वा प्रासादिकानि प्रसदनियानि प्रीतिप्रामोद्यं काये उत्पद्ये[l] उदारो च चेतनाप्रादुर्भावो । सो कमण्डलुमेकान्ते[m] निक्षिपित्वा अजिनं च प्रज्ञपेत्वा भगवतो दीपंकरस्य क्रमेषु प्रणिपतित्वा केशेहि[n] पादतलानि संपरिमार्जन्तो[o] एवं चित्तमुत्पादेति[p] । अहो पुनरहं पि भवेयं अनागतमध्वानं तथागतोऽर्हं सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोक-

10 विदनुत्तरः पुरुषदम्यसारथिः[q][r] शास्ता देवानां च मनुष्याणां च यथायं भगवां दीपंकरो एतरहिं । एवं द्वात्रिंशतीहि[s] महापुरुषलक्षणेहि समन्वागतो भवेयं[t] अशीतिहि अनु-व्यंजनेहि उपशोभितशरीरो अष्टादशहि आवेणिकेहि बुद्धधर्मेहि समन्वागतो दशहि तथागतबलेहि[u] बलवां चतुर्हि वैशारद्येहि सुविशारदो यथायं भगवां दीपंकरो[v] एतरहिं । एवं च अनुत्तरं धर्मचक्रं[w] प्रवर्तेयं[x][y] यथायं भगवां दीपंकरो[z] एतरहिं । एवं समग्रं[a]

15 Sen. 239 श्रावकसंघं परिहरेयं । एवं च देवमनुष्याः श्रोतव्यं श्रद्धातव्यं[b] मन्येन्सुः[c] । एवं तीर्णो तारयेयं[d] मुक्तो मोचयेयं[e] आश्वस्तो आश्वासयेयं यथायं भगवां दीपंकरो[f] एतरहि । भवेयं बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय[g] महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मषुष्याणां च । अथ[h] महामौद्गल्यायन[i] भगवान्दीपंकरो[j] मेघस्य[k] माणवस्य अनुत्तरेण बुद्धज्ञानेन महासमुदागमनं[l] च ज्ञात्वा कुशलमूलसम्भारं[m] च

20 चेतोप्रणिधानं ज्ञात्वा अखण्डमच्छिद्रमकल्माषमव्रणं अनुत्तराये संम्यक्संबोधये व्याकार्षीत्[n] । भविष्यसि त्वं माणव[o] अनागतमध्वानं अपरिमिते[p] असंख्येये[q] कल्पे शाक्यानां कपिलवस्तुस्मि नगरे शाक्यमुनिर्नाम तथागतोऽर्हं सम्यक्सम्बुद्धो विद्याचरण-

संपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां[a] च यथाप्यहमेतर्हि द्वात्रिंशतीहि महापुरुषलक्षणेहि[b] समन्वागतो अशीतिहि अनुव्य-ञ्जनेहि उपशोभितशरीरो अष्टादशेहि आवेणिकेहि बुद्धधर्मेहि समन्वागतो दशहि तथागतबलेहि बलवां[c] चतुर्हि[d] वैशारद्येहि सुविशारदो। एवं तीर्णो तारयिष्यसि मुक्तो मोचयिष्यसि आश्वस्तो आश्वासयिष्यसि[e] परिनिर्वृतो परिनिर्वापयिष्यसि यथापि अहमेतर्हि। एवं चानुत्तरं धर्मचक्रं[f] प्रवर्तयिष्यसि। एवं च समग्रं[g] श्रावक-संघं परिहरिष्यसि। एवं च देवमनुष्या श्रोतव्यं श्रद्धातव्यं मनिष्यन्ति[h] यथापि अहमेतर्हि तं भविष्यसि बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च।

समनन्तरव्याकृतो[i] च महामौद्गल्यायन[j] भगवता[k] दीपंकरेण मेघो माणवो[l] अनुत्तराये सम्यक्संबोधये[m] तालमात्रं[n] वैहायसमभ्युद्गम्य[o] एकांशीकृतो प्राञ्जलीकृतो भगवन्तं[p] दीपंकरं सश्रावकसंघं नमस्यमानो। इयं च महापृथिवी तत्क्षणं तन्मुहूर्तं अतीव षड्विकारं[q] कम्पे संकम्पे[r]। भूम्या[s] च देवा घोषमुदीरयेन्सु[t] शब्दमनुश्रावयेन्सुः। एवं मेघो माणवो भगवता दीपंकरेण अनुत्तराये[u] सम्यक्संबोधये[v] व्याकृतो तद्भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय महतो जनकायस्यार्थाय[w] हिताय सुखाय देवानां च मनुष्याणां च। भूम्यानां देवानां घोषं श्रुत्वा अन्तरीक्षेचरा देवा चातुर्महाराजिका[x] देवा त्रायस्त्रिंशा यामा तुषिता निर्माणरतिनो परनिर्मितवशवर्तिनो[y] इति हि तत्क्षणं तन्मुहूर्तं याव[z] ब्रह्मकायं घोषमभ्युद्गमे.। एवं मार्ष मेघो[a] माणवो भगवता दीपंकरेण अनुत्तराये[b] सम्यक्संबोधये[c] व्याकृतो तं भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां[d] च। अप्रमेयस्य च उदारस्य महतो[e] ओभासस्य लोके प्रादुर्भावो आसि। या पि[f] ता लोके लोकान्तरिका अन्धकारा[g] अन्धकारार्पिता[h] तमिस्रा तमसार्पिता अघा

Sen. 240

अघसंभूतपूर्वा[a] यत्र इमे पि चन्द्रमसूर्या[b] एवं महर्द्धिका[c] एवं महानुभावा आभया[d] आभां नाभिसंभुणन्ति[e] आलोकेन वा आलोकं न स्फरन्ति[f] ते[g] पि तेन ओभासेन स्फुटा अभून्सुः[h] । ये पि तत्र सत्वा उपपन्नाः ते पि अन्योन्यं[i] संजानेन्सुः[j] । अन्ये[k] पि किल भो इह सत्वा उपपन्नाः अन्ये पि किल भो सत्वाः इहोपपन्ना[l] । एकान्तसुखसमर्पिता च तत्क्षणं तन्मुहूर्तं सर्वसत्वा अभून्सु[m] । ये पि अवीचे महानरके उपपन्ना[n] अतिक्रमे[o] च देवानां देवानुभावं नागानां नागनुभावं यक्षाणां[p] यक्षानुभावं[q] । ध्यामानि[r] च अभून्सुः मार-भवनानि[s] निष्प्रभाणि[t] निस्तेजानि[u] निरभिरम्याणि । क्रोशिकान्यप्यस्य[v] खण्डानि प्रपतेन्सु । द्विक्रोशिकान्यप्यस्य खण्डानि प्रपतेन्सु[w] । त्रिक्रोशिकान्यप्यस्य खण्डानि प्रपतेन्सु[x] । योजनिकान्यप्यस्य खण्डानि प्रपतेन्सु[y] । ध्वजाग्राण्यप्यस्य प्रपतेन्सुः[z] । मारो[a] च पापीमां दुःखी दुर्मना विप्रतिसारी अन्तोशल्यपरिदाघजातो अभूषि ।

Sen. 241

अजिनं[b] प्रज्ञपयित्वा[c] कमण्डलुं[d] निक्षिपयित्व[e] एकान्ते ।
क्षिपियानुत्पलहस्तं निपते[f] क्रमवरेहि चक्षुमतो ॥२१७॥
तानि च करप्रमुक्ता[g][h] सुरभीणि[i] पंचवर्णो[j]…… ।
संस्थिहति[k] पुष्पकंचुको[l] भगवतो लोकनाथस्य ॥२१८॥
गगनपथे[m][n] निरालम्बे अभ्यन्तरकण्टकानि सुरभीणि ।
स्थातु[o] प्रादक्षिणिये अभिदक्षिणं कृत्व कुसुमानि ॥२१९॥
गच्छति[p] अनुगच्छन्ति तिष्ठन्ति स्थाति[q] लोकप्रद्योते ।
ईर्यापथमृद्धिमतो[r][s] सर्वाभिभुनो न विजहन्ते[t] ॥२२०॥
संवर्तका[u] पि वाता[v] यदि विवहेन्सुः इमां त्रिसाहस्रां ।
न विकोपये[w] कुतो पुन[x] वहेन्सु तं पुष्पकंचुककं ॥२२१॥
भगवन्तं कनकनिभं कनकवरमुच्छुसमवर्णं[y] दृष्ट्वा[z] ।
दिवि[a] मरूण[b] गणा तद उदीरयेन्सुः अहो धर्मं[c] ॥२२२॥

[a]अथ सागराम्बर[b]मही संकम्पे च दिवि देवसंघेषु ।
व्या[c]करणस्मि[d] व्याकृते अभ्युद्गमि अद्भुतो [e]घोषो ॥२२३॥
एषो मेघो [f]भवता [g]एकान्तसुभा[h]षितोच्छ्रितध्वजेन ।
दीपंकरेण मुनिना व्याकृ[i]तो भवि[j]ष्यसि जिनो तुवं ॥२२४॥
तं [k]हितसुखाय काहसि सब्रह्मसुरासुरस्य लो[l]कस्य । 5
हायि[m]ष्यन्ति अपाया नरका मरु संवि[n]वर्धन्ति ॥२२५॥
दीपं च लेनं त्र परायणं च Sen. 242
दीपंकरो नाम अभूषि शास्ता ।
इतो अ[o]संख्येयतरस्मि कल्पे
स्वाख्यातधर्म्मो भग[p]वां नरेशो ॥२२६॥ 10
[q]सो उत्तमार्थं अभिगम्य पण्डितो
वि[r]शारदं व[s]र्तयि धर्मचक्रं ।
सत्ये च धर्मे च स्मृतो प्रतिष्ठितो
म[t]हद्भयाद्विषमादुद्धरे प्रजां ॥२२७॥
मेघोऽद्दशा श्रमणगणस्य नायकं 15
दीपं[u]करं परमविचित्र[v]लक्ष[w]णं ।
चित्तं प्रसादेत्व जिनं अ[x]वन्दि च
सो वन्दमानो प्रणिधिं अ[y]कासि ॥२२८॥
एवं अहं लोकमिमं चरेयं
यथा अयं [z]चरति असंगमानसो । 20
चक्रं प्रवर्तेयमनन्यसा[a]दृशं
सुसंस्कृतं देवमनुष्यपूजितं ॥२२९॥

अर्थं[a] चरेय[b] लोके देवमनुष्या[c] देशेयं[d] धर्मं[e][f] ।
एवं विनेय[g] सत्वा यथा अयं लोकप्रद्योतो ॥२३०॥
प्रणिधिं[h] च ज्ञात्वान[i] असंगसंगतं[j]
सवहि हेतूहि उपस्थितं जिनो ।
अखण्डमच्छिद्रमकल्माषाव्रणं[k][l][m]
मतिमां····· व्याकरे[n] अर्थदर्शी[o] ॥२३१॥

Sen. 243

बुद्धो तुवं भेष्यसि मेघ माणव[p]
अनागते अपरिमितस्मि कल्पे ।
कपिलाह्वये ऋषिभवनस्मि[q] शाकियो
तदा त्वं[r] पि प्रणिधिविपाकमेष्यसि[s][t] ॥२३२॥

तेन अपराणि पंचपुराणशतानि प्रेषितानि आचार्यस्य[u] । निर्यातित्वा[v] एवंविधं सर्वं मेघदत्तस्य आचिक्षति । एवं मये भगवां[w] दीपंकरः पूजितो अनुत्तराये सम्यक्संबाधये व्याकृतो[x] । गच्छामि[y] तर्हिं भगवतो दीपंकरस्य सन्तिके ब्रह्मचर्यं चरिष्याम तां च समितिमनुभविष्यामः । सो आह । अहं ताव असमाप्तवेदो[z][a] तत्र न शक्यामि गन्तुं ।

यथा काष्ठं[b] विवह्यते महन्ते उदकार्णवे ।
संघट्टितो[c][d] विनश्यति एवं प्रियसमागमो ॥२३३॥

मेघो गत्वा भगवतो दीपंकरस्य सन्तिके[e] प्रव्रजितो[f] । ते तादृशा[g] कल्याणमित्राण्यागम्य बुद्धसहस्रकोटियो अपरिमेयां[h] असंख्येयां आराधेत्वा[i] पूजयित्वा च सश्रावकसंघां[j] अप्रमेयानि च प्रत्येकबुद्धकोटिनियुता[k] पूजयित्वा दिव्यमानुषिकां संपत्तिमनुभवन्ति[l][m] यावदनुत्तरां[n] सम्यक्संबोधिमभिसंबुद्धा । यो[o] रूपं नरदम्यसारथिं श्रुत्वा[p] न[q] रूपं न उपादि गच्छेहं उपादेहं च । सो त्वाह[r] । शिरःप्रणामाये[s] एष अतीव प्रवणो

मेघो वर्तते। मेघस्य माणवस्य सकाशातो बुद्ध[a]शब्दं श्रुणित्वा न हृष्टो। पापमि[b]त्र-
समंगि[c]ताये पंचानन्तर्याणि कृतानि। परदारे [d]प्रसक्तो तत्र काले वा विकाले वा Sen. 244
[e]गच्छति। [f]तं माता पुत्रस्नेहेन निवारे[g]ति मा तत्र पार[h]दारिको ति कृत्वा घा[i]तयि[j]ष्यति।

रक्तो अर्थं न जानाति रक्तो [k]धर्मं न पश्यति।
[l]अन्धकारे तदा भव[m]ति यं रागो सहते नरः ॥२३४॥ 5

सो तां मातरं [n]घातयित्वा तस्या इस्त्रिकाये सकाशं [o]गतो यत्र प्रसक्तो[p] हस्यैव तां
प्रकृ[q]तिमाचिक्षति। एवं त्वं मम इष्टा[r] यं मया तव कारणा माता जीविताद्व्यपरोपिता।
सा स्त्री उद्विग्ना सं[s]वृत्ता। [t]ताय उक्तो[u]। [v]मा मे भूयो आगच्छसि। अ[w]परमातरं
प्रसक्तो। ततो तं सा अपरमाता आह। [x]एथ पितरं जीविताद्व्यपरोपेहि त्वं च
मे स्वामिको भविष्यसीति। तेन दानि सो पिता जीविताद्व्यपरोपि[y]तो। सो तत्र[z] 10
अधिष्ठाने जुगुप्सितो सं[a]वृत्तो। [b]मित्रज्ञातिका परिवर्जेन्ति। सो ततो अधि[c]ष्ठानातो
अन्यमधिष्ठानं संक्रान्तो[d] [e]अत्र मे न कोचि जानिष्यति। तस्य यो मातापितॄ[f]णां भिक्षु
कुलोपको आसि अ[g]रहा महानुभा[h]वो सो जनपदचारिकां चरमाणो तमधिष्ठानमनुप्राप्तो।
[i]तेन दानि सो दानपतिपुत्रो भिक्षुणा तहिं अधिष्ठाने [j]दृष्टो। सो पि तं भिक्षुं [k]दृष्ट्वा
शंकी संवृत्तो मा मे भिक्षु [l]इमंहि अधिष्ठानंहि [m]दूषयतीति। तेन दानि [n]सो पि अरहा 15
भिक्षु जीविताद्व्य[o]परोपितो। सो दानि यो तदा आसि सम्यक्संबुद्धो तस्य शासने
प्रव्र[p]जितो। तेन दानि शासने प्रव्रजित्वा संघो च भिन्नो बुद्धस्य रु[q]धिरं उत्पादितं।
एतानि पं[r]चानन्तर्याणि कर्माणि कृत्वा [s]महानर[t]केषूपपन्नो।

[u]सो अष्टसु महानर[v]केषु षोडशोत्सदेषु सुचिरं दीर्घमध्वानं संधावि[w]त्वा संसरित्वा
[x]यदा भगवता शाक्यमुनिना अनु[y]त्तरा सम्यक्संबोधिरभिसंबुद्धा धर्म[z]चक्रो प्रवृत्तः सो 20 Sen. 245
[a]महासमुद्रे [b]तिमितिमिंगिलो नाम मत्स्यजा[c]ति आयामतो बहुयोजनशतिकेन आत्म-

भावेन। यदा थपकर्णि गृहपति[a] सयानपात्रो पंचशतपरिवारो तेन महासमुद्रं[b] ओकस्तो
तदा तेन मकरभूतेन बुभुक्षितेन[c] मुखं[d] उच्छ्वासितं भोजनार्थिकेन। ततो[e] यानपात्राणि
स्थपकर्णिकस्य[f] गृहपतिस्य येन तं मकरमुखं तेन प्रधाविता[g]। निर्यातमुख[h] आह।
गृहपति इमानि यानपात्राणि बडवामुखे पतितानि यं दानि करणीयं तं करोथ नास्ति
5 दानि वो जीवितं[i]। ते दानि देवदेवतां नमस्यन्ति स्वकस्वकानि। केचिच्छिवं
केचिद्वै[j]श्रवणं केचित्स्कन्धं केचिद्वरुणं केचिद्यमं केचिद्धृतराष्ट्रं[k] केचिद्विरूढकं[l][m] केचिद्वि-
रूपाक्षं केचिदिन्द्रं केचिद्ब्रह्मं केचित्समुद्रदेवतां। यावदायुष्मां पूर्णको समन्वाहरति
पश्यति स्थपकर्णिकं गृहपतिं पंचशतपरिवारं संशयप्राप्तं। सो तुण्डतुरिकातो पर्वतातो[o]
वैहायसमभ्युद्गम्य महासमुद्रे थपकर्णिकस्य यानपात्रं[p] उपरि वैहायसमन्तरीक्षे अस्थासि।
10 ते सर्वे पंच वाणिजशतानि प्राञ्जलिं[q] कृत्वा उत्थिता[r] भगवं भगवं तव शरणगता स्म।
स्थविरो आह। नाहं भगवां[s] श्रावकोऽहमस्मि। सर्वे[t] एककण्ठा नमो बुद्धस्येति
उदीरेथ[u]। तेहि सर्वेहि पञ्चेहि[v] वणिजशतेहि[w] नमो बुद्धस्येति विघुट्टं[x]। तस्य
तिमितिमिंगिलस्य[y] बुद्धशब्दः कर्णपथं गतो। तस्य तं शब्दं श्रुत्वा[z] यो अप्रमेये
असंख्येये[a] कल्पे मेघस्य माणवस्य सकाशातो दीपंकरबुद्धशब्दो श्रुतो तं महासमुद्रे
15 तिमितिमिंगिलभूतस्य आमुखीभूतो[b]। अमोघो बुद्धशब्दो[c][d] ति। तस्य दानि तिमिति-
मिंगिलस्य[e] भूतस्य एतदभूषि[f]। बुद्धो[g] लोके प्रादुर्भूतो[h] वयं च अपायगता[i]। तेन दानि[j]
संविग्नेन पुनरपि मुखं संमीलितं[k]। अनाहारो कालगतो[l] तं बुद्धशब्दं समनुस्मरन्तो[m]
Sen. 246 समनन्तरकालगतो[n] श्रावस्त्यां महानगर्यां ब्राह्मणकुले उपपन्नो तेन कालेन तेन समयेन
प्रजातो[o] दारको जातो[p]। यथोक्तं भगवता[q] नाहं भिक्षवो कर्मतोऽन्यद्वदेमि[r] इति।

20 तस्य दानि दारकस्य धर्मरुचिनाम[s] कृतं। यदा महन्तो[t] संवृत्तो तदा भगवतः
शासने प्रव्रजितो[u]। प्रयुज्यन्तेन[v][w] घटन्तेन[x] व्यायमन्तेन[y] तिस्रो विद्या षडभिज्ञा बलवशी-

भावं साक्षात्कृतं। त्रिखुत्तो[a] दिवसस्य[b] भगवतः पादवन्दने[c] उपसंक्रमति। यत्तकमुप-[d]
संक्रमति तत्तकं भगवां चोदेति स्मारेति चिरस्य धर्मरुचि सुचिरस्य धर्मरुचि। सो
पि आह। एवमेतं[e] भगवं[f] एवमेतं सुगत। चिरस्य भगवं सुचिरस्य सुगत[g]। भिक्षु
संशयेन भगवन्तं पृच्छन्ति। त्रिखुत्तो दिवसस्य धर्मरुचिर्भगवन्तमुपसंक्रमति भगवांश्च[h]
तमेवमाह चिरस्य धर्मरुचि[i] सुचिरस्य धर्मरुचीति[j] भगवन्तमेवमाह एवमेतं 5
भगवं[k] एवमेतं सुगत[l] चिरस्य भगवं[m] सुचिरस्य सुगत[n] न च पुनर्भगवं वयमिमस्य[o]
भाषितस्य अर्थमाजानाम। तेषां भगवां[p] भिक्षूणां एतां प्रकृतिं[q] विस्तरेणारोचयति
दीपंकरमुपादाय। अहं च मेघो माणवो[r] नामेन आसि एषो च धर्मरुचि मेघदत्तो।
एवं भिक्षवो अमोघो बुद्धशब्दो यावद्दुःखक्षयाय[s] संवर्तति।

तेन समयेन स्थविरो[t] धर्मरुचि उपागमेसि शास्तारं। 10
पादौ जिनस्य वन्दति[u] आह पि सुचिरस्य धर्मरुचि ॥२३५॥
सुचिरस्य लोकनायक धर्मरुचि प्रतिभणाति[v] शास्तारं।
जानन्तं पृच्छति[w] जिनो किंकारणं ब्रूसि सुचिरस्य ॥२३६॥
सो पुनराह पुरे[x] अहं लवणजले तिमितिमिंगिलो आसि।
क्षुधादौर्बल्यपरिगतो[y] विपरिमुषं भोजनार्थाये ॥२३७॥ 15
तत्र[z] बहु प्राणनयुता प्रविशेन्सुः तद शरीरदेहं मे। Sen. 247
वाणिजकशतानि पंच प्रविशेन्सु[a] तथैव[b] यानेन ॥२३८॥
पात्रे[c] च प्रविशमाने अत्राणभयार्दिता व्यसनप्राप्ता।
सर्वे एकवाचमवचि[d] नमो दशबलस्य बुद्धस्य ॥२३९॥
बुद्धेति[e] श्रुत्व घोषं अश्रुतपूर्वमभूषिमहं प्रीतो। 20
हृष्टो उदग्रचित्तो त्वरितं संमीलयेसि[f][g] मुखं[h] ॥२४०॥

सुनेन्सु[a] प्राणनयुतानि[b] तिर्यग्योनिगता[c] वणिजशतान ।
घोषेण दशबलस्य व्युत्थितो[d] तदाहमपायेषु[e] ॥२४१॥
तेन कुशलेन भगवं[f] इदं मे आरोपितं मनुष्यत्वं[g] ।
सुचरितफलेन[h] तेन धर्मरुचीति[i] मम समाज्ञा[j] ॥२४२॥
5 तेनैवाहं[k] हेतुना प्रव्रजितो तव स्वयंभु[l] प्रावचने ।
नचिरस्य प्रव्रजित्वा अभूषि अरहां धुतक्लेशो ॥२४३॥
बहुकल्पकोटिनयुता संसारं[m] संसरित्वान अनन्तं ।
अनुस्मारेन्तो[n] सुगतं भणामि सुचिरस्य लोकहित ॥२४४॥
सुचिरस्य धर्मचक्षुर्विशोधितं धर्मसंशयं छिन्नं[o] ।
10 मोहतिमिरावनद्धं[p] उषितो स्मि चिरं अपायेषु[q] ॥२४५॥
तेन[r] कुशलेन[s] तिमिरं प्रहीनं रागद्वेषा[t] च ऊहता[u] ।
अशोषा[v] भवनेत्रिसरिता उच्छोषिता अयमिह जातिः ॥२४६॥
अस्य[w] पि तिमितिमिंगिलस्य बुद्धश्रवणं महत्फलं आसि ।
किं[x] पुन इदानि भगवं[y] इदं श्रुतं[z] नावहेदमृतं[a] ॥२४७॥
15 Sen. 248 तस्माद्विवर्जयित्वा नीवरणा[b] पंच चेतसावरणा ।
श्रोतव्यं बुद्धवचनं[c] दुल्लभसंज्ञामुपजनेत्वा[d][e] ॥२४८॥
कृच्छ्रो[f] मनुष्यलाभो विवर्जना[g] च असाररूपवनात्[h] ।
बुद्धान[i] च उत्पादो श्रद्धा च भवेय[j] च निर्वृतिः[k] ॥२४९॥

इति श्रीमहावस्तुअवदाने दीपंकरवस्तु समाप्तं ।

20 इतो महामौद्गल्यायन[l] भद्रकल्पातो अपरिमिते अप्रमेये असंख्येये कल्पे दीपंकरातो[m] अनन्तरं मङ्गलो नाम तथागतोऽर्हं सम्यक्सम्बुद्धो उदपासि । मङ्गलस्य[n] महामौद्गल्यायनं[o]

सम्यक्संबुद्धस्य वर्षकोटीशतसहस्रं मनुष्याणामायुःप्रमाणमभूषि। मङ्गलस्य महा-
[a]मौद्गल्यायन[b] सम्यक्संबुद्धस्य त्रयः श्रावकसन्निपाता अभून्सुः। प्रथमे श्रावकसन्नि[c]पाते
कोटीशतसहस्रमभूषि[d] सर्वेषामर्हतां[e] क्षीणाश्रवाणा[f]मुषित[g]व्रतानां[h] सम्यगाज्ञासुविमुक्त-
चित्तानां परिक्षीणभवसंयोजनानाम[i]नुप्राप्त[j]स्वकार्थानां। द्वितीयो श्रावकसन्निपातो
नवति कोटीयो[k] अभून्सुः[l] सर्वेषां अर्हतां क्षीणाश्रवाणां उषितव्रतानां[m] सम्यगाज्ञासुवि[n]मुक्त- 5
चित्तानां परिक्षीणभवसंयोजनानां अनुप्राप्तस्वकार्थानां। तृतीयो श्रावकसन्निपातो
अशीति कोटीयो अभुन्सु[o] सर्वेषामर्हतां क्षीणाश्रवाणामुषितव्रतानां सम्यगाज्ञासुविमुक्त-
[p]चित्तानां परिक्षीणभवसंयोजनानां अनुप्राप्तस्वकार्थानां। मङ्गलस्य खलु पुनर्महा-
[q]मौद्गल्यायन सम्यक्सम्बुद्धस्य सुदेवो च धर्मदेवो च नाम श्रावकयुगो अभूषि अग्रयुगो
च भद्रयुगो च। एको [r]अग्रो प्रज्ञाये अपरो अग्रो ऋद्धीये। [s]मङ्गलस्य खलु पुनर्महा- 10
[t]मौद्गल्यायन [u]सम्यक्संबुद्धस्य शीवाली च नाम [v]भिक्षुणी अशोका च अग्रश्रा[w]विका
अभून्सुः। एका [x]अग्रा प्रज्ञाये अपरा ऋद्धीये। [y]मङ्गलस्य खलु महा[z]मौद्गल्यायन[a]
सम्यक्संबुद्धस्य [b]पालितो नाम भिक्षु उपस्थायको अभूषि। मङ्गलस्य खलु पुनर्महा- Sen. 249
[c]मौद्गल्यायन सम्यक्संबुद्धस्य नागवृक्षो [d]अभूषि बोधि। मङ्गलस्य [e]खलु महा[f]मौद्गल्या[g]यन
सम्यक्संबुद्धस्य उत्तरं नाम नगरं अभूषि। द्वादश योजनानि आयामेन पुरस्ति[h]मेन 15
पश्चिमेन च सप्त योजनानि [i]विस्तारेण [j]दक्षिणेन उत्तरेण च। सप्तहि प्राकारेहि
परि[k]क्षिप्तं सौवर्णेहि [l]सौवर्णच्छदनेहि। सप्तहि दीर्घिकाहि परिक्षिप्तं [m]अभूषि चित्राहि
दर्शनीयाहि सप्तानां [n]वर्णानां सुवर्णस्य रूप्यस्य मुक्तायाः वैडूर्यस्य स्फटिकस्य मुसा-
गल्वस्य लोहितिकाया। तासां खलु पुनर्महा[o]मौद्गल्यायन दीर्घि[p]कानां द्विन्नां वर्णानां
सोपाना अभून्सुः सुवर्णस्य [q]रूप्यस्य। चतूर्णां वर्णानां सोपानफलका [r]अभून्सु सुवर्णस्य 20
रूप्यस्य च मुक्ताया [s]वै[t]डूर्यस्य च। [u]तायो दीर्घिकायो छन्नायो अभून्सुः [v]उत्पलपदुम-
कुमुदपुण्डरीकनलिनीसौग[w]न्धिकेहि। [x]तायो दीर्घिकायो इमे[y]हि एवंरूपेहि वृक्षेहि

प्रच्छन्नायो[a] अभुन्सुः। सय्यथीदं अम्रजम्बुपनसलकुचभव्यपालेवत[b]प्रच्छन्नायो[c]। तासां खलु पुनर्दीर्घिकानां[d] तीरेषु इमानि एवंरूपाणि स्थलजजलजानि माल्यानि अभुन्सु[e]। सय्यथीदं अतिमुक्तकचम्पकवार्षिकावातुष्कारइन्दीवरदमनकदेवोपसंहिता[f]। उत्तरं खलु पुनर्महामौद्गल्यायन[g] नगरं सप्तहि तालपंक्तिहि[h] परिक्षिप्तमभूषि। विस्तरेण दीपवती
5 राजधानी[i] यथा वर्णयितव्यं। मङ्गलस्य[j] खलु पुनर्महामौद्गल्यायन[k] सम्यक्सम्बुद्धस्य[l] सुन्दरो नाम क्षत्रियो पिता अभूषि[m] राजा चक्रवर्ती[n][o]। मङ्गलस्य खलु पुनर्महामौद्गल्यायन[p][q] सम्यक्सम्बुद्धस्य शिरी[r] नाम देवी[s] माता अभूषि। तदाहं[t] महामौद्गल्यायन[u] अतुलो[v] नाम
Sen. 250 नागराजा कृतपुण्यो महेशाख्यो उत्सदकुशलसंचयो[w]। ततो मया सो भगवां मंगलो[x] सश्रावकसंघो[y]......सत्कृत्वा गुरुकृत्वा मानयित्वा पूजयित्वा दुष्ययुगमाच्छादं दत्त्वा
10 बोधाय अनुप्रणिहितं[z]। तेनाप्यहं व्याकृतो भविष्यसि[a] त्वमनागताध्वाने[b] अपरिमिते असंख्येये कल्पे शाक्यमुनिर्नाम तथागतोऽर्हं सम्यक्संबुद्धो।

दीपंकरस्य ओत्तरेण मङ्गलो[c] नाम नायको।
तमं लोके निहत्वान धर्मोल्कामभिज्वालयेत् ॥१॥
अतुला[d] आसि प्रभा तस्य जिनेहि अन्येहि उत्तरा
15 कोटिसूर्यप्रभां हत्वा[e] सहस्रारैः विरोचते ॥२॥
सो च बुद्धो[f] प्रकाशेति[g] चत्वारि सत्या उत्तमां।
ते तं सत्यरसं पीत्वा विनोदेन्सु[h] महातमं[i] ॥३॥
बोधिं बुद्ध्वा[j] अतुलां देवा प्रथमे धर्मदेशने।
कोटिशतसहस्राणां प्रथमाभिसमयो अभूत् ॥४॥
20 यदा [सुनन्दश्चक्रवर्ती सम्बुद्धमुपसङ्क्रमीत्]।
तदा आहनि संबुद्धो धर्मभेरीं वरमुत्तमां ॥५॥

[a]पुनरपि देवसमये यदा सत्यां प्रकाशयेत् ।
द्वितीये नवति कोटी द्वितीयाभिसमयो अभूत् ॥६॥
यदा सुनन्दो चक्रवर्ती बुद्ध[b]धर्ममुपागमि ।
[c]तदा आहनि संबुद्धो धर्म[d]भेरीं वरमुत्तमां ॥७॥
सुनन्दानुचरा [e]जनता न[f]वति आसि कोटियो । 5
सर्वे ते निर[g]वशेषा अभूद्बुद्धस्य श्राव[h]का ॥८॥
पुनरपि देवसमये यदा सत्यां प्रकाशयेत् । Sen. 251
अशीतिं तृतीये [i]कोटी तृ[j]तीयाभिसमयो अभूत् ॥९॥
[k]यदा उत्तरो गृहपति बुद्धदर्शन[l]मुपागमि ।
तदा आहनि संबुद्धो धर्मभेरीं वरमुत्तमां ॥१०॥ 10
उत्तरानुचरा [m]जनता अशीतिं आसि कोटियो ।
सर्वे ते निर[n]वशेषा अभूद्बुद्धस्य श्रावकाः ॥११॥
सन्निपा[o]ताः त्रयो आसि मङ्गलस्य महर्षिणो ।
क्षीणाश्रवाणां विरजानां शान्त[p]चित्तानुतापिनां ॥१२॥
कोटीशतसहस्राणां प्रथ[q]मो आसि समागमो । 15
द्वि[r]तीयो न[s]वतिं कोटी अशी[t]तिं तृती[u]यो अभूत् ॥१३॥
[v]अहं तेन समयेन नागराजा मह[w]र्द्धिको ।
अतुलो नाम नामेन उत्स[x]दकुशलसंचयो ॥१४॥
ना[y]गानां दिव्येहि तूर्येहि मङ्गलस्य महर्षिणो ।
अ[z]र्चये दु[a]ष्याणि दत्वान शरणं तमुपागमि ॥१५॥ 20
सो मे [b]बुद्धो वियाकार्षीत् मङ्गलो लोकनायको ।
अप[c]रिमेये इतो कल्पे बुद्धो लोके भविष्यसि ।

शाक्यानां नगरे[a] रम्ये स्फीते कपिलसाह्वये ॥१६॥
तस्य ते जननी माता माया नामेन[b] भेष्यति ।
पिता शुद्धोदनो नाम तव भविष्यति[c] गौतमः ॥१७॥
[d]कोलितो उपतिष्यो च अग्रा भेष्यन्ति श्रावकाः ।
5 [e]क्षेमा उत्पलवर्णा च अग्रा भेष्यन्ति श्राविका ॥१८॥
आनन्दो नाम नामेन उपस्थायको[f] भविष्यति ।
Sen. 252 [g]बोधि भविष्यति तुह्यं अश्वत्थो वरपादपः ॥१९॥
तस्य व्याकरणं श्रुत्वा मङ्गलस्य महर्षिणः ।
[h]विरियं प्रग्रहेत्वान दृढं कृत्वान[i] मानसं ।
10 [j]चरन्तो बोधिचर्याणि[k] नाहं कंचित्परित्यजे ॥२०॥
[l]उत्तरं नाम नगरं[m][n] सुन्दरो नाम क्षत्रियो ।
[o]शिरिका नाम जनिका मङ्गलस्य महर्षिणो[p] ॥२१॥
सुदेवो धर्मदेवो च अभुन्सुः[q] अग्रश्रावकाः ।
[r]शीवाली च अशोका च अभुन्सु अग्रश्राविका ॥२२॥
15 पालितो नाम उपस्थाको[s] मंगलस्य महर्षिणो ।
[t]बोधि तस्य[u] नागवृक्षो बोधिवृक्षं सुपुष्पितं[v] ॥२३॥
[w]कोटीशतसहस्राणां संघो[x] आसि[y] महर्षिणो[z] ।
तिष्ठमानो महावीरो[a] तारेसि[b] जनतां[c] बहुं ॥२४॥
[d]तारयि बहुजनतां वैस्तारिकं कृत्व[e] शासनं ।
20 ज्वलितो[f] अग्निस्कन्धो[g] वा सुरियो वा समुद्गतो ॥२५॥
[h]यथा सागरस्य ऊर्मियो[i] न शकियं[j] गणयितुं ।
[k]तथैव भगवतो पुत्रा न शकियं[l] गणयितुं ॥२६॥

सो च बुद्धो महाभागो[a] सद्धर्मो च गणोत्तमो ।
[b]सर्वे समनन्तरातीता[c] अनुरिक्ता एव संस्काराः ॥२७॥

इति श्रीमहावस्तुअवदाने[d][e] मंगलस्य वस्तुं समाप्तं ॥

अथ छत्रवस्तुके आदि । अनुहिमवन्ते कुण्डला[f] नाम यक्षिणी प्रतिवसति । Sen. 253
सा दानि समं[g] समं च पुत्रशता[h] पंच[i] प्रजायति । पुत्रसहस्रं[j][k] प्रजाता सा कालं करोति । 5
[l]ते पि वैशालिं ओजोहारका प्रेषिता । वैशालिं गत्वा मनुष्याणामोजं हरन्ति[m]।
रोगजाता[n] आर्द्धा मण्डलको च अधिवासो च । मण्डलको रोगजातो[o] यहिं कुले निपतति[p]
न किंचि[q] शेषेति सर्वं हरति[r] । अधिवासो नाम रोगजातो प्रदेशं हरति । तदानि
[s]वैशालिका अधिवासेन रोगजातेन स्पृष्टा[t] मरन्ति । ते देवदेवां नमस्यन्ति । तेषामे-
तदभूषि[u] । कस्मिन्नु[v] खल्वागते वैशालकानामाबाधो प्रतिप्रशाम्येया[w] । तेहि दानि 10
काश्यपस्य पूरणस्य प्रेषितं[x] । आगच्छाहि[y] वैशालकानाममनुष्यव्याधि[z][a] उत्पन्नो त्वयि
आगते प्रतिप्रश्रब्धो[b] भविष्यति । काश्यपपूरणो[c] वैशालिमागतो नच तं व्याधिं प्रति-[d]
प्रस्रभ्यति । तेषामेतदभूषि । आगतो[e] काश्यपो नैव च वैशालकानाममनुष्यव्याधिः
[f]प्रतिप्रस्रभ्यति । तेहि दानि मस्करिस्य[g] गोशालिपुत्रस्य प्रेषितं । सो पि आगतो न च
वैशालिकानाममनुष्यव्याधिः प्रतिप्रस्रभ्यति[h] । तेहि[i] दानि ककुदस्य कात्यायनस्य प्रेषितं । 15
सो पि आगतो[j] न च वैशालिकानाममनुष्यव्याधिः प्रतिप्रस्रभ्यति[k] । तेहि दानि अजितस्य[l]
केशकम्वलस्य प्रेषितं[m] । सो पि आगतो न च वैशालकानाममनुष्यव्याधि[n] प्रतिप्रस्रभ्यति ।
तेहि दानि संजयिस्य[o] वैरट्टिपुत्रस्य[p] प्रेषितं । सो[q] पि आगतो न च वैशालकानाममनुष्य-[r]
व्याधि प्रतिप्रस्रभ्यति[s] । तेहि[t] दानि निर्ग्रन्थस्य[u] ज्ञातिपुत्रस्य प्रेषितं[v] । सो पि
आगतो न च वैशालकानाममनुष्यव्याधिः प्रतिप्रस्रभ्यति[w] । तेषां वैशालकानां 20
[x]ज्ञातिसालोहिता कालगता देवेहि उपपन्ना[y] । तेषामन्यतरा देवता वैशाल-

Sen. 254 कानामारोचयति । ये एते [a]तुम्येहि [b]आनीता अशास्तारो [c]अशास्तारवादिनो [d]न एते शक्ता वैशालकानाममनुष्यव्याधिं [e]प्रतिप्रस्त्रंभयितुं । एष बुद्धो भगवां असंख्येहि [f]कल्पेहि समुदागतो अर्हंनूसम्यक्संबुद्धो अपरिशेषज्ञानदर्शनो महर्द्धिको महानुभावो सर्वज्ञो [g]सर्वदर्शावी यत्र [h]ग्रा[i]मक्षेत्रसीमायां प्रतिवसति [j]सर्वं तत्र [k]ईतिकलहं कलकलं उपद्रवा

5 उपसर्गा [l]प्रशाम्यन्ति । [m]तमानेथ । तेन [n]आगतेन वैशालकानममनुष्यव्याधिः [o]प्रतिप्रस्रभ्यते इति ।

राजगृहे मन्दिरपुरे विहरति वरकम[p]लग[q]र्भसुकुमारो ।
[r]सर्वा कलिकलहानि प्रशमयितानि जितक्लेशेन ॥१॥
सोपद्रवं काञ्चननिभो यं प्राप्तो [s]ग्रामनिगमन[t]गरं वा ।

10 [u]शामयति तत्र ईतयो रजमिव [v]बलवां स[w]लिलवृष्टिः ॥२॥
[x]पाण्डरवर्णं काञ्चननिभं दि[y]नकरपरिपूर्णचारुमुखं ।
[z]वरसुरभिशी[a]लगन्धं [b]आनेथ शाम्यति तु व्याधि ॥३॥

वैशाल्यां [c]तोमरो नाम लेच्छविमह[d]त्तरको [e]महापक्षो महापरिवारो पण्डितो च । सो गणेन [f]अध्येष्य प्रेषितो । गच्छ राजगृहं तहिं बुद्धो भगवां प्रतिवसति । श्रेणियस्य

15 [g]बिम्बिसारस्य याचितवा[h]सो प्रतिवसति । [i]तं गत्वा वैशालकानां लिच्छवीनां वचनेन वन्दनां वदेसि सपरिवारस्य अल्पाबाधतां च अल्पातंकतां च [j]सुखस्पर्शविहारतां च [k]पृच्छेसि [l]एवं च वदेसि । [m]वैशालकानां भगवं [n]लिच्छवीनाममनुष्यव्या[o]धि उत्पन्नो

Sen. 255 बहूनि प्राणसहस्राणि अनयव्यसनमापद्यन्ति । [p]साधु भगवा[q]नर्थकामो [r]हितैषी वैशालि[s]मागच्छेया अनुकम्पामुपादाय । अथ [t]तोमरो [u]लेच्छविगणस्य प्रतिश्रुत्वा [v]यथानुरूपेण

20 परिवारेण [w]सार्धं भद्राणि यानानि आरुहित्वा वैशालितो नगरातो निर्गम्य येन राजगृहं नगरं [x]तेन प्रयासि । अथ खलु तोमरो लेच्छवि [y]राजगृहनगरं गत्वा प्रविशित्वा

राजगृह[a]नगरं येन वेणुवनं कलन्दक[b]निवापं तेन प्रक्रमि भगवन्तं दर्शनाय उपसंक्रमणाय पर्युपासनाय। तेन खलु पुनः समयेन भगवान्तदहो [c]पोषधे पंचदश्यां [d]पूर्णायां पूर्णमास्यां पंचानां भिक्षुशतानां अन्याये च जनताये अनेकसहस्राये परिषाये धर्मं देशयति आदौ कल्याणं [e]मध्ये कल्याणं पर्यवसाने कल्याणं [f]स्वर्थं सुव्यञ्जनं [g]केवलपरिपूर्णं परिशुद्धं पर्यवदातं [h]ब्रह्मचर्यं प्रकाशयति। अथ तोमरो लेच्छवी [i]यावत्तका यानस्य भूमिः तावद्यानेन गत्वा यानादवतीर्य [j]पद्भ्यामेव येन भगवांस्तेनोपसंक्रमि। सो दानि [k]महेशाख्यां परिषां सन्निपतितां न [l]शक्नोति प्रसह्य भगवन्तमुपसंक्रमितुं। सो दानि एकांस[m]मुत्तरासंगं कृत्वा येन [n]भगवांस्तेनांजलिं प्रणामेत्वा भगवन्तं गाथाये अध्यभाषि।

उपो[o]षधे पंचदशीविशुद्धये
उपासितुं ते ऋषयो समागता।
[p]शक्रो च देवो त्रिदशान इन्द्रो
पुरस्कृतो [q]तेषु असह्यसाहि ॥४॥

विरोच[r]मानो भाषसि उत्तमं पदं
धर्मेण [s]तर्पेसि [t]बहुं इमां प्रजां।
[u]महां व मेघः सलिलेन मेदिनीं
ते तुह्य श्रुत्वा मधुरामिमां गिरां ॥५॥

अनेलि[v]कां धारयतो महा[w]मुने
नम[x]स्कृत्वा अंजलिं वन्दमाना।
शरणन्ते [y]गच्छाम असह्यसाहि (Sen. 256)
[z]तेषां सुलब्धं च सुआगतं च ॥६॥

स [a]तोमरा[b]णामहमन्तिके भवं
ये ते प्रसन्ना शरणं उपेन्ति।

[a]अथ अप्रमत्ता सुगतस्य शासने
काहिन्ति जातीमरणस्य अन्तं ।।७।।

गाथापर्यवसाने महता जनका[b]येन अन्तरो दिन्नो । अथ खलु तो[c]मरो लेच्छवी येन भ[d]गवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा भगवन्तमेतदवोचत् ।
5 [e]वैशालिका भ[f]गवं लेच्छवियो समृ[g]द्धवाला अभ्यन्तरवैशालका च बाहिरकवैशालका च [h]भगवतः पादा शिरसा वन्देन्ति सश्रावकसंघस्य सुखं च स्पर्शविहारतां च पृच्छेन्ति एवं च वदेन्ति । वैशाल्यां भ[i]गवन्नमनुष्यव्याधि उत्पन्नः बहूनि प्राणिसहस्राणि [j]अनयव्यसनमापद्यन्ति भ[k]गवां च अनुकम्पको कारु[l]णिको सदेवक[m]स्य । साधु भगवां वैशालिमागच्छेय वैशालिकानामनुकम्पामुपादाय । भगवानाह । तथागतो तोमर राज्ञो
10 श्रेणियस्य बि[n]म्बिसारस्य याचितवासो वसति गच्छमनु[o]जानापेहि । अथ खलु तोमरो [p]लच्छवि [q]भगवतो पादौ शिरसा वन्दित्वा भगव[r]न्तं च त्रिष्खुत्तं प्रदक्षिणीकृत्वा भिक्षुसंघं च येन राजगृहं तेन प्र[s]क्रामि । अथ खलु तोमरो लेच्छवि येन राजा श्रेणियो बि[t]म्बिसारस्तेनोपसंक्रमित्वा राजानं श्रेणियं बिम्बिसारं साधु च सुष्टु च प्रतिसंमोदेत्वा एतदुवाच । वैशालीयं महाराज अमनुष्यव्याधि उत्पन्नो बहूनि प्राणिसहस्राणि
15 [u]अनयव्यसनमापद्यन्ति । [v]तहिं षच्छा[w]स्तारो संमता आनीता काश्यपो [x]च पूरणो [y]मस्करी
Sen. 257 च [z]गोशाली अजितो च केशक[a]म्बली ककुदो च कात्यायनो संजयी च वेरट्टिकपुत्रो [b]निर्ग्रन्थो च ज्ञातिपुत्रो । एतेहि आगतेहि वैशालकानाममनुष्यव्याधि नोपशा[c]म्यति । ततो महाराज ले[d]च्छवानां देवताहि आरोचितं । एष बुद्धो भगवानसंख्ये[e]ये धर्मा[f]नुभावेन हि स[g]मुदागतो सदेवकस्य [h]लोकस्य [i]लेनो त्राणो शरणो परायणो [j]देवातिदेवो शास्ता
20 देवमनुष्याणां नागानामसुराणां यक्षाणां राक्षसानां पिशाचानां कुम्भा[ष्मा]ण्डा[k]नां । सो यं ग्रा[l]मक्षेत्रसीममाक्रमति तत्र सर्वे [m]ईतिकलिकालकर्णी प्रशाम्यन्ति बुद्धानुभावेन

धर्मानुभावेन संघानुभावेन। [a]तमानेथ तेन आगतेन [b]वैशाल्यानाममनुष्यव्याधिः प्रशाम्यतीति। साधु महाराज भगवन्तमनुजानाहि वैशालिं गमनाये अनुकम्पामुपादाय। [c]एवमुक्तो राजा श्रेणियो [d]बिम्बिसारो तोमरं लेच्छविमेतदुवाच। [e]सचे [f]वासिष्ठ वैशालका लेच्छवयो भगवतो राजगृहातो वैशालिं गच्छन्तस्य एवं प्रत्युद्गमनं करोन्ति यावत्स्वकं विजितं [g]य[h]थाहमनुयानं करोमि यावत्स्वकं विजितं एत्स्ये हं भगवन्तमनु-[i] जानये राजगृहातो वैशालिं गमनाय। अथ खलु तोमरो लेच्छवी राज्ञो [j]श्रेणियस्य [k]बिम्बिसारस्य प्रतिश्रुत्वा वैशालिं गणस्य [l]दूतां प्रेषयसि। एवं [m]वासि[n]ष्ठाहो राजा श्रेणियो बिम्बिसारो जल्पति। अथ खलु ते दूता [o]तोमरस्य लेच्छविस्य प्रतिश्रुत्वा वैशालिं गत्वा लेच्छविगणस्य आरोचेसि। एवं [p]वासिष्ठाहो राजा [q]श्रेणिको बिम्बिसारो तोमरस्य [r]लेच्छविस्य जल्पति। [s]सचे वैशालका लेच्छवयो भगवतो राजगृहातो वैशालिं गच्छन्तस्य एवं प्रत्युद्गमनं [t]करोन्ति यावत्स्वकं विजितं यथा अहमनुयानं करोमि यावत्स्वकं [u]विजितं एत्स्ये हं भगवन्तमनुजा[v]नेयं राजगृहातो वैशालिं गमनाय। [w]एवमुक्ते वैशालेयका लेच्छवयः तां [x]दूतां……। [y]एतद्वक्तव्यो [z]वासिष्ठाहो राजा श्रेणियो बिम्बिसारो लेच्छविगणस्य वचनेन। [a]करिष्यन्ति महाराज [b]वैशालका [c]लेच्छवयो भगवतः [Sen. 258] प्रत्युद्गमनं यावल्लेच्छवीनां विजितं। अथ खलु ते दूता लेच्छविगणस्य प्रतिश्रुत्वा राजगृहं गत्वा तोमरस्य [d]आरोचेन्सुः। [e]अथ खलु तोमरो लेच्छविः दूतानां वचनं प्रतिश्रुत्वा येन राजा श्रेणिको बिम्बिसारो [f]तेनुपसंक्रमित्वा राजानं श्रेणियं [g]बिम्बिसार-मेतदुवाच। करिष्यन्ति महाराज वैशालका लेच्छवयो [h]भगवतः [i]प्रत्युद्गमनं। साधु भगवन्तमनुजानाहि वैशालिं गमनाय अनुकम्पामुपादाय। भगवां दानि राज्ञा श्रेणियेन [j]बिम्बिसारेण अनुज्ञातो वैशालिं [k]गमनाय अमात्या च आणत्ता [l]याव च [m]राजगृहं याव च गंगायाः तीर्थं मार्गं प्रतिजागृथ अष्टपद[n]सममविषमं पाणितलजातं विततवितानं चित्र-दुष्यपरिक्षिप्तं ओसक्तपट्टदामकलापं धूपितधूपनं [o]सिक्तसंमृष्टं मुक्तपुष्पावकी[p]र्णं।

नावासंक्रमं [a]बन्धापेथ येन भगवां सश्रावकसंघो गंगायां [b]तरिष्यति वैशालिं गमनाय। [c]अर्धयोजनिके च अन्तरे मण्डपसंविधानं का[रापेथ अन्नपान] [d]संविधानं कारापेथ [e]शय्यासनसंविधानं च भगवतः सश्रावकसंघस्य [f]सर्वं सुखोपधानं यथा [g]भगवां सश्रावकसंघो राजगृहातो सुखं वैशालिं गच्छेय भिक्षुसंघश्च।

मनसा [h]देवानां वचसा पार्थिवानां।
[i]नचिरेणाढ्यानां कर्मणा दरिद्राणामिति ॥८॥

राज्ञा च आणत्तं अमात्येहि च [j]सर्वं प्रतिजागृतं यथा आणत्तं।

[k]भगवां संप्रस्थितो सार्धं भिक्षुसंघेन। राजा श्रेणियो [l]बिम्बिसारो [m]सयुग्यबलवाहनो [n]सदेवीकुमारामात्यपरिजनो [o]राजार्हेहि पंचहि च्छत्रशतेहि धार्यमाणेहि ओसक्तपट्टदामकलापेहि [p]सध्वजपताकेहि महता राजानुभावेन महता राजऋद्धीये महताये विभूषाये भगवन्तं वैशालिं गच्छन्तं [q]समनुयाति [r]अर्धयोजनिकेनान्तरावासेन [s]यावत्स्वकं [t]विषयं गंगायाः तीरं। [u]अश्रोषुः वैशालका [v]लेच्छविका एदृशाये विधीये राजा श्रेणियो बिम्बिसारो भगवतो अनुयानं करोति राजगृहातो वैशालिमागच्छन्तस्येति। श्रुत्वा च पुनः याव च [w]वैशाली याव च गङ्गातीर्थं वैशालकानां लेच्छवीनां विजितमत्रान्तरे मार्गं [x]प्रतिजाग्रंसु [y]अष्ट[z]पदसमम[a]विषमं पाणितलजातं [b]सिक्त[c]संमृष्टं मुक्तपुष्पावकीर्णं विततवितानं चित्रदुष्यपरिक्षिप्तं ओसक्तपट्टदामकलापं [d]धूपितधूपनं। [e]देशदेशेहि [f]च नटनर्तनऋल्लमल्लपाणिस्वर्या [g]स्थापयेन्सु। अर्धयोजनिकेन च अन्तरेण मण्डपसंविधानं च [h]कारयेन्सु [i]शय्यासनसंविधानं च पानीयसंविधानं च भक्तसंविधानं च भगवतः सश्रावकसंघस्य। [j]अभ्यन्तरवैशालीतो चतुरशीति रथसहस्राणि योजापयित्वा द्वे चतुरशीति रथसहस्राणि योजापयित्वा [k]सवैजयन्तिकानि सनन्दिघोषाणि सपुष्पमालानि सच्छत्रध्वजपताकानि प्रभूतं च गन्धमाल्यमादाय स्वकस्वकानि भद्राणि यानान्यभिरुहित्वा महता राजानु[l]भावेन महता [m]राज[n]ऋद्धीये महतो जनकायस्य [o]हकारहिक्कारभेरीमृदंगमरुपणवशांखसन्नि-

नादेन वैशलीतो नगरातो निर्याता[a] भगवन्तं प्रत्युद्गच्छेन्सु[b] यावद्गङ्गातीर्थं[c] भगवतः[d] पूजार्थं[e]। तेषां[f] पि तं एवं संविधानरूपं अभूषि। सन्त्यत्र लेच्छवयः[g] नीलाश्वा नीलरथा नीलरश्मिप्रतोदा[h] नीलयष्टी[i] नीलवस्त्रा नीलालंकारा[j] नीलउष्णीषा नीलच्छत्रा नीलखड्गमणिपादुकवालव्यंजना[k]। तत्रेदमिति उच्यते।

> [l]नीलाश्वा नीलरथा नीला रश्मिप्रतोदमुष्णीषा[m]। 5
>
> [n]नीला च पंच ककुदा नीला वस्त्रा अलंकारा ॥९॥

सन्त्यत्र लेच्छवयः[o] पीताश्वाः पीतरथा पीतरश्मिप्रतोदयष्टी[p] पीतवस्त्राः पीतालं-कारा पीतोष्णीषा पीतच्छत्रा पीतखड्ग[q]मणिपादुका। तत्रेदमुच्यते।

> पीताश्वा[r] पीतरथा पीता रश्मिप्रतोदमुष्णीषा[s][t]। Sen. 260
>
> [u]पीता च पंच ककुदा पीता वस्त्रा[v][w] अलंकारा[x] ॥१०॥ 10

सन्त्यत्र लेच्छवयो मंजिष्ठाश्वा[y] मंजिष्ठरथा मंजिष्ठप्रतोदयष्टी[z][a] मंजिष्ठवस्त्रा मंजिष्ठअलंकारा[b][c] मंजिष्ठउष्णीषा[d] मंजिष्ठच्छत्राः मंजिष्ठमणिपादुकवालव्यंजनाः। तत्रेदमुच्यते।

> मंजिष्ठा[e] अश्वरथा मञ्जिष्ठ रश्मिप्रतोदयष्टी च।
>
> मंजिष्ठ पंच ककुदा मंजिष्ठ[f] वस्त्रअलंकाराः ॥११॥ 15

सन्त्यत्र लेच्छवयो[g] लोहिताश्वा लोहितरथा लोहितप्रतोदयष्टी[h] लोहितवस्त्रा लोहितालंकारा[i][j] लोहितउष्णीषा लोहितच्छत्राः लोहितखड्गमणिपादुकवालव्यंजनाः[k]। तत्रेदमुच्यते।

> [l]लोहिता अश्वा रथा च लोहित रश्मिप्रतोदयष्टी[m][n] च।
>
> [o]लोहित च पंच ककुदा[p] लोहित वस्त्रा[q] अलंकाराः[r] ॥१२॥ 20

सन्त्यत्र[a] लेच्छवयो श्वेताश्वा श्वेतरथा श्वेतप्रतोदयष्टी[b] च श्वेतवस्त्रा[c]: श्वेतालं-
कारा: श्वेतोष्णीषा: श्वेतच्छत्रा[d]: श्वेतखड्गा: श्वेतमणिपादुकवालव्यंजना[e]:।
तत्रेदमुच्यते।

श्वेताश्वा[f] श्वेत रथा श्वेत[g] रश्मिप्रतोदयष्टी[h][i] च।
श्वेता[j] च पंच ककुदा श्वेता वस्त्रा अलंकारा[k]:॥१३॥

सन्त्यत्र लेच्छवयो[l] हरिताश्वा हरितरथा: हरितरश्मिप्रतोदयष्टी च हरितवस्त्रा
Sen. 261
हरितालंकारा हरितोष्णीषा हरितच्छत्रा हरितखड्गा हरितमणिपादुकवालव्यंजना[m]:।
तत्रेदमुच्यते।

हरिताश्वा हरित रथा हरिता[n] रश्मिप्रतोदयष्टी[o][p] च।
हरिता च पंच ककुदा हरिता[q] वस्त्रा अलंकारा[r]:॥१४॥

सन्त्यत्र लेच्छवयो व्यायुक्ताश्वा व्यायुक्तरथा व्यायुक्तरश्मिप्रतोदयष्टी[s] व्यायुक्त-
वस्त्रा व्यायुक्तालंकारा व्यायुक्तउष्णीषा व्यायुक्तच्छत्रा व्यायुक्तखड्गा व्यायुक्तमणि-
पादुकवालव्यंजना[t]:। तत्रेदमुच्यते।

व्यायुक्ता[u] अश्वरथा व्यायुक्त रश्मिप्रतोदयष्टी[v][w] च।
व्यायुक्त पंच ककुदा व्यायुक्त वस्त्रअलंकारा[x][y]:॥१५॥

सन्त्यत्र लेच्छवयो सुवर्णच्छत्रेहि[z] कुंजरेहि नानालंकारभूषितेहि। सन्त्यत्र
लेच्छवयो सुवर्णशिविकाहि[a] सर्वरतनभूषिताहि। सन्त्यत्र लेच्छवयो सुवर्णमयेहि[b]
रथेहि सवैजयन्तेहि सनन्दिघोषेहि सखुरप्रवाशीहि[c] उच्छ्रितच्छत्रध्वजपताकेहि। एवं-
रूपेण[d] अनुभावेन एवंरूपाये विधिये[e] एवंरूपेण समुदयेन एवंरूपाये राजऋद्धीये एवंरूपाये
समृद्धीये एवंरूपाये[f] संवृत्ताये एद्दशाये विभूषाये वैशालका लेच्छवयो द्वे चतुरशीतिहि
यानसहस्रेहि[g] गोशृङ्गी[h] च आम्रपालिका[i] च तद्यथा सो पि महाजनकायो[j] भगवन्तं
प्रत्युद्गता[k] यावद्गङ्गाया तीर्थं[l]।

भगवां गंगाये पारिमे[a] कूले राज्ञो श्रेणियस्य बिम्बिसारस्य[b] मागधकानां ब्राह्मणकानां धर्मया कथया[c] संदर्शयित्वा[d] समुत्तेजयित्वा[e] संप्रहर्षयित्वा मागधकानां[f] ब्राह्मणकानां चतूरशीति सहस्राणि धर्माभिसमये प्रतिष्ठापेत्वा येन वैशालका लेच्छवयो तेन विलोकेत्वा भिक्षूणां आमन्त्रेति[g] । भिक्षवो न दृष्टपूर्वा देवा[h] त्रायस्त्रिशाः सुदर्शनातो नगरातो उद्यानभूमिमभिनिष्क्रमन्ता[i] । ते एतरहि[j] वैशालका लेच्छवयो[k] पश्यथ । तत्कस्य हेतोः । तादृशाये[l] व भिक्षवो ऋद्धिये[m] देवा त्रायस्त्रिशा सुदर्शनातो नगरातो उद्यानभूमिमभिनिष्क्रमन्ति ।

Sen. 262

स्फीतानि राज्यानि प्रशाम्यमाना[n]
सम्यक् राज्यानि करोन्ति ज्ञातयो ।
तथा इमे लेच्छविमध्ये[o][p] सन्तो
देवेहि शास्ता उपमामकासि ॥१६॥

त्रायस्त्रिशा[q] ये[r] हि[s] न दृष्टपूर्वा
उद्यानभूमिं[t] अभिनिष्क्रमन्ता ।
एतादृशी समिति अभूषि तेषां
यथा[u] इयं समृद्धि लेच्छवीनां ॥१७॥

सुवर्णच्छत्रेहि च कुंजरेहि[v]
शिविकाहि[w] सौवर्णमयीहि चान्ये ।
रथेहि सौवर्णमयेहि चान्ये
प्रत्युद्गमं[x] लेच्छविनो करोन्ति ॥१८॥

सर्वे समेत्वा सह ज्ञातिबन्धवो[y]
दहरा च मध्या च महल्लका च ।
अलंकृता[z] लक्तकरक्तवस्त्रा
प्रत्युद्गता ते च विचित्रचारी ॥१९॥

तहिं[a] दानि गंगायां राज्ञो श्रेणियस्य बिम्बिसारस्य[b] नावासंक्रमं[c] अभ्यन्तर-
Sen. 263 वैशालकानां[d] नावासंक्रमं बाहिरवैशालकानां[e] नावासंक्रमं गांगेयेहि नागेहि कम्बलाश्वतरेहि
नावासंक्रमो कृतो। भगवानस्मदीयेन[f] उत्तरिष्यतीति।

शुकेन गोश्शृंगीये[g] वचनेन भगवां[h] सश्रावकसंघो[i] शुवेतनाय भक्तेन उपनिमन्त्रितो
5 तस्य च भगवता तूष्णीभावेनाधिवासितं[j]। तेन शुकेन भगवतस्तूष्णीभावेनाधिवासना[k]
बुद्धानुभावेन विज्ञाता। सो[l] भगवतः पादा[m] शिरसा वन्दित्वा भगवन्तं[n] भिक्षुसंघं[o] च
प्रदक्षिणीकृत्वा प्रत्यागतो[p]। येन गोश्शृंगी[q] भगवती[r] तेनोपसंक्रमित्वा आह। निमन्त्रितो
सो भगवां तथागतोऽर्हं[s] सम्यक्संबुद्धो सश्रावकसंघो[t] शुवेतनाये भक्तेन त्वद्वचनेन[u]
अधिवासितं तेन भगवता तूष्णीभावेन।

10 भगवां नावासंक्रमे[v] आरूढ़ा[w]। राजा[x] श्रेणियो बिम्बिसारो स्वके[y] नावासंक्रमे
भगवन्तं पश्यति। अभ्यन्तरवैशालका[z] च स्वके नावासंक्रमे भगवन्तं पश्यन्ति
सश्रावकसंघं[a]। बाहिरवैशालका स्वके नावासंक्रमे भगवन्तं पश्यन्ति सश्रावकसंघं[b]।
कम्बलाश्वतरा पि गांगेयमहानागा स्वके नावासंक्रमे भगवन्तं पश्यन्ति सश्रावकसंघं
तरमाणं। तेहि कम्बलाश्वतरेहि[c] गांगयेकेहि राज्ञो[d] श्रेणियस्य बिम्बिसारस्य[e] पंचच्छत्र-
15 शतानि दृष्ट्वा वैशालकानां पि पंचच्छत्रशता दृष्ट्वा तेहि भगवतो तरन्तस्य पंचच्छत्र-
शतानि प्रगृहीतानि। यक्षेहिं[f] पि पंचच्छत्रशतानि प्रगृहीतानि। चातुर्महाराजकेहि[g]
पि पंचच्छत्रशतानि प्रगृहीतानि[h]। सुनिर्मितेनापि[i] देवपुत्रेण ततो[j] विशिष्ठतरं छत्रं
प्रगृहातं। परनिर्मितवशवर्तिहि[k] पि चतुर्हि पि महाराजेहि पंचच्छत्रशतानि
प्रगृहीतानि। त्रायस्त्रिंशेहि[l] पि देवेहि पंच च्छत्रशतानि प्रगृहीतानि[m]। शक्रेणापि
20 देवानामिन्द्रेण च्छत्रं प्रगृहीतं। सुयामेनापि देवपुत्रेण च्छत्रं प्रगृहीतं। तुषितेहि
देवेहि पंच च्छत्रशता[n] प्रगृहीता[o]। संतुषितेन देवपुत्रेण[p] ततो विशिष्टतरं छत्रं प्रगृहीतं।

ब्रह्मकायिकेहि[a] देवेहि पंच च्छत्रशतानि प्रगृहीतानि। महाब्रह्मणापि[b] ततो विशिष्टतरं छत्रं प्रगृहीतं। शुद्धावासेहि देवेहि[c] भगवतो गंगाये तरन्तस्य च्छत्रपंचशतानि[d] Sen. 264 प्रगृहीतानि। महेश्वरेणापि[e] देवपुत्रेण च्छत्रं प्रगृहीतं[f] भगवतो गंगाये तरन्तस्य[g]। केन[h] तानि सर्वाणि देवमनुष्यकाणि च्छत्रसहस्राणि समभिभूतानि।

आह्निककर्मिकपार्थिवराजान[i] वंशनिर्वृत्तार्हन्ति[j][k]। 5

अर्हति च महाभागो[l][m] स एष पुरुषर्षभो छत्रं[n] ॥२०॥

ये बाहिरा[o] जयित्वा रिपुसंघा अश्नन्ति अजितराज्या।

............संपन्ना ते पि नरा छत्रमर्हन्ति ॥२१॥

किं पुन[p] येन समन्ता सर्वक्लेशा जिता निरवशेषा।

अपि च नमुचि[q] ससैन्यो[r] न तु च्छत्रशतारहो भगवां ॥२२॥ 10

तारकतरलप्रकाशान्तारकरूपानप्रतिभासां[s][t]।

वैडूर्यरतनदण्डां[u] च्छत्रशतां[v] पंच आदाय ॥२३॥

राजा बिम्बिसारो[w][x] अण्वति पृष्ठतो दशबलस्य[y]।

संप्रस्थितो[z] च भगवां वज्जि अभिमुखो सहगणेन ॥२४॥

नावाय समभिरूढो[a] भगवां भवति भवौघं उत्तीर्णो। 15

पारे[b] च लेच्छविगणाः छत्रशतां पंच[c] धारेन्सुः ॥२५॥

अथ पश्यिया[d] महीपतिं[e] महामहीधरमहाबलनिकेता[f]।

नागा पि गंगनिलया छत्रशता पंच धारेन्सुः[g] ॥२६॥

ऋद्धिमन्तो[h] द्युतिमन्तो[i] धरणिपथगता महाबलनिकेता।

यक्षा[j] पि तत्र असुरा मुदिता छत्रशता पंच धारेन्सु ॥२७॥ 20

आगलितमाल्यमुक्ता[k] उडुपतिपरिपूर्णचारुचन्द्रमुखा[l]।

Sen. 265

देवा पि तत्र मुदिता छत्र[a]शतां पंच धारे[b]न्सुः ॥२८॥

चतुरो पि लोकपाला प्रमुदितमनसा विगत[c]मदनमाना ।

[d]नटकरजविधमनक[e]रा धारेन्सु धरणिधरसमस्य ॥२९॥

अथ सो त्रिदशाधिपतिः कांचनम[f]णिरत्नसुकृतवर[g]जालं ।

5 रक्तकुसुमसुकृतदामं [h]छत्रं जगाग्रस्य धारेसि ॥३०॥

[i]यमवरुणनागव[j]न्दितं यामाधिपतिं उपे[k]त्य वसु[l]यामा ।

[m]शरदजलाभ्र[n]पाण्डरं धा[o]रयि घनपवनगतिस्य ॥३१॥

तुषितभवना[p]धिवासी [q]पुन भगवतो उपगतो अप्रमोहो ।

[r][s]संवर्तितखर[t]समवपु धा[u]रयि च्छत्रं प्रसन्नमनो ॥३२॥

10 वडू[v][w]यसुकृतदण्डं प्रावाडदशशतश[x]लाकाचित्रं ।

फुल्ल[y]कुसुमा[z]स्थिततलं सुनि[a]र्मितो धारये छ[b]त्रं ॥३३॥

परनिर्मितवशव[c]र्ती निर्मिणे वरकनकभारसंछन्नं ।

[d]रत्नहा[e]रलम्बदामं छत्रं त्रैलो[f]क्यकीर्तिस्य ॥३४॥

[g]ब्रह्मा प्रसन्नमनसो पवनपथविशुद्धहृदयस्य ।

15 धारेसि चन्द्रसन्निभं [h]छत्रं परवादिमथनस्य ॥३५॥

सप्तरतनामयं [i]पुन दिव्यकुसुमामयं दाममण्डि[j]तं ।

छत्रं छत्रा[k]रह[l]स्य महेश्वरो धारये छत्रं ॥३६॥

[m]इत्ये[n]ष सुराधिपेन कामावचरो संघो सन्निपतितो ।

[o][p]महा अभु महेश्वरेण अतुलबलधरस्य पूजार्थं ॥३७॥

20 Sen. 266

भगवता [q]यत्तकानि तानि च्छत्राणि तत्तका [r]बुद्धा निर्मिता । ते अन्यमन्यस्य न प[s]श्यन्ति भगवन्तं । तेषां [t]प्रत्येकं प्रत्येकं एतदभूषि । [u]म[v]म येव च्छत्रे [w]नाथो तिष्ठति

सुगतो तिष्ठति ध्वजो[a] तिष्ठति। देवा[b] च मनुष्या च याव अकनिष्ठभवनं पश्यन्ति[c] बुद्धानुभावेन।

अथ भगवां[d] पुरुषचन्द्रो[e] तानभिनिर्मिणेसंबुद्धानृद्धि।

भगवां विदर्शये[f] न च अन्यमन्यस्य पश्यन्ति ॥३८॥

अकनिष्ठभवनगता[g] तु दशबलबुद्धा[h] अम्बरं प्रसदनियं[i]। 5

शोभेन्ति[j] गगणतलगता यूपमिव यथा रतनचित्रं ॥३९॥

सर्वे सुवर्णवर्णा[k] सर्वे द्वात्रिंशलक्षणसमंगी[l]।

सर्वे कनकगिरिनिभाः[m] सर्वे[n] वरवारणगतीकाः[o] ॥४०॥

सर्वे मनापाकारा[p] सर्वेषां शोभते प्रभाजालं।

सर्वे अमितगुणधराः सर्वे प्रामोद्यसंजननाः[q] ॥४१॥ 10

दृष्ट्वान देवमनुजा गगनतलं शोभन्तं दशबलेहि[r]।

अतिरिव उद्विल्यहर्षा[s] हाहाकारं उदीरेन्सुः ॥४२॥

आस्फोटितप्रक्ष्वेडित[t][u] कलकलसमाकुला[v] अभिवतन्ति।

मुंचेन्सुः[w][x] अम्बरगता[y] वरचूर्णरजाकुलं[z] सुरभि ॥४३॥

तं भगवतस्तादृशं[a] बुद्धविकुर्वितं ऋद्धिप्रातिहार्यं[b] दृष्ट्वा·अतीव देवा भगवतः 15 पूजां करेन्सुः[c] मान्दारवेहि महामान्दारवेहि कर्कारवेहि महाकर्कारवेहि रोचमानेहि महारोचमानेहि भीष्मेहि महाभीष्मेहि[d] समन्तगन्धेहि महासमन्तगन्धेहि[e] पारियात्रक- Sen. 267 पुष्पेहि सुवर्णपुष्पेहि रूप्यपुष्पेहि रजतपुष्पेहि चन्दनचूर्णेहि अगरुचूर्णेहि केशरचूर्णेहि[f] भगवन्तमोकिरेन्सु[g] अभ्योकिरेन्सु[h] समन्तात्षष्टि[i] योजनां दिव्येहि च गन्धचूर्णेहि[j] जानुमात्रमोघो[k] संवृत्तो[l]। भिक्षू भगवन्तमाहन्सुः। किमयं भगवन्देवानुभावो 20 नागानुभावो यक्षानुभावो[m] येन इमानि दानि च्छत्रसहस्राणि देवेहि च नागेहि च राजानेहि च प्रगृहीतानि ? भगवानाह। तथागतस्यैष भिक्षवः पौराणस्य कुशलधर्मस्य

अनुभावो। यदि तथा[a]गतोऽनुत्तरां सम्यक्संबोधिमभिसंबु[b]द्धो न भविष्यति संसारे संसरन्तो भ[c]गवन्तो य[d]त्तका एतानि च्छत्राणि तत्तकानि चक्रवर्तिराज्यानि कारयिष्येत्। [e]अथ च पुनस्तथागतस्य सर्वपुण्यपापक्षयतो परिनिर्वाणं भविष्यति।

भगवानिदानि आयुष्मन्तं वागीशमाम[f]न्त्रेसि। प्रतिभातु ते [g]वागीश तथागतस्य पूर्वयोगो। [h]साधु [i]भगवन् आयुष्मां [j]वागीशो भगवतः प्रतिश्रुत्वा तायेवेलाये इमां गाथां [k]बभाषे।

अभू[l]च्छास्ता अतीतस्मिं ब्राह्मणो अकुतोभयो।
[m]प्रहीणजाति ब्राह्मणो ब्रह्मचर्यस्मिं केवली ॥४४॥
सत्वां दुःखितां [n]दृष्ट्वान दुःखधर्मसमर्पि[o]तां।
धर्म[p]चक्रं प्रवर्तेसि आभां [q]कासि अनुत्तरां ॥४५॥
धर्मचक्रं प्र[r]वर्तित्वा आभां कृत्वा अनु[s]त्[t]तरां।
संबुद्धो परिनिर्वायेत् महर्षिः क्षीणपुनर्भवो ॥४६॥
तस्य स्तूपमकरेन्सुः श्रा[u]वका अकु[v]तो[w]भया।
[x]शैक्षा उत्तमा दान्ताश्च अक[y]रेन्सु कीर्तिहे[z]तवे ॥४७॥
[a]क्षत्रियब्रा[b]ह्मणवैश्या पूजां [c]कासि महर्षिणो।
[d]नृत्यवादित्रगीतेन नानामाल्यसम[e]गता ॥४८॥
ब्राह्मणो पि विचिन्तेति पिता बुद्धस्य पण्डितो।
यं नूनं [f]छत्रं [g]कारेयं रत्नाकृतं [h]शुभपाण्डरं ॥४९॥
[i]विमलं छत्रं [j]स्तूपस्मि अधिरोपिय संचिते।
[k]अश्रूणि च प्रवर्तेन्तो पिता पुत्रमपूजयि ॥५०॥
सो तं कर्मं करित्वान कल्याणं [l]बुद्धवर्णितं।
ब्राह्मणो अकरि कालं [m]जातानामेव धर्मता ॥५१॥

Sen. 268

[a]संवर्ताश्च विवर्ताश्च अशीतिन्तेन कर्मणा ।
दुर्गतिं [b]नोपलभते एतत्च्छत्रस्य तत्फलं ॥५२॥
[c]मनुष्येषु तदा राज्यं धर्मेण अनुशासयं ।
पृथिव्यां [d]चक्रवर्त्यासि विजितावी महाबलो ॥५३॥
[e]चित्रा जनपदा आसि [f]अनुयात्रा[g]सि क्षत्रिये । 5
[h]तमेव [i]अपचायेसि श्वेतछत्रं [j]ददत्सुखं ॥५४॥
[k]ततो चापि च्यवित्वान [l]देवेषु उपपद्यिथ ।
मरूणां [m]प्रवरो आसि [n]देवकायान पूजितो ॥५५॥
पूजितो [o]मरुसंघानामैश्वर्य[p]कम्बलस्थितो ।
[q]वसन्तत्रापि वर्तेसि श्वेतच्छत्रस्य तत्फलं ॥५६॥ 10
देवाना[r]मुत्तमो आसि मनुष्याणां पि उत्तमो ।
[s]सर्वत्र उत्तमो आसि देवानां [t]मनुजान च ॥५७॥
देवाना[u]मुत्तमः भूत्वा मनुष्याणां च उत्तमो ।
तं भवञ्च [v]विजहित्वान आगत्वा पश्चिमं भवं ।
संबुद्धो पि [w]प्रजायासि ऋषि क्षीणपुनर्भवा ॥५८॥ 15 Sen. 269
सो तं [x]मार्गं [y]वाभिज्ञाये [z]दुःखप्रशमगामिनं ।
यस्य मार्गस्य प्रतिलाभा दुःखस्यान्तं [a]करीयति ॥५९॥
[b]तं चात्र अतीता [c]बुद्धा तं च [d]वीरो प्रतापवां ।
सर्वे [e]समशीलप्रज्ञा नास्ति [f]बुद्धान अन्तरं ॥६०॥
ये च ते [g]हि कालेकाले [h]संबुद्धा नात्र संशयं । 20
सर्वे ते सुगतिं यान्ति [i]आत्मकर्मफलोपगाः ॥६१॥

चक्षुमां ब्राह्मणो[a] आसि अन्तेवासिश्च ते अहं ।

त्वयाहं चोदितो वीर पूर्वां[b] जातिमनुस्मरेत् ॥६२॥

एवमेव[c] एतदासि[d] यथा भाषसि वागीश[e] ।

ब्राह्मणोऽहं[f] तदा आसि अन्तेवासी[g] च मे भवं ॥६३॥

मया त्वं चोदितः सन्तो[h] पूर्वां[i] जातिमनुस्मरेत् ।

तस्मा[j] ध्वजपताकां च श्वेतच्छत्रं च कारयेत् ॥६४॥

वेदिकां चैव स्तूपेषु[k] कुर्यात्पंचांगुलानि[l] च ।

साधु[m] पुण्यवरं[n o] विपुलं[p] दायकमधिवर्तति[q] ॥६५॥

एषा[r] चान्या च[s] या पूजा बुद्धमुद्दिश्य[t] क्रियते ।

सर्वा[u] अवन्ध्या सफला[v] भवति अमृतोपगा ॥६६॥

न[w] हि अर्चनां समां लोके पश्यामि विशिष्टतरां कुतो[x] ।

यं[y] च अन्यं पूजयन्तो पुण्यं यासि महत्तरं[z] ॥६७॥

सचे[a] कोचिमस्मिं लोकस्मिं[b] सर्वा पि देवता सदा ।

Sen: 270

पूजेय सर्वरतनैः[c] नैवं[d] से प्रतिकृतं[e] सिया ॥६८॥

एवं महायशा महाकारुणिका अनुकम्पाहितामिता[f] ।

ओदुम्बरमिव कुसुमं न[g] हि सुलभदर्शना संबुद्धाः ॥६९॥

अथ मे[h] भणन्ति वर्णं समाधितो च शीलतो च प्रज्ञातो[i] च अधिगमनतो च निष्क्रमणतो च प्रयोगतो च जात्यतो च भूततो च भवन्ति महेशाख्या[j] च कृतपुण्या[k] तासु तासु जातीषु आदेयवचना[l] च भवन्ति कीर्तनीया च बहुजनस्य ।

तेनैव[m] कुशलमूलेनारोपितेन[n] उत्तरिं ।

प्रावरणं[o] अल्पकिसरं[p] तेषां भवति कायिकं[q] ॥७०॥

तस्मात्पुण्यानि [a]कुरियात् निचयं सांपरायिकं ।
पुण्यानि पर[b]लोकस्मिं निष्ठा भवति प्राणिनां ॥७१॥

[c]भगवां गंगासुत्तीर्णो [d]वैशालीये च सीमामाक्रान्तो । भगव[e]ता ते अमनुष्यका [f]पलाना । मारेण पापीमता भगवतो गच्छन्तस्य यत्तं लेच्छवीहि [g]मार्गं मुक्तपुष्पाव[h]कीर्णं [i]सिक्तसंमृष्टं प्रतिजाग्रितं तं [j]सर्वं [k]प्राणकेहि [l]स्फुटं । निर्मितो [m]कुण्डलो नाम परिव्राजको । 5
सो भगवतो तेन मार्गेण गच्छन्तस्य आह । निवर्[n]ताहि ।

बहूहि प्राणेहि मही संवृता
अणूहि स्थूलेहि च मध्येहि च ।
बुद्धो यदा गच्छति भू[o]तसंस्तृते
[q]व्यथा ततो उपपद्यति [r]आक्रमे ॥७२॥ 10

भगवानाह । Sen. 271

मृदु [s]संस्पर्शः यो तथा[t]गतानां
[u]तूर्णं [v]यथा ओतरितमारुतानां ।
न हि [w]बुद्धश्रेष्ठान तथागतानां
शरीरमागम्य वधो [x]प्रजायति ॥७३॥ 15
[y]भयचेतना नास्ति विहेठना[z] वा
प्राणेषु सो गच्छति [a]अप्रतिघो [b]भगवान् ।
सर्वेहि भूतेहि [c]निवापषण्डं
भगवता [d]हरितशाद्वलं निर्मितं ॥७४॥

भगवां उपविष्टो भिक्षुसंघो च । ते लेच्छवयो भगवन्तं [e]पृच्छन्ति । कस्य 20
[f]भगवता [g]शुवे आगारमधिवासितं अभ्यन्तर[h]वैशालकानां बाहिरवैशालकानां वा ?

भगवानाह । न हि [a]वासिष्ठाहो अभ्यन्तरवैशालकानां तथागतेनाधिवासितं न बाहिर-वैशालकानां । [b]गोश्रृंगीये मनुष्यालापिको शुको प्रेषितो [c]गंगाये पारं । तेन [d]तथागतो [e]सश्रावकसंघो गोश्रृंगीये वचनेन [f]शुवेतनाय भक्तेन उपनिमन्त्रितो । तथागतेनाधि-वासितं । ते दानि लेच्छवयो [g]अभ्यन्तरवशालका [h]च दुवेचतुरशीति [i]राजान सहस्राणि

5 [j]अन्यो च [k]महाजनकायो क्षत्रियमहाशाला [l]गृहपतिमहाशाला विस्मयसम्पन्ना: कथं [m]शुको जल्पतीति ? भगवानाह । किमत्राश्चर्यं गोश्रृंगीये शुको जल्पति मानुषिकाय वाचाय । [n]अन्येहि पि वासिष्ठाहो पक्षिभूतेहि राज्यं व्यवहरितं ।

भूतपूर्वं [o]वासिष्ठाहो अतीतमध्वाने नगरे [p]वाराणसी काशिजनपदे ब्रह्मदत्तो नाम राजा राज्यं कारयति कृतपुण्यो महेशाख्यो [q]महाबलो महाकोशो महावाहनो । तस्य च

10 Sen. 272 राज्यं ऋद्धं च स्फीतं च [r]क्षेमं च सुभिक्षं च आकीर्णजन[s]म[t]नुष्यं च बहुजनमनुष्याकीर्णं च सुखितजनमनुष्यं च प्रशान्त[u]दण्डडमरं सुनिगृहीततस्करं व्यवहारसम्पन्नं । विस्तीर्णो च [v]अन्त:पुरो अपुत्रो च । तस्य [w]राज्ञो भवति । कथं मे [x]पुत्रो भवेया ? स [y]श्रृणोति [z]अमात्यानां । अनुहिमवन्ते आश्रमे ऋषयो [a]महानुभावा प्रतिवसन्ति पंचाभिज्ञा चतुर्ध्यानलाभिनो ते [b]पृच्छितव्या कथं पुत्रो भवेय । ते [c]महानु[d]भावा ऋषयो [e]आचि-

15 [f]क्षिष्यन्ति यथा देवस्य पुत्रो भविष्यति । सो दानि राजा सान्त:पुरो [g]सकुमारामात्यो सबलवाहनो येन तेषामृषीणामाश्रमस्तेन संप्रस्थितो । [h]अन्तरमार्गे वासमुपगतो राजा [i]सबलवाहनो सान्त:पुरो । तेन [j]तहिं दृष्टा [k]साम्बलीकोटरातो त्रयो [l]पक्षियो निर्यान्तायो उलूकी शारिका शुकी । तस्य दानि [m]रा[n]ज्ञो दृष्ट्वा कौतूहलं संजातं । तेन पुरुषो [o]आणत्तो गच्छ जानाहि किमत्र [p]कोटरे ? सो आरुह्य निध्यायति [q]पश्यति [r]त्रीणि अण्ड-

20 कानि । सो आह । [s]देव त्रीणि [t]अण्डकानि । राजा आह । [u]पृथक् पृथक् पुटके [v]बन्धिय ओतारेहि यथा न [w]वि[x]पद्यन्ते । तेन पुरुषेण [y]पु[z]टकस्मि पृथक्पृथग[a]बन्धिय [b]ओतारिता

दूतो प्रेषितो राज्ञो[a] च। निर्गम्यतु[b] मुक्ता भवतु मालिनी तं दिवसं[c] या चैषा उद्धृत-दण्डा एषा पितरे आलोकं निसृष्टा भवतूद्धृतदण्डा। एषा[d] न अस्माकं मालिनी अपराध्यति। काश्यपो अस्माकं सपरिवारो अपराध्यति तस्य वयं दण्डं करिष्यामः।[e]

तेहि दानि सन्नद्धकवचिताः सहस्रयोगा दश पुरुषा ऋषिवदने[f] प्रेषिताः काश्यपं

5 श्रमणं[g] सश्रावकसघं जीविताद्व्यपरोपयथ[h][i]। ते[j] भगवता काश्यपेन मैत्र्या स्फारित्वा आर्यधर्मेहि प्रतिष्ठापिता[k]। तेहि ब्राह्मणेहि अपरे[l] विंश पुरुषाः सन्नद्धकवचिताः प्रेषिताः काश्यपं[m] श्रमणं जीविताद्व्यपरोपयथ। ते पुरुषा[n] ऋषिवदनं[o] गताः सन्नद्धाः सप्रहरणाः। ते पि भगवता मैत्र्या स्फारित्वा[p] आर्ये धर्मे प्रतिष्ठापिताः। एवं

Sen. 314 त्रिंशच्चत्वारिंश पंचाशं यत्तका प्रेषिता तत्तका काश्यपेन भगवता मैत्र्याय स्फारित्वा

10 आर्यधर्मेहि प्रतिष्ठापिताः। आकर्षणा[q] एषा बुद्धानां। भगवता वैनेयसत्वानां[r] आकर्षणतायै[s] यत्तका तहिं बुद्धवैनेया आसि तेहि ब्राह्मणसहस्रेहि तत्तका तेहि विसर्जिताः ते च भगवता सर्वे आर्यधर्मेहि विनीताः। मिथ्याप्रतिपन्ना अवशिष्टा[t] अनेकप्राणसहस्त्रियो[u]। तेषामार्यधर्मेहि[v] विनीतानां भवति। न[w] एते ब्राह्मणा बुद्ध-माहात्म्यं जानन्ति। यदि एते भगवन्तं काश्यपमुपसंक्रमेन्सुः[x] महता अर्थेन संयुज्येन्सु[y]।

15 तेहि[z] तेषां ब्राह्मणानां दूतो प्रेषितो। भगवां काश्यपो सम्यक्संबुद्धो महात्मा महाकारुणिको लोकस्यानुग्रहप्रवृत्तो[a]। मा[b] भवन्तो भगवतो काश्यपस्यान्तिके भिक्षुसंघस्य बाधितुं प्रदूषेथ। एवं मानं च मदं च जहित्वा आगच्छथ[c] सर्वे भगवतो काश्यपस्य पादवन्दनं[d] महता अर्थेन संप्रयुज्यथ।

सत्य अपिशुनवर्णा[e] नं[f] च अर्थवती[g] शुची।
20 अन्येषां[h] मधुरा व्यक्ता बुद्धस्य सखिला गिरा[i] ॥४१॥
तर्पणीया[j] निर्वंम्हणी सर्वदाहविनाशनी[k]।
नेलवर्णा[l] सुखवर्णा[m] बुद्धस्य सखिला[n] गिरा ॥४२॥

[a]अगद्गदा [b]अविकला [c]अवितथा अनन्यथा।
[d]यथातथा अविकल्पिता [e]वुद्धस्य [f]सखिला गिरा ॥४३॥

ज्ञेयज्ञाना अनुत्पन्ना [g]अनोसाना असादिशा।
[h]नरवशा [i]सुविभक्ता च [j]वाचा [k]अमितबुद्धिनो ॥४४॥

[l]सत्यं चापिशुनं च भाषति 5
स सर्वतः [m]पुन मैत्रचित्तो।
[n]उपकारे [o]परमार्थसंहितं Sen. 315
एतं वा [p]परमं सुभाषितं ॥४५॥

आविष्टं [q]गदितं स भाषति
उच्चनीचमथापि मध्यमं। 10
अनुपदं अन्वक्षरं विशुद्धं
[r]एतं वा परमं सुभाषितं ॥४६॥

[s]परमकरुणमुदित[t]युक्तां
गिरां [u]भाषति दशफलयुक्तां।
[v]अष्टांगुपेत[w]चतुष्प्रकारां 15
[x]एतं वा परमं [y]सुभाषितं ॥४७॥

वाचां भाषति [z]पंचपुण्यां
सुनिश्चितां वा पुन छिन्नसंशयां।
न [a]च [b]कर्म किंचि करोति पापं
तथाविधं [c]उत्तमपौरुषत्वं ॥४८॥ 20

एवं उपेतं वरलक्षणेहि
[d]महाद्युतिगणमनुशास[e]ते।

[a]वरं ज्ञातीरतनं प्रहाय
रतिं च स्फीतां अभिनिष्क्रमे[b] ॥४९॥
अमृतपदं[c] जिगीषुं नन्दजाता
द्रुमसारं वरगन्धमुत्तमं ।
5 [d]लोचेत्वान कृतविकृतं[e] तं
अथ तेनैव [f]पचेसि ओदनं ॥५०॥
Sen. 316 [g]एवमिह काश्यपं महर्षिं[h]
परिभाषन्ति जना परीत्तप्रज्ञाः[i] ।
स्वाख्यातपदं[j] अनिन्दितं
10 [k]पुरुषाजानियमनतिक्रमं ॥५१॥
[l]शमितावि प्रहाय पुण्यपापं[m]
भवसंयोजनसंक्षये[n] रतं ।
शान्तं सुविभक्तमानसं[o]
तं जनो[p] गरहति अनंगनं ॥५२॥
15 [q]भिक्षू च उपासका[r] इमे
बहु काश्यपशासने रता ।
[s]ज्वलितं व हुताशनं शिखि
एथ वन्दाम समेत्य काश्यपं ॥५३॥
एषो द्विपदानमुत्तमो[t]
20 सो चक्षुददो विनायको ।
मानं च मदं च विप्रहा
एथ वन्दाम समेत्य काश्यपं ॥५४॥

ते ब्राह्मणा[a][b] सर्वे नित्यत्व[c]नियतराशी बुद्धसहस्रमपि[d] यदि धर्मं[e] देशेय अभव्या ते धर्ममाजानितुं बुद्धे च धर्मे च संघे च प्रसादयितुं। ते दानि [f]दण्डलगुडहस्ता येन भगवान्काश्यपो तेन [g]प्रधाविता। भगवता पृथिवी[h]देवता आभाष्टा। सा दानि तालमात्रेण आत्मभावेन भगवतो पुरतो [i]स्थिता। भगवां तां पृथिवीदेवतामाह। के च ते तत्र ब्राह्मणा भवन्ति। सा दानि आह। ऐते मम पृथिवीनिसृता दासा। 5 भगवानाह। तेन हि यथा दासा [j]पराक्रम्यन्ते तथा पराक्रम। सा दानि [k]महान्तं [l]तालस्कन्धमुन्मूलेत्वा येन ते ब्राह्मणा [m]तेन प्रत्युद्गता। [n]तं तालस्कन्धं पृथिवीये छटा- Sen. 317 छटाये उपरिपतितं। ते ब्राह्मणा भीता नाशनष्टाः[o]।

इति श्रीमहावस्तुअवदाने मालिनीये वस्तु समाप्तं ॥

एवं मया श्रुतं एकस्मिं समये भगवां[p] कोशलेषु चारिकां [q]चरमाणो महता भिक्षु- 10 संघेन सार्धं[r] पञ्चहि भिक्षुशतेहि येन कोशलानां मारकरण्डो निगमो [s]तदवसारि तदनुप्राप्तो[t] तत्रैव विह[u]रति अन्यतरस्मिं वनषण्डे। अथ खलु भगवान् [v]सायाह्नकालसमये प्रति- संलयनाद्व्युत्थाय विहारातो निर्गम्य [w][x]ऊर्ध्वं च उल्लोकेत्वा [y]दिशाभागां च [z]अभिविलो- केत्वा अधो च ओलोकेत्वा समं च भूमिभागं समवेक्षित्वा स्मितं प्रादुष्करित्वा [a]दीर्घं चंक्रमं चंक्रमे। [b]अद्राक्षीत् अथ खल्वायुष्मानानन्दो भगवन्तं सायाह्नकालसमये 15 प्रतिसंलयनाद्व्युत्थाय ऊर्ध्वं च [c]उल्लोकेत्वा दिशाभागां च अभिविलोकेत्वा अधो च ओलोकेत्वा समं च भूमिभागं [d]समवेक्षित्वा स्मितं प्रादुष्करित्वा [e]दीर्घं चंक्रमं[f] चक्रमन्तं। दृष्ट्वा पुनर्येन संबहुला [g]भिक्षवस्तेनोपसं[h]क्रमित्वा भिक्षूनेतदवोचत्। एषो बुद्धो भगवान्सायाह्नसमये [i]प्रतिसंलयनाद्व्युत्थाय ऊर्ध्वं च उल्लोकेत्वा दिशाभागां च [j]अभि- विलोकेत्वा अधो च अवलोकेत्वा समं भूमिभागं समवेक्षित्वा [k]स्मितं च प्रादुष्करित्वा 20 दीर्घं चंक्रमं चंक्रमति। न च पुनरावुसावो [l]तथागता अर्हन्[m]तः सम्यक्सम्बुद्धाः अहेतु अप्रत्[n]ययं स्मितं प्रादुष्कुर्वन्ति। किं पुनर्व[o]यं आवुसावो येन [p]भगवांस्तेनोपसंक्रमित्वा

भगवन्तमेतमर्थं पृच्छेम। यथा तं भगवां व्याकरिष्यति[a] तथा तं धारयिष्याम। साध्वायुष्मन्[b]निति[c] ते भिक्षू[d] आयुष्मतो आनन्दस्य प्रत्यश्रोषि।

अथ खलु[e] आयुष्मानानन्दो तेहि भिक्षुहि[f] सार्धं येन भगवांस्तेनोपसंक्रमित्वा
Sen. 318 भगवतः पादो शिरसा वन्दित्वा [g]एकान्ते अस्थासि। एकान्ते स्थितः आयुष्मानानन्दो
5 भगवन्तमेतदवोचत्। इहाहं भगवन्तं [h]अद्दशामि सायाह्नसमये प्रतिसंलयनाद्व्युत्थाय विहारान्निष्क्रम्य [i]ऊर्ध्वं च उल्लोकेत्वा अधो च अवलोकेत्वा दिशाभागां च अभिविलोकेत्वा समं च भूमिभागं समवेक्षित्वा[j] स्मितं च प्रादुष्कुर्वन्तं[k] दीर्घं चंक्रमं चंक्रमन्तं। न च पुनस्तथागता[l] अर्हन्तः सम्यक्सम्बुद्धा अहेतु अप्रत्ययं स्मितं प्रादुष्करोन्ति। को भगवन् हेतुः कः प्रत्ययः स्मितस्य प्रादुष्करणाय। एवमुक्ते भगवानायुष्मन्तमानन्द[m]-
10 मेतदुवाच। पश्यसि त्वं च आनन्द एतं पृथिवीप्रदेशं। एवं ह्ये[n]तं भगवन्[o]। [p]एतस्मि आनन्द पृथिवीप्रदेशो भगवतो काश्यपस्य आगमवस्तुं अभूषि। पश्यसि त्वमानन्द[q] एतं पृथिवीप्रदेशं। [r]एवं ह्येतं भगवन्। [s]एतस्मिन्नानन्द पृथिवीप्रदेशे [t]भगवतो काश्यपस्य कुटीवस्तु[u] अभूषि। पश्यसि त्वमानन्द[v] एतं पृथिवीप्रदेशं। [w]एवं ह्येतद्भगवं। एत[x]स्मिन्नानन्द पृथिवीप्रदेशे भगवतो काश्यपस्य[y] चंक्रमषष्टिः[z] अभूषि।
15 पश्यसि त्वमा[a]नन्द एतं पृथिवीप्रदेशं। [b]एवं ह्येतं भगवं। [c]एतस्मिन्नानन्द पृथिवीप्रदेशे त्रयाणां तथागतानामर्हतां सम्यक्सम्बु[d]द्धानां निषद्या[e] अभूषि भगवतो क्रकुच्छन्दस्य [f]भगवतो च कनकमुनिस्य भगवतो च कास्यपस्य।

अथ खल्वायुष्मानानन्दो अ[आ]श्चार्याद्भुतसंविग्नरोमहृष्टजातो[g] शीघ्रंशीघ्रं [h]त्वरमाणरूपो येन सो[i] पृथिवीप्र[j]देशो तेनोपसंक्रमित्वा तस्मि[k] पृथिवीप्रदेशे चतुर्गुणसंघाटिं
20 प्रज्ञपेत्वा येन भ[l]गवां तेनाञ्जलिं प्रणामेत्वा भगवन्तमेतदवोचत्। इह भगवां निषीदतु प्रज्ञप्त [m]एव आसने। अयं पृथिवीप्रदे[n]शो चतुर्हि तथागतेहि अर्हन्तेहि सम्यक्सम्बुद्धेहि

परिभुक्तो भविष्यति[a] भगवता क्रकुच्छन्देन भगवता[b] च कनकमुनिना भगवता च
काश्यपेन[c] भगवता चैतर्हि[d]। निषीदतु[e] खलु भगवां प्रज्ञप्त[f] एव आसने। आयुष्मां[g] पि
आनन्दो भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषीदि। ते पि भिक्षू[h] भगवतः[i] Sen. 319
पादौ शिरसा वन्दित्वा एकान्ते निषीदेन्सुः[j]। एकान्ते निषण्णमायुष्मन्तमानन्दं[k]
भगवानेतदवोचत्। इच्छसि[l] पुनस्त्वमानन्द तथागतस्य पूर्वनिवाससंयुक्तां धर्मीकथां 5
भाषतो श्रोतुं[m] इममेव मारकरण्डं निगममारभ्य। एवमुक्ते आयुष्मानानन्दो भगवन्त-
मेतदवोचत्। एतस्य दानि भगवं[n] कालो एतस्य दानि सुगत समयो[o] यं भगवां[p]
भिक्षूणामेतमर्थं भाषे। भिक्षू[q] भगवतो संमुखा श्रुत्वा संमुखा प्रगृहीत्वा[r] तथत्वाये
धारयिष्यन्ति। एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत्[s]।

भूतपूर्वमानन्द भगवति[t] काश्यपे[u] अयं मारकरण्डो निगमो[v] वेरुडिङ्गो नाम 10
ब्राह्मणग्रामो अभूषि। वेरुडिङ्गे[w][x] खलु आनन्द ब्राह्मणग्रामे घटिकारो नाम कुम्भकारो
अभूषि भगवतो काश्यपस्य उपस्थायको। घटिकारस्य खलु पुनरानन्द कुम्भकारस्य
ज्योतिपालो नाम[y] माणवको अभूषि[z] दारकवयस्यको सहपांशुक्रीडनको प्रियो मनापो
अजन्यस्य ब्राह्मणस्य पुत्रो। अथ खल्वानन्द[a] भगवां[b] काश्यपो कोशलेषु चारिकां
चरमाणो[c] महता भिक्षुसंघेन सार्धं सप्तहि भिक्षुसहस्रेहि येन कोशलानां वेरुडिङ्गो 15
ब्राह्मणग्रामो तदवसारि तदनुप्राप्तः तत्रैव विहरति[d] इमस्मिं एव[e] वनखण्डे[f]। अश्रोषि[g]
खल्वानन्द घटिकारो कुम्भकारो भगवां किल काश्यपो कोशलेषु चारिकां चरमाणो
येन कोशलानां वेरुडिङ्गो ब्राह्मणग्रामं तदवसारि तदनुप्राप्तो[h] तत्रैव विहरति अन्यतरस्मिं[i]
वनखण्डे। अथ खल्वानन्द घटिकारो कुम्भकारो[j] येन ज्योतिपालो माणवो तेनुपसंक्र-[k]
मित्वा[l] ज्योतिपालं माणवमेतदवोचत्[m]। श्रुतमिदं[n] सम्यग्ज्योतिष्पाल[o]। भगवां किल 20
काश्यपो कोशलेषु चारिकां चरमाणो महता भिक्षुसंघेन सार्धं सप्तहि भिक्षुसहस्रेहि
येन कोशलानां[p] वेरुडिङ्गो[q] ब्राह्मणग्रामो तदवसारि तदनुप्राप्तः तत्रैव विहरति अन्यतरस्मिं Sen. 320

वनख[a]ण्डे। किं [b]पुनर्वयं सम्यग्ज्योतिपाल येन भगवां काश्यपो तेनोपसं[c]क्रमेम भगवन्तं काश्यपं दर्शना[d]ये वन्दनाये पर्युपासनाये। एवमुक्ते ज्योतिपालो माणवो घटिकारं कुम्भकारमेतदवोचत्। किं मे भणे घटि[e]कार तेहि मुण्डिकेहि [f]श्रमणेहि दर्शनाये उपसंक्रान्तेहि पर्युपासनाये। द्वितीयं [g]तृतीयं पि आनन्द घटिकारो कुम्भकारो ज्योतिस्पालं माणवमेतदुवाच। ......किं मे भणे घटि[h]कार तेहि मुण्डेहि [i]श्रमणेहि दर्शना[j]ये उपसंक्रान्तेहि पर्युपासनाये।

अथ खल्वानन्द घटिकारस्य [k]कुम्भकारस्य एतदभूषि। को नु खलु [l]स्यादु[m]पायो यं ज्योतिपालो माणवो भगवन्तं काश्यपं दर्शनाय उपसंक्रमेय पर्युपासनाय। अथ खल्वानन्द घटिकारस्य कुम्भकारस्य एतदभूषि। अस्ति खलु त[n]स्यैव वनखण्डस्य अविदूरे सुमुका नाम [o]पुष्करिणी यां नूनाहं ज्योतिपालेन माणवेन सार्धं येन सुमुका नाम पुष्करिणी गच्छेयं शीर्षस्नापनाय। अथ खल्वानन्द घटिकारो कुम्भकारो येन ज्योतिपालो माणवो [p]तेनुपसंक्रमित्वा ज्योतिपालं माणवमेतदुवाच। किं पुनर्व[q]यं सम्यग्ज्योतिपाल येन सुमुका नाम [r]पुष्करिणी तेनोपसं[s]क्रमेम शीर्षस्[t]नापनाय। एवमुक्ते आनन्द ज्योतिपालो माणवो घटिकारं [u]कुम्भकारमेतदुवाच। तेन हि भणे घटिकार सुखी [v]भत्र यस्येदानि कालं मन्यसे। अथ खल्वानन्द घटिकारो कुम्भकारो शीर्षस्ना-[w]नीयशाटिमादाय ज्योतिपालेन माणवेन सार्धं येन सा पुष्करिणी तेनोपसंक्रमेन्सु स्नानाय। अथ खल्वानन्द ज्योतिपालो माणवो [x]शीर्षस्नातो उदकतीरे [y]अस्थासि [z]केशां सन्थापय[a]मानो। अथ खल्वानन्द घटिकारो [b]कुम्भकारो ज्योतिपालं माणव-मेतदवोचत्। अयं सम्यग्ज्योतिपाल [c]भगवां काश्यपो इ[d]मस्मि येव वनखण्डे किं पुनर्वयं सम्यग्ज्योतिपाल येन [e]भगवां काश्यपो तेनुपसंक्रमेम भगवन्तं काश्यपं दर्शनाय पर्युपासनाय। एवमुक्ते ज्योतिपालो माणवो घटिकारं कुम्भकारमेतदवोचत्। [f]किं मे भणे घटिकार तेहि श्रमणकेहि [g]दर्शनाये उपसंक्रमन्तेहि पर्युपासनाये। अथ खल्वानन्द

घटिकारो[a] कुम्भकारो ज्योतिपालं माणवं[b] कृकाटिकायां गृह्य एतदवोचत्। अयं सम्यग्ज्योतिपाल भगवां काश्यपो इमस्मि[c] एव वनखण्डे किं पुनर्वयं सम्यग्ज्योतिपाल येन भगवां काश्यपो तेनुपसंक्रमेम[d] भगवन्तं काश्यपं दर्शनायोपसंक्रमन्तं पर्युपासनाय। अथ खल्वानन्द ज्योतिपालो माणवो घटिकारं कुम्भकारं अपधुनित्वा प्रयाति। तमेनं[e] घटिकारो[f] कुम्भकारो अनुजवित्वा[g] प्रवेणिकेशेहि गृहीत्वा एतदवोचत्। अयं सम्यग्ज्योतिपाल भगवां काश्यपो इमस्मि एव[h] वनखण्डे विहरति किं पुनर्वयं सम्यग्ज्योतिपाल येन भगवां काश्यपस्तेनोपसंक्रमेम[i][j] भगवन्तं काश्यपं दर्शनाय पर्यु-पासनाय। अथ खल्वायुष्मनानन्द[k] ज्योतिपालमाणवस्य[l] एतदभूषि। न खल्वप्रत्ययं[m] वा तं यं मे घटिकारो कुम्भकारो शीर्षस्नातं[n] मूर्ध्नि केशेषु परामृषति नुदन्तकं[o] हीनाय जात्या समानो। तेन हि भणे घटिकार सुखी भव[p] यस्य दानि कालं[q] मन्यसे।

अथ खल्वानन्द घटिकारो कुम्भकारो ज्योतिपालेन माणवेन सार्धं येन भगवां काश्यपो[r] तेनुपसंक्रमित्वा भगवतः काश्यपस्य पादौ वन्दित्वा एकान्ते अस्थासि[s]। एकान्तस्थितः[t] आनन्द घटिकारो कुम्भकारो भगवन्तं[u] काश्यपमेतदवोचत्। अयं मे भगवन् ज्योतिपालमाणवो[v] दारकवयस्यो[w] सहपांशुक्रीडनको[x] प्रियो मनापो अजन्यस्य ब्राह्मणस्य पुत्रो तं भगवां ओवदतु अनुशासतु। अथ खल्वानन्द भगवां काश्यपो ज्योतिपालं माणवं त्रीहि च शरणगमनेहि[y] पंचहि च शिक्षापदेहि समादापये[z]। अथ खल्वानन्द ज्योतिपालो माणवो भगवन्तं काश्यपमेतदवोचत्। न तावदहं भगवन् सर्वाणि पंच शिक्षापदानि समादापयिष्यं। अस्ति ताव[a] मे एको पुरुषो विहेठको रोषको जीविताद्व्यपरोपयितव्यो। एवमुक्ते[b] भगवां ज्योतिपालं माणवमेतदवोचत्। कतमो पुनर्ज्योतिपाल[c] एको पुरुषो विहेठको रोषको जीविताद्व्यपरोपयितव्यो। एवमुक्ते आनन्द[d] ज्योतिपालो माणवो भगवन्तं काश्यपमेतदवोचत्। अयं भगवं घटिकारो कुम्भकारो यो मे तदा एवं शीर्षस्नातं मूर्ध्नि केशेहि परामृषति। तदाहं

5 10 15 20 Sen. 322

[a] एवमाह। उपसंक्रमेम भगव[b]न्तं काश्यपं दर्शनायोपसं[c]क्रमन्तं पर्युपासनाये। ........
अपि च [d]भवां सुखी [e]भवतु घटिकारो कुम्भकारो एषोऽहं सर्वाणि एवं पंच शिक्षापदानि
समादियामि। अथ खल्वानन्द भगवां काश्यपो घटिकारं कुम्भकारं ज्योतिपा[f]लं च
माणवं धार्म्यीया कथया संदर्शयित्वा समादापयित्वा समुत्तेजयित्वा संप्रहर्षयित्वा
5 उद्योजयि। अथ खल्वानन्द घटिकारो ज्यो[g]तिपालो च माणवो भगवतो काश्यपस्य
पादौ शिरसा वन्दित्वा प्रक्रामि।

अथ खल्वानन्द ज्योतिपालमाणवो अचिरप्रक्रान्तो घटिकारं कुम्भकारमेतद-
वोचत्। [h]त्वं पि [i]भणे घटिकार भगवतो [j]काश्यपस्य [k]सम्यग्धर्मं देशितमाजा[l]नासि [m]यथैव
[n]अहं। [o]एवमुक्ते आनन्द घटिकारो कुम्भकारो ज्योतिपालं माणवमेतदवोचत्।
10 [p]एवमेतं सम्यग्ज्योतिपाल। अहं पि भगवतो [q]काश्यपस्य [r]एवं सम्यग्धर्मं देशितमाजानामि
यथैव त्वं। एवमुक्ते आनन्द ज्योतिपालो माणवो घटिकारं [s]कुम्भकारमेतदुवाच।
[t]कस्मात्पुनः त्वं घटिकार भगवतो काश्यपस्य सन्तिके न अगारस्यानगारियं प्रव्रजसि।
[u]एवमुक्ते आनन्द घटिकारो कुम्भकारो ज्योतिपालं माणवमेतदवोचत्। अस्ति [v]मे
सम्यग्ज्योतिपाल मातापितरौ जीर्णवृद्धौ दुर्बलचक्षू तेषां [w]नास्त्यन्यो उपस्थाय[x]को।
15 तेनाहं भगवतो काश्यपस्य अन्तिके न अगारस्यानगारियं प्रव्रजामि। अथ खल्वानन्द
ज्योतिपालस्य माणवस्य [y]नचिरस्यैव [z]गृहवासे [a]अरतिरुत्पद्ये[b]त् प्रव्रज्यायै चित्तं नमे।
अथ खल्वानन्द ज्योतिपालो माणवो येन घटिकारो [c]तेनुपसंक्रमित्वा घटिकारं कुम्भकार-
Sen. 323 मेतदवोचत्। [d]एहि सम्य[e]ग्घटिकार भगवतो काश्यपस्य सन्तिके अनुप्रणिधेमि प्रव्रज्या[f]यै
प्रव्र[g]जिष्यामि अगारस्यानगारियं। अथ खल्वानन्द घटिकारो कुम्भकारो ज्योतिपालं
20 माणवमुपादाय येन भगवान्का[h]श्यपो [i]तेनुपसंक्रमित्वा भगवतः काश्यपस्य पादौ शिरसा
वन्दित्वा एकान्ते अस्थासि।

एकमन्ते[a] स्थितो आनन्द घटिकारो[b] कुम्भकारो भगवन्तं काश्यपमेतदवोचत्। अयं[c] मे भगवं ज्योतिपालो माणवो दारकवयस्यको सहपांशुक्रीडनको प्रियो मनापो अजन्यस्य ब्राह्मणस्य पुत्रो[d]। तं भगवां प्रव्राजेतु[e] उपसंपादेतु च। अथ खल्वानन्द भगवां[f] काश्यपो भिक्षू आमन्त्रेसि[g]। प्रव्राजेथ[h] भिक्षवो ज्योतिपालं माणवं उपसंपादेथ। अथ खल्वानन्द भिक्षवो ज्योतिपालं माणवं प्रव्राजेन्सुः। अथ खल्वानन्द भगवां[i] काश्यपो 5
ज्योतिपालस्मिं[j] भिक्षुस्मिं अचिरोपसम्पन्ने कोशलेहि[पु] काशीषु चारिकां[k] प्रक्रामि।

अथ खल्वानन्द भगवान्काश्यपो काशीषु[l] चारिकां चरमाणो महता भिक्षुसंघेन सार्धं सप्तहि भिक्षुसहस्रेहि येन काशीनां वाराणसी[m] नगरं तदवसारि तदनुप्राप्तः तत्रैव विहरति ऋषिवदने[n] मृगदावे। अश्रोषीत्खल्वानन्द कृकी[o] राजा भगवां किल काश्यपो काशीषु चारिकां चरमाणो महता भिक्षुसंघेन सार्धं सप्तहि भिक्षुसहस्रेहि येन काशीनां 10
वाराणसी[p] नगरं[q] तदवसारि तदनुप्राप्तः तत्रैव विहरति ऋषिवदने[r] मृगदावे। अथ खल्वानन्द कृकी काशिराजा अन्यतरं पुरुषमामन्त्रेसि[s]। एहि त्वं भो पुरुष येन भगवां काश्यपो तेनोपसंक्रमित्वा मम वचनेन भगवन्तं[u] काश्यपं[v] वन्दनं वदेसि[w]। कृकी काशिराजा[x] भगवतो काश्यपस्य पादौ शिरसा वन्दित्वा अल्पाबाधतां च अल्पातंकतां च बलं सुखतां[y] स्पर्शविहारतां च पृच्छति सुवेतनानि[z] च निवेशनं भक्तेन निमन्त्रेति 15
सार्धं भिक्षुसंघेन सचास्य भगवां काश्यपः[a] अधिवासयति। एवमुक्ते आनन्द भगवां काश्यपो[b] तं पुरुषमेतदुवाच[c]। सुखी भवतु कृकी[d] काशिराजा सकुमारो[e] सपरिजनो। Sen. 324
यस्य[f] दानि कालं मन्यसे।

अथ खलु स पुरुषो भगवतो अधिवासनां विदित्वा येन वाराणसी[g] नगरं तेन प्रकामि[h]। अथ खल्वानन्द सो पुरुषो येन कृकी काशिराजा तेनुपसंक्रामि। कृकिं[i] 20
काशिराजमिदमवोचत्। उक्तं मे महाराज[j] तव वचनेन भगवतो काश्यपस्य वन्दनं[k]। अल्पाबाधतां च अल्पातंकतां च सुखं च बलं च स्पर्शविहारतां च पृच्छितो सुवेतनानि

च भक्तेन निमन्त्रितो सार्धं[a] भिक्षुसंघेन । अधिवासेति च भगवां[b] काश्यपो यस्येदानि कालं मन्यसे । अथ खल्वानन्द कृकी काशिराजा[c] इमामेव रात्रिं प्रभूतं प्रणीतं खादनीयं भोजनीयं प्रतिजागरयित्वा[d] तस्या[e] एव रात्रिये अत्ययेनान्यतरं पुरुषमामन्त्रेसि । एहि त्वं भो पुरुष येन भगवां काश्यपो तेनोपसंक्रमित्वा भगवन्तं काश्यपमेवं वदेहि[f] ।
5 समयो[g] भगवं[h] कृकिस्य काशिराज्ञो निवेशने भक्ताये यस्य भगवं[i] कालं मन्यसे । साधु महाराज[j] त्ति सो पुरुषो कृकिस्य[k] काशिराज्ञो प्रतिश्रुत्वा वाराणसीतो नगरातो निर्गम्य येन ऋषिवदनो[l] मृगदावो[m] तेन प्रकामि[n] । अथ खल्वानन्द स पुरुषो येन भगवां काश्यपो तेनुपसंक्रमित्वा[o] भगवतो काश्यपस्य पादौ शिरसा वन्दित्वा भगवन्तं काश्यपमेतदुवाच । समयो भगवं कृकिस्य राज्ञो निवेशने भक्ताय यस्य दानि भगवं[p] कालं
10 मन्यसे । अथ खल्वानन्द भगवां काश्यपो तस्य पुरुषस्य प्रतिश्रुत्वा[q] काल्यस्यैव निवासयित्वा[r] पात्रचीवरमादाय भिक्षुसंघपरिवृतो भिक्षुसंघपुरस्कृतः येन[s] वाराणसीनगरं तेन प्रक्रमते । तेन खलु पुनरानन्द समयेन कृकी[t] काशिराजा कुमारामात्य[u]परिवृतः स्वकस्य निवेशनस्य प्रतिद्वारे अस्थासि भगवन्तं काश्यपं सश्रावकसंघं प्रतिपालयमानो । अद्राक्षीत्खल्वानन्द कृकी काशिराजा भगवन्तं काश्यपं सश्रावकसंघं
15 दूरतो एव[v] आगच्छन्तं[w] । दृष्ट्वा पुनर्येन भगवां काश्यपो सश्रावकसंघो तेनोपसंक्रमित्वा भगवतो काश्यपस्य सश्रावकसंघस्य पादौ शिरसा वन्दित्वा भगवन्तं काश्यपं सश्रावकसंघं पुरस्कृत्वा स्वकं निवेशनं प्रवेशेति । Sen. 325

तेन खलु पुनः समयेन कृकिस्य[x] काशिराज्ञो निवेशने कोकनदो नाम प्रासादो नवो अचिरनिष्ठितो अपरिभुक्तपूर्वो[y] केनचित्[z] श्रमणकेन वा ब्राह्मणेन वा । अथ खल्वा-
20 नन्द कृकी काशिराजा भगवन्तं काश्यपमेतदवोचत् । अयं मे भगवन्निवेशने[a] कोकनदो नाम प्रासादो नवो अचिरनिष्ठितो[b] अपरिभुक्तपूर्वो केनचिच्छ्रमणेन वा ब्राह्मणेन वा तं भगवां प्रथमं परिभुञ्जतु[c] । भगवता परिभुक्त पश्चाद्वयं परिभुञ्जिष्यामः । एवमुक्ते

भगवां[a] काश्यपो कृकिं काशिराजं एतदुवाच। तेन[b] हि महाराज सुखी भव यस्ये[c]-
दानीं कालं मन्यसे। अथ खलु[d] कृकी काशिराजा कोकनदे[e] प्रासादे आसनानि
प्रज्ञापयेत्[f]खाद्यभोज्य[g]मभिनामयेत्। अथ खलु भगवां[h] कोकनदं प्रासादं अभिरुहित्वा[i]
निषीदे प्रज्ञप्त एव आसने यथासने च भिक्षुसंघः। अथ खलु आनन्द कृकी काशिराजा
भगवन्तं काश्यपं स्वहस्तेनैव[j] खादनीयभोजनीयेन सन्तर्पयेत्सं[k]प्रवारयेत्। एकमेकं 5
च सप्तसप्त पुरुषा सप्तसप्तेहि[l] निष्ठानेहि पर्णकुलकेन च शालिना[m]।

अथ खलु कृकी काशिराजा भगवन्तं काश्यपं भुक्ताविं[n] धौतपाणिं अपनीतपात्रं
विदित्वा अन्यतरं नीचकमासनमादाय येन भगवां काश्यपो[o] तेनुपसंक्रमित्वा भगवतो
काश्यपस्य पादौ शिरसा वन्दित्वा एकान्ते निषीदि। एकान्ते निषण्णो[p] आनन्द[q]
कृकी काशिराजा भगवन्तं काश्यपमेतदवोचत्। अधिवासेतु[r] भगवां वाराणसीये 10
नगरे वर्षावासं[s]। अहं भगवं[t] आरामं कारापयिष्यं इमस्मिं[u] च सप्त कूटागारसह-
स्राणि सप्त च पीठसहस्राणि सप्त च[v] वीथिसहस्राणि सप्त च तुरगसहस्राणि सप्त च
आरामिकसहस्राणि उपस्थापयिष्यन्ति यानि[w] भिक्षुसंघं[x] प्रत्येकंप्रत्येकं उपस्थिहि-
ष्यन्ति। एवंरूपेण उपस्थानेन भगवन्तं च उपस्थिहिष्यन्ति भिक्षुसंघं च। एवमुक्ते
आनन्द भगवां[y] काश्यपो कृकिं काशिराजानमेतदवोचत्। न हि महाराज[z] शक्यं 15 Sen. 326
वज्जिषु मे वर्षावासो भविष्यति। द्वितीयं पि तृतीयं पि एवमेव[a] कर्तव्यं। अथ
खल्वानन्द कृकी काशिराजा[b] नैवं भगवां काश्यपो अधिवासेति वाराणसीयं नगरे
वर्षावासं ति प्रारोदीद[c]श्रुकानि च[d] प्रवर्तयि। अथ खल्वानन्द कृकी काशिराजा
भगवन्तं काश्यप[e]मेतदवोचत्। अस्ति पुनर्भगवतो अन्यो पि एवंरूपो उपस्थायको
यथैवाहं। एवमुक्ते आनन्द भगवां काश्यपो कृकिं राजानमेतदवोचत्। अपरिपूर्णो 20
खलु मे त्वं महाराज उपस्थायको। एवमुक्ते आनन्द कृकी[g] काशिराजा भगवन्तं
काश्यपमेतदुवाच। कतमो पुनर्भगवतो मम पूर्णतरो[h] परिपूर्णतरो उपस्थायको। एव-

मुक्ते आनन्द भगवां[a] काश्यपो कृकिं काशिराजानमेतदवोचत् । अस्ति महाराज तुह्यं[b] एवं[c] विजिते वेरुडिङ्गं[d] नाम ब्राह्मणग्रामो[e]। तत्र घटिकारो[f] सो मे उपस्थायको। एवमुक्ते आनन्द कृकी काशिराजा भगवन्तं[g] काश्यपमेतदवोचत् । केवरूपा पुनर्भगवं[h] घटिकारस्य भोगा येहि भगवन्तमुपस्थिहति संघं च । एवमुक्ते[i] आनन्द[j] भगवां काश्यपो कृकिं काशिराजानमेतदवोचत् । घटिकारो महाराज कुम्भकारो यावज्जीवं प्राणाति-[k]पाततो प्रतिविरतो[l] यावज्जीवमदत्तादानातो[m] प्रतिविरतो यावज्जीवं अब्रह्मचर्यातो प्रतिविरतो यावज्जीवं मृषावादात्प्रतिविरतो यावज्जीवं सुरामैरेयमद्यप्रमदस्थानातो प्रतिविरतो यावज्जीवं नृत्यगीतवादिता प्रतिविरतो यावज्जीवं गन्धमाल्यवर्णक-धारणात्प्रतिविरतो यावज्जीवं उच्चशयना[n]महाशयनात्प्रतिविरतो यावज्जीवं विकार-भोजनात्प्रतिविरतो यावज्जीवं जातरूपरजतप्रतिग्रहणात्प्रतिविरतो । न खलु महाराज घटिकारो कुम्भकारो सामं पृथिवीं खनति इति । अथ खलु ये ते भवन्ति[o] मूषोत्किरा वा वारिप्ररोपिता वा वारुच्छिन्ना वा मृत्तिका ततो मृत्तिकामादाय भाजन-कानि कृत्वा चतुर्महापथे निक्षिपति । ये तेहिं[p] भाजनेहि अर्थिका[q] भवन्ति ते तानि भाजनानि मुद्गप्रभिन्नं वा माषप्रभिन्नं[r] वा तण्डुलप्रभिन्नं[s] वा पूरेत्वा उत्किरित्वा भाजनकान्यादाय अनपेक्षा येव प्रक्रमन्ति[t]। एवंरूपा महाराज घटिकारस्य कुम्भ-कारस्य[u] भोगाः[v] येहिं[w] तथागतश्च उपस्थितो संघश्च । मातापितरौ च जीर्णौ वृद्धौ दुर्बलचक्षू ।

एकमिदमहं[x][y] महाराज समयं[z] वेरुडिङ्गे[a] ब्राह्मणग्रामे विहरामि । सोऽहं महाराज काल्यमेव निवासयित्वा पात्रचीवरमादाय वेरुडिङ्गं ब्राह्मणग्रामं पिण्डाय प्रक्रामि। सोऽहं महाराज वेरुडिङ्गे ब्राह्मणग्रामे सावदानं पिण्डाय चरन्तो येन घटिकारस्य कुम्भकारस्य निवेशनं तेनोपसंक्रमित्वा उद्देशे अस्थासि । तेन खलु पुनः समयेन घटिकारो कुम्भकारो[b] स्वकान्निवेशनान्निष्क्रान्तो अभूषि । अथ खलु महाराज

घटिकारस्य कुम्भकारस्य मातापितरौ तथागतमेतदवोचत्। निष्क्रान्तो[a] ते भगवं उपस्थायको। एषो उपरिकोष्ठके सूपश्च[b] ओदनश्च अतो भगवां परिभुंजतु[c]। सोऽहं महाराज उपरिकोष्ठकात्सूपं[d] ओदनं च देवताहि प्रतिग्राहेत्वा[e] परिभुंजित्वा प्रक्रामि। अथ खलु महाराज घटिकारो कुम्भकारो येन स्वकं निवेशनं तेनोपसंक्रमि। अद्राक्षीत्खलु महाराज घटिकारो कुम्भकारो उपरिकोष्ठका सूपं च ओदनं च परिभक्तं[f] दृष्टान[g] 5 पुनर्मातापितरौ[g] एतदवोचत्। केनिमा[h] तात घटिकारस्य उपरिकोष्ठका सूपो च ओदनं[i] च परिभुक्ता। एवमुक्ते[j] महाराज घटिकारस्य[k] कुम्भकारस्य मातापितरौ घटिकारं कुम्भकारमेतदवोचत्। भगवता पुत्र[l] काश्यपेन। अथ खलु महाराज[m] घटिकारस्य कुम्भकारस्य एतदभवत्। लब्धा[n] पुनर्मे सुलब्धा लाभा यस्य मे भगवां[o] काश्यपो[p] यावदेको पि अतिविश्वस्तो। तस्य चैवमर्धमासं प्रीतिसुखं कायं न विजहति[q] सप्ताहं च 10 मातापितॄणां जीर्णवृद्धानां[r][s] दुर्बलचक्षूणां।

एकमिदं महाराज समयं तथागतस्य अरण्यकुटिकाये[t] छाद्यमानाये[u] तृणानि[v] न Sen. 328 संभुणन्ति। सोऽहं[w] महाराज भिक्षूणामामन्त्रयेसि। गच्छथ[x] भिक्षवो घटिकारस्य कुम्भकारस्य निवेशनं तृणानि आनेथ। अथ खलु महाराज ते भिक्षूः येन घटिकारस्य कुम्भकारस्य निवेशनं तेनोपसंक्रमेन्सुः[y]। तेन खलु पुनर्महाराज समयेन घटिकारो 15 कुम्भकारः[z] स्वकातो निवेशनातो निष्क्रान्तो अभूषि। ते तत्र नाद्दशेन्सु[a] तृणानि अद्दशेन्सु नवच्छदनां आवेशनशालां। अथ खलु महाराज ते भिक्षूः येन[b] तथागतो तेनोपसंक्रमित्वा तथागतस्य पादौ शिरसा वन्दित्वा तथागतं[c] च एतदवोचत्। निष्क्रान्तो[d] ते भगवं[e] उपस्थायको नास्ति चात्र कानिचि तृणानि अस्ति चात्र नवच्छदना आवेशनशाला[f]। एवमुक्ते महाराज तां भिक्षुं एतदवोचत्। गच्छथ 20 भिक्षवो घटिकारस्य कुम्भकारस्य नवच्छदनां[g] आवेशनशालां[h] उत्तृणीकृत्वा[i] तृणानि आनेथ। अथ खलु महाराज ते भिक्षू[j] येन घटिकारस्य कुम्भकारस्य निवेशनं

तेनोपसंक्रमित्वा घटिकारस्य कुम्भकारस्य नव[a]च्छ[b]दनामावेशनशालामु[c]त्तृणीकरेन्सु। अथ खलु महाराज घटिकारस्य कुम्भकारस्य मातापितरौ[d] तां भिक्षूनेतदवोचत्। को एष घटिकारस्य कुम्भकारस्य नवच्छ[e]दनामावेशनशालामुत्तृणीकृत्वा तृणानि हरति। एवमुक्ते महाराज ते भिक्षू घटिकारस्य कुम्भकारस्य मातापितरौ एतदुवाच। य[f]त्र आयुष्मं भिक्षूणां भगवतो काश्यपस्य च अ[g]रण्यकुटिकाये छा[h]द्यमानाये तृणा न संभुणन्ति तत्र[i] एतानि तृणानि नीयन्ति। एवमुक्ते महाराज घटिकारस्य[j] कुम्भकारस्य मातापितरौ तां भिक्षूनेतदवोचत्। ह[k]रथ हरथ स्वकानि व। अथ खलु महाराज घटिकारो कुम्भकारो येन स्वकं निवेशनं तेनोपसंक्रमेसि[l]। अद्राक्षीत्खलु महाराज घटिकारो कुम्भकारो नव[m]च्छदनामावे[n]शनशालामुत्तृणीकृतां तृणानि हृतानि दृष्ट्वा च पुनर्मातापितरौ एतदवोचत्। के[o]निमा तात घटिकारस्य कुम्भकारस्य नव[p]च्छदना आवेशनशाला उ[q]त्तृणी-कृता तृणा[r]नि हृतानि। एवमुक्ते घटिकारस्य कुम्भकारस्य मातापितरौ घटिकारं कुम्भकारमेतदवोचत्। भगवतो पुत्र काश्यपस्य अ[r]रण्यकुटिकाये तृणानि न प्रभवन्ति त[s]त्र एतानि भिक्षुभिस्तृणा[t]नि नीतानि। अथ खलु महाराज घटिकारस्य कु[u]म्भकारस्य एत[v]दभवत्। ल[w]ब्धा मे सुलब्धा लाभा यत्पुन[x]रस्य मे भगवां काश्य[y]पो यावदेको पि अतिविश्वस्तो। त[z]स्य चैकमासं प्रीतिसुखं कायं न विजहे अर्धमासं च अन्धानां मातापि[a]तॄणां। न खलु पुनरहं महाराज अभिजानामि घटिकारस्य कुम्भकारस्य इदमेवरूपं दौ[b]र्मनस्यप्रतिलाभं यथैव महाराजे न मे भगवां काश्यपो अ[c]धिवासेसि वाराणसीये नगरे वर्षावासन्ति।

अथ खल्वा[d]नन्द कृकि[e]स्य काशिराज्ञो एतदभवत्। लाभा[f] पुनर्मे सुलब्धा यस्य मे एवंरूपो ब्रह्मचारी विजिते प्रतिवसति द्विपादकानि पुण्यक्षेत्राणि। अथ खल्वानन्द कृकी काशिराजा घटिकारस्य कुम्भकारस्य पर्णकुलशा[g]लिस्य शत वाहां

प्रेषयेत् नवोदकं च तैललवण[a]क्वथनं। अथ खल्वानन्द काश्यपो कृकिं काशिराजानं धर्म्यया कथया संदर्शयित्वा समादापयित्वा समुत्तेजयित्वा संप्रहर्षयित्वा उत्थायासनातो प्रक्रामि।

अथ खल्वानन्द भगवां[b] काश्यपो पश्चाद्भक्तं[c] पिण्डपात्रप्रतिक्रान्तो भिक्षुणामामन्त्रेसि[d]। निषीदथ भिक्षवो[e] सन्निपतिथ भिक्षवो बन्धथ पर्यंकं[f] एषो हि पर्यङ्कं बन्धामि तावद्[g] न भिन्दामि यावन्न इमेषां सप्तानां भिक्षुसहस्राणामेतेहि एवं आसनेहि निषण्णानां[h] अनुपादायाश्रवेभ्यश्चित्तानि विमुक्तानि[i]। साधु भगवन्निति[j] ते भिक्षु भगवतो काश्यपस्य[k] प्रतिश्रुत्वा सन्निषीदेन्सुः[l] संनिपतेन्सुः[m] बन्धेन्सुः पर्यङ्कं। अथ खल्वानन्द ज्योतिपालस्य भिक्षुस्य[n] एकरहोगतस्य प्रतिसंलीनस्य अयमेवरूपश्चेतसो परिवितर्को[o] उत्पद्ये। अहो पुनरहं भवेयमनागतमध्वानं तथागतो[p] अर्हं सम्यक्सम्बुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च। सो इमं च लोकमभिज्ञाय[q] संदेवकं लोकं समारकं सब्रह्मकं सश्रमणं प्रजां सदेवमनुष्यां इहैव वाराणस्यां ऋषिवदने मृगदावे धर्मचक्रं प्रवर्तेयं द्वादशाकारं अप्रवर्तितं[r] श्रमणेन[s] वा ब्राह्मणेन वा देवेन वा मारेण वा केनचिद्वा पुनर्लोके सह धमण। एवं च सर्वाकारसंपन्नं[t] सर्वाकारपरिपूर्णं च धर्मं देशयेयं[u] यथापि भगवां काश्यपो एतर्हि[v]। एवं च देवमनुष्या[w] श्रोतव्यं श्रद्धातव्यं मन्येन्सु तथा भगवतो काश्यपस्य एतर्हि[x]। तं भवेयं[y] बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय महतो जनकायस्यार्थाय[z] हिताय सुखाय देवानां च मनुष्याणां[a] च। हायेन्सु[b] आसुरा काया दिव्या काया अभिवर्धेन्सु[c]। अथ खल्वानन्द भगवां काश्यपो[d] ज्योतिपालस्य भिक्षुस्य इदमेवरूपं चेतसा[e] एव चेतोपरिवितर्कमाज्ञाय अन्यतरं[f] भिक्षुमामन्त्रयसि। एहि त्वं भिक्षु येन ज्योतिपालो[g] भिक्षुस्तेनोपसंक्रमित्वा ज्योतिपालं भिक्षुमेवं[h] वदेहि[i]। शास्ता ते आयुष्मं[j] आमन्त्रेति[k]। उपसंक्रमे[l] येन तथागतो[m]। भगवतो काश्यपस्य प्रतिश्रुत्वा[n] येन ज्योतिपालो भिक्षुस्ते-

Sen. 330

नोपसंक्रमित्वा ज्योतिपालं भिक्षुमेतदवोचत् । [a]शास्ता आयुष्मं ज्योतिपाल आमन्त्रयति
उपसंक्रमे येन भगवां । साध्वायुष्मन्निति आयुष्मां ज्योतिपालस्तस्य भिक्षुस्य प्रतिश्रुत्वा
[b]येन भगवान्काश्यपस्तेनोपसंक्रमित्वा भगवतः काश्यपस्य पादौ शिरसा वन्दित्वा एकान्ते
[c]निषीदि । एकान्ते [d]निषण्णं आयुष्मन्तं ज्योतिपालं भिक्षुं भगवां काश्यप [e]एतदवोचत् ।
5 ननु[f] ज्योतिपाल एकस्य ज्योतिपा[g]लस्य रहोगतस्य प्रतिसंलीनस्य अय[h]मेवंरूपश्चेतसो
परिवि[i]तर्क उत्पद्ये । अहो पु[j]नरहं भवेयं अनागतमध्वानं तथागतोऽर्हं सम्यक्सम्बुद्धो
Sen. 331 विद्याचरणसम्पन्नो सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां[k]
च । सो इमं च लोकमभिज्ञाय परं च लोक[l]मभिज्ञाय सदेवकं च लोकं समारकं
सश्रमणब्राह्मणं प्रजां सदेवमनुष्यां इहैव[m] वाराणसीये [n]ऋषिवदने मृगदावे धर्मचक्रं प्रवर्तेयं
10 त्रिपरिवर्तं द्वादशाकारं अप्रवर्तियं श्रमणेन वा ब्राह्म[o]णेन वा मारेण वा ब्रह्मणा वा
केनचिद्वा पुनर्लोके सह धर्मेण । एवं च सर्वा[p]कारसंपन्नं सर्वाकारपरिपूर्णं धर्मं [q]देशयेयं
यथापि भगवां काश्यपो एतरहिं । एवं[r] च समग्रं[s] भिक्षुसंघं परिहरेयं यथा भगवां
काश्यपो एतर्हि । एवं[t] च मे देवा च मनुष्या च श्रोतव्यं श्रद्धातव्यं मन्येन्सु यथापि
भगवतो काश्यपस्य ए[u]तरहि । तं भवेय्या[v] बहुजनहिताय बहुजनसुखाय लोकानुकंपायै[w]
15 महतो जनका[x]यस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । हायेन्सु[y] आसुरा
काया दिव्या काया अभिवर्द्धे[z]न्सु ।

एवमु[a]क्तो आनन्द ज्योतिपालो भिक्षुर्भगवन्तं काश्यपमेतदवोचत् । एवमेतं
भगवन्[b] । एवमुक्ते आनन्द भगवां ज्योतिपालं भिक्षुमेतदवोचत् । तस्माद्धि ज्योति[c]पाल
इदं सुवर्ण[d]पीठकं दुष्ययुगं बुद्धप्रमुखे भिक्षुसंघे देहि कृत[e]पुण्यास्ते देवा च मनुष्याश्च
02 Sen. 332 श्रोतव्यं श्रद्धातव्यं[f] मनिष्यन्ति । अ[g]दासि खल्वानन्द ज्योतिपालो भिक्षुः सुवर्णपीठकं
दुष्ययुगं [h]बु[i]द्धप्रमुखे भिक्षुसंघे । अथ खल्वानन्द भगवां[j] काश्यपो स्मितं प्रादुष्करित्वा
ज्योतिपालं भिक्षुं व्याकार्षीत् । भविष्यसि त्वं ज्योतिपाल अनागतमध्वानन्तथागतो-[k]

ऽर्हन् सम्यक्सम्बुद्धो विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्या[a]णां च। सो इमं च लोकं अभिज्ञाय परं च लोकमभिज्ञाय सदेवकं च लोकं समारकं सब्रह्मकं सश्रमणब्राह्मणीं[b] प्रजां सदेवमनुष्यां[c] इहैव वाराणसीये ऋषिवदने मृगदावे धर्मचक्रं[d] प्रवर्तयिष्यसि त्रिपरिवर्तं[e] द्वादशाकारं अप्रवर्तितं केनचिच्छ्र[f]मणेन वा ब्राह्मणेन वा देवेन वा मारेण वा केनचि[g]द्वा पुनर्लोके सह धर्मेण[h]। एवं[i] च सर्वाकार- 5

सम्पन्नं सर्वाकारपरिपूर्णं धर्मं देश[j]यिष्यसि यथापि भगवां[k] काश्यपो एतर[l]हिं। एवं च समग्रं[m] श्रावकसंघं परि[n]हरिष्यसि यथापि भगवां काश्यपो एतरहिं। एवं[o] च ते देवा च मनुष्या च श्रोतव्यं श्रद्धातव्यं मन्ये[p]न्सु यथापि भगवतो[q] काश्यपस्य व एतरहि। तं भविष्य[r]सि बहुजनहिताय बहुजनसुखा[s]य लोकानुकंपायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनु[t]ष्याणां च। हायिष्य[u]न्ति आसुरा काया दिव्या काया 10

अभिवर्द्धिष्यन्ति ।

अथ खल्वानन्द भगवता काश्यपेन ज्योतिपा[v]लस्मि व्याकृते भूम्या देवा घोषमुदीरये[w]न्सु। एषो मारिषा[x] भगवता काश्यपेन ज्योतिपालो नाम भिक्षुर्व्याकृतो सो भविष्यति अनागतमध्वानं तथागतोऽर्हं सम्यक्संबुद्धो विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसार[y]थिः शास्[z]ता देवानां च मनुष्याणां च। सो इमं 15

लोकमभिज्ञाय परं च लोकमभिज्ञाय सदेव[a]कं च लोकं समारकं सब्रह्मकं सश्रमणब्राह्मणीं प्रजां सदेवमनुष्यां अभिज्ञाय इह एव वाराणसीये ऋषिवदने मृगदावे धर्मचक्रं प्रवर्तयिष्यति त्रिपरिवर्तं द्वादशाकारं अपरिवर्तितं श्रमणन[वा]ब्राह्मणेन वा देवेन वा [b]मारेण वा ब्रह्मणा वा केनचिद्वा पुनर्लोके सह धर्मेण। एवं सर्वा[c]कारसम्पन्नं सर्वाकार- Sen. 333

परिपूर्णं धर्मं देशयिष्यति यथापि भग[d]वां काश्यपो एतर[e]हिं। तद्भविष्यति बहुजनहियाय 20

बहुजनसुखाय लोकानुक[f]म्पायै महतो जनकायस्यार्था[g]य हिताय सुखाय देवानां च मनुष्याणां च। हायिष्यन्ति आ[h]सुरा काया दिव्या काया अभिवर्द्धिष्य[i]न्ति। भू[j]म्यानां

देवानां घोषं श्रुत्वा चातुर्महाराजकायिका देवाः त्रायस्त्रिंशा यामाः तुषिता निर्माणरतयः परनिर्मि[a]तवशवर्तिन इति । तत्मुहूर्तं यावद् ब्रह्मकायिका देवनि[b]काया घोषमभ्युद्गच्छेत् । एषो मारिष भगव[c]ता काश्यपेन ज्योतिपालो नाम भि[d]क्षु व्याकृतो सो भविष्यति अनागतमध्वानं तथागतोऽर्हं सम्यक्संबुद्धो विद्याचरणसम्पन्नो सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां[e] च । सो इमं च लोकमभिज्ञाय परं च लोकं अभिज्ञाय सदेव[f]कं च लोकं च सब्रह्मकं सश्रमणब्राह्मणीं प्रजां सदेवमनुष्याम[g]-भिज्ञाय इ[h]ह एव वाराणसीयं ऋषिवदने मृगदावे धर्मच[i]क्रं प्रवर्तयिष्यति त्रिपरिव[j]र्तं द्वादशाकारं [अप्रवर्तियं श्रमणे[k]न वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वा केनचिद्वा पु[l]नर्लोके सह धर्मे[m]ण । एवं च सर्वा[n]कारसम्पन्नं च सर्वाकारपरि[o]पूर्णं धम देशयिष्यति यथापि भगवां काश्यपो ए[p]तरहिं । एवं च देवा च मनुष्या च श्रोतव्यं श्रद्धातव्यं म[q]निष्यन्ति] यथापि भगवतो का[r]श्यपस्य ए[s]तर[t]हिं । तद्भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकंपायै[u] महतो जन[v]कायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां[w]] च । हायिष्यन्ति आसुरा काया दिव्या काया अभिवर्द्धिष्यन्ति ।

अथान[x]न्द भगवां काश्य[y]पस्तस्मिं घोषेऽन्तर्हिते तां भिक्षू[z]न्धर्मया [कथया संदर्शये समादापये समुत्तेजये संप्रहर्ष[a]ये । एवं भिक्षवो वितर्के[b]थ एवं[c] मा वितर्केथ एवं मनसिकरोथ[d] एवं मा मनसिकरोथ । आ[e]त्मद्वीपा भिक्षवो विहरथ अनन्यद्वीपाः आत्मशरणाः अनन्य-शरणाः धर्म[g]द्वीपा अनन्यद्वीपाः धर्मशरणा अनन्यशरणाः । अथ खलु भग[h]वां आदीप्तेन कायेन संप्रज्वलितेन सज्योति[i]भूतेन एकं तालं वैहाय[j]सम[k]भ्युद्गतो भिक्षूं धर्मया कथया संदर्[l]-येत्स[m]मादापयेत्समुत्तेजयेत्संप्रहर्षयेत् । एवं[n] भो भिक्षवो वितर्के[o]थ एवं मा वितर्केथ एवं मनसिकरोथ एवं मा मनसिकरोथ आत्म[p]द्वीपा भिक्षवो विहरथ अनन्यद्वीपा आत्म[q]-शरणा अनन्यशरणाः धर्मद्वीपा अन[r]न्यद्वीपा धर्मशरणा अनन्यशरणाः । अथ खल्वा-[s]नन्द भगवां काश्यपो एकतालाद् द्वितालं वैहायसमभ्युद्गम्य द्विता[t]लात् त्रितालं त्रितालातो

चतुतालं चतुतालातो पंचतालं[a] पंचतालातो षट्तालं षट्तालातो सप्ततालं सप्तताल-[b]
संस्थितो तां भिक्षूं धर्मया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति।
एवं भिक्षवः[c] वितर्केथ एवं मा वितर्केथ एवं मनसिकरोथ एवं मा मनसिकरोथ।
आत्मद्वीपा भिक्षवो विहरथ[d] अनन्यद्वीपा आत्मशरणा[e] अनन्यशरणा धर्मशरणा अनन्य-
शरणाः। अथ खल्वानन्द भगवां[f] काश्यपो सप्ततालातो[g] षट्तालसंस्थितो षट्ताला- 5
त्पंचतालं पंचतालातो[h] चतुतालं चतुतालातो[i] त्रितालं[j] त्रितालातो द्वितालं द्वितालातो
एकतालं एकतालातो स्वके आसने निषण्णो तां भिक्षूं[k] धर्मया[l] कथया संदर्शयेत्समादा-
पयेत्समुत्तेजयेत्संप्रहर्षयेत्।[m] एवं भिक्षवो[n] वितर्केथ एवं मा वितर्केथ एवं मनसिकरोथ[o]
एवं मा मनसिकरोथ। आत्मद्वीपा भिक्षवो विहरथ अनन्यद्वीपा आत्मशरणा
अनन्यशरणा[p] धर्मद्वीपा अनन्यद्वीपा धर्मशरणा अनन्यशरणाः। अथ खल्वानन्द 10
भगवां काश्यपः पर्यङ्कं भिन्दन्तो[q] तां भिक्षूं[r] आमन्त्रयसि। अहं भिक्षवो पर्यङ्कं Sen. 335
भिन्दामि सर्वेषामिमेषां सप्तानां भिक्षुसहस्राणां एतेहि एवं[s] आसनेहि[t] निषण्णाना-
मनुपादायाश्रवेभ्यश्चित्तानि[u] विमुक्तानि स्थापयित्वा ज्योतिपालस्य भिक्षुस्य।[v] सो पि[w]
मह्यं व्याकृतो व अनुत्तराये[x] सम्यक्संबोधये। स्यात्[y] खलु पुनरानन्द एवमस्यास्यात्[z]
अन्यो सो तेन कालेन[a] तेन समयेन ज्योतिपालो नाम भिक्षुः[b] अभूषि[c]। नैतदेवं 15
द्रष्टव्यं। अहं सो तेन कालेन तेन समयेन ज्योतिपालो नाम भिक्षु[d] अभूषि।
इदमवोचद्भगवानात्तमना[e] आयुष्मानानन्दो तानि[f] सप्त च भिक्षुसहस्राणि भगवतो
भाषितमभिनन्देन्सुः[g][h]।

इति[i] श्रीमहावस्तुअवदाने ज्योतिपालसूत्रं[j] समाप्तं॥

ज्योतिपालेन भिक्षुणा भगवतो काश्यपस्य सश्रावकसंघस्य[k] य्वागूपानं कृत्वा 20
शतसहस्रेण केशरं[l] क्रीणित्वा भगवन्तं काश्यपं सश्रावकसंघं अभ्योकिरेसि सुवर्ण-
पीठकं च दुष्ययोगं[m] भगवतो काश्यपस्य अदासि। एवं च अनुप्रणिधेसि[n]। यथायं

भगवां[a] काश्यपो सम्यक्संबुद्धो द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतो अशीतिहि
अनुव्यंजनेहि उपशोभितशरीरो अष्टदशेहि आवेणिकेहि[b] बुद्धधर्मेहि[c] समन्वागतो दशहि
तथागतबलेहि बलवां चतुर्हि वैशारद्येहि विशारदो अहो पुन अहं[d] पि अनागतमध्वानं भवेयं
तथागतोऽर्हं सम्यक्संबुद्धो विद्याचरणसंपन्नो सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः
5 शास्ता देवानां च मनुष्याणां च यथायं भगवां काश्यपो एतरहि[e]। एवं च त्रिपरिवर्तं[f]
द्वादशाकारं अनुत्तरं धर्मचक्रं[g] प्रवर्तेयं यथापि भगवान्काश्यपो एतरहिं[h]। एवं च
श्रावकसंघं[i] परिहरेयं[j] यथायं भगवां[k] काश्यपो एतरहिं[l]। एवं च मे ते देवा च मनुष्या
च श्रोतव्यं श्रद्धातव्यं मन्येन्सुः[m] यथापि भगवतो काश्यपस्य एतरहिं[n]। एवं तीर्णो
Sen. 336 तारयेयं मुक्तो मोचयेयं आश्वस्तो आश्वासयेयं परिनिवृतो परिनिर्वापयेयं[o] यथायं
10 भगवां[p] काश्यपो एतरहिं[q]। तं भवेयं[r] बहुजनहिताय बहुजनसुखाय लोकानुकंपाय महतो
जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। ज्योतिपालः[s] काश्यपेन
अनुत्तराये सम्यक्सम्बोधये व्याकृतो[t]। भविष्यसि[u] त्वं ज्योतिपाल[v] अनागतमध्वान[w][x]
तथागतोऽर्हं[y] सम्यक्सम्बुद्धो विद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः
शास्ता देवानां च मनुष्याणां च इमस्मिं एव भद्रकल्पे समनन्तरं[z] द्वात्रिंशतीहि महापुरुष-
15 लक्षणेहि समन्वागतो[a] अशीतिहि अनुव्यंजनेहि उपशोभितशरीरो अष्टादशेहि आवेणि-
केहि बुद्धधर्मेहि समन्वागतो दशहि तथागतबलेहि बलवां चतुर्हि वैशारद्येहि विशारदो।
एवं तीर्णो[b] तारयिष्यसि मुक्तो मोचयिष्यसि आश्वस्तो आश्वासयिष्यसि परिनिवृतो
परिनिर्वापयिष्यसि यथापि अहं एतर्हिं[c]। तं[d] भविष्यसि बहुजनहिताय बहुजनसुखाय
महतो जनकायस्यार्थाय[e] हिताय सुखाय लोकानुकंपायै देवानां च मनुष्याणां[f] च।
20 समनन्तरव्याकृतो[g] पुनर्ज्योतिपालो भिक्षुर्भगवता[h] काश्यपेन[i] सम्यक्संबुद्धेन इयं महा-
पृथिवी अतीव षड्विकारं कम्पे प्रकम्पे संप्रकम्पे भूम्या च देवा घोषमुदीरयेन्सुः[j]
शब्दमनुश्रावयेन्सु[k]। यथान्येषु व्याकरणेषु विस्तरेण कर्तव्यं[l] यथापि[m] अयं भगवतो

अनुप्रणिधिः[a]। काश्यपमनुप्रव्रजित्वा शोधये[b] चारामं पानीयं चोपस्थाये[c] ज्योतिपालो बोधिसत्वो संबुद्धेन अनुशिष्टो।

> [d]य्वागूपानं अदासि सुवर्णपीठकं[e] च वस्त्रयुगं च।
> बोधिसत्वो ज्योतिपालो[f] प्रार्थयमानो भव[g]निरोधं ॥१॥
> सो तं दानं[h] दत्त्वा प्रणिधेसि लोकनायको[i] अस्यां।
> दे[j]व[k]मनुष्याचर्यो[l] आर्ग़ं धर्मं प्रकाशेय्या[m] ॥२॥

एवं च मह्य[n] अस्यात्प्रकाशना धर्मस्य[o] एवं च बहूसत्वा[p] आर्यधर्मेहि[q] निवेशेय्या। Sen. 337 एवं च मे श्रुणेन्सु[r] देवमनुष्या वाक्यं एवं च धर्मचक्रं प्रवर्तेयं[s] वहुजनहिताय धर्मोल्कां प्रज्वालेयं परा[t]हणेयं धर्मभेरीं सपताकां[u] उच्छ्रपयेयं धर्मकेतुं धर्मशंखं प्रपूरयेयं [v]कृच्छ्रापन्नैः जातिजरापीडितै[w]र्मरणधर्मैः भवचक्षुकैः अपायेहि[x] प्रज्ञाचक्षु[y] निवेशेय्यं। संजीवे कालसूत्रे संघाते[z] रौरवे अवी[a]चिस्मिं षट्सु गतिषु विकीर्णा भवसंसारात्परिमोचयेयं नरके प[b]क्कविपक्कां अ[c]पायनिपी[d]डितां मरणधर्मा अल्पसुखदुःखवहुलां भवसंसारात्परिमोचयेयं। अ[e]र्थं चरेयं लोकस्य देवमनुष्याणां दे[f]शेयं[g] धर्मं। एवं वि[h]नयं सत्वा यथायं लोकप्रद्योतो ॥१॥

> बुद्धो तुवं हो[i]हिसि लोकना[j]यको।
> अनागते इमस्मिं भद्रकल्पे।
> कपिलाह्वये [k]ऋषिवदनस्मिं शाकियो।
> [l]तदा तव प्रणिधिविपाको भेष्यति ॥३॥

अ[m]खण्डं अच्छिद्रमशबलकल्माषं परिपूर्णं परिशुद्धं ब्रह्मचर्यं चरित्वा कालगतो तु[n]षिते नाम देवनिकाये श्वेतके[o]तुर्नाम देवपुत्रो महर्द्धिको महानुभावो सोऽन्यां देवां

दिव्येहि दशहि स्थानेहि अभिभवति[a] दिव्येनायुषा दिव्येन वर्णेन दिव्येन सुखेन दिव्येन[b] ऐश्वर्येण दिव्येन परिवारेण दिव्येन रूपेण दिव्येहि शब्देहि दिव्येहि गन्धेहि दिव्येहि रसेहि दिव्येहि[c] प्रष्टव्येहि[d]। [अन्ये[e] पि देवपुत्रा[f] नं आपृच्छे यं परिपृच्छनीयं इति।] अयं श्वेतकेतुर्नाम देवपुत्रो पण्डितो व्यक्तो विशारदो कुशलो मेधावी चत्वारिंशतीहि

5 बुद्धसहस्रेहि अनुप्रव्राजितो। पंचाशीतीनां[g] बुद्धसहस्राणामधिकारकर्माणि[h] कृतानि षण्णवतीहि प्रत्येकबुद्धकोटीहि[i] को पुनर्वादो श्रावकमहेशाख्येहि[j]।

Sen. 338 चत्वारिंशं[k] बुद्धसहस्राणि निर्वृता[l] लोकनायका बुद्धा।
येषु जिनो अचरि ब्रह्मचर्यं प्रार्थयमानो भवनिरोधं[m] ॥४॥
पंचाश बुद्धसहस्राणि निर्वृता लोकनायका[n] बुद्धा[o]।
10 येहि जिनो[p] अकासि कालं प्रार्थयमानो भवनिरोधं ॥५॥
षण्णवति[q] प्रत्येकबुद्धकोटीनि[r] निर्वृत्तानि[s] स्वयंभुनो[t]।
येषु[u] जिन अकासि कालं[v] प्रार्थयमानो भवनिराधं ॥६॥
अपरिमिता[w] अर्हन्तकोटी निर्वृता येषु महाध्यायीषु।
जिनो अकासि कालं[x] प्रार्थयमानो भवनिरोधं ॥७॥
15 एतेषु पूर्वयोगा[y] प्रकीर्तिता शास्तुनो[z] दशवलस्य।
अल्पा[a] भणिता बहू[b] अभणिता येषु[c] जिनो अकासि[d]।
कालं प्रार्थयमानो भवनिरोधं ॥८॥

इति श्रीमहावस्तुअवदाने[e] ज्योतिपालस्य व्याकरणं समाप्तं ॥

राजवंशे[f] आदि। भवति भिक्षवः[g] स कालो भवति स समयो यदयं लोको[h]
20 दीर्घस्याध्वनोऽत्ययेन संवर्तति। संवर्तमाने[i] च पुनर्भिक्षवो लोके[j] योभूयेन सत्वा आभास्वरे देवनिकाये उपपद्यन्ति। भवति भिक्षवः[k] स कालो भवति स समयो

यदयं लोको दीर्घस्याध्वनो अत्ययेन विवर्तति[a]। विवर्तमाने[b] खलु पुर्नभिक्षवो लोके संस्थिते[c] लोकसन्निवेशे अन्यतरा सत्वा[d] आयुःक्षयाय[e] च कर्मक्षयाय च आभास्वरातो देवनिकायातो च्यवित्वा इच्छत्वमागच्छन्ति। ते भवन्ति सत्वा स्वयंप्रभाः अन्तरीक्ष[f]-चरा मनोमया प्रीतिभक्षाः सुखस्थायिनो येनकामंगताः।

धर्मता खलु पुनर्भिक्षवो यं तेषां सत्वानां स्वयंप्रभाणां[g] अन्तरीक्षचराणां[h] मनो- 5
मयानां[i] प्रीतिभक्षाणां[j] सुखस्थायिनां येनकामंगतानां[k]। Sen 339

इमे चन्द्रमसूर्या[l] लोके न[m] प्रज्ञायेन्सुः। चन्द्रमसूर्येहि लोके अप्रज्ञायन्तेहि[n] तारकरूपा[o] लोके न प्रज्ञायेन्सुः। तारकरूपेहि लोके अप्रज्ञायन्तेहि नक्षत्रपथा[p] लोके न प्रज्ञायेन्सुः। नक्षत्रपथेहि लोके न प्रज्ञायन्तेहि रात्रिंदिवा[q] लोके न प्रज्ञायेन्सुः[r]। रात्रिंदिवेहि[s] लोके न प्रज्ञायन्तेहि[t] मासार्धमासा लोके न प्रज्ञायेन्सुः। मासार्धमासेषु 10
लोके अप्रज्ञायमानेषु ऋतुसंवत्सरा[u] लोके न प्रज्ञायन्ते[v]। धर्मता खलु भिक्षवो[w][x] यं तेषां सत्वानां स्वयंप्रभाणामन्तरीक्षचराणां यावद्य नकामंगतानां[y]। अयमपि[z] महापृथिवी उदकह्लदं विय[a] समुदागच्छेत्। सा चाभूद्वर्णसम्पन्ना[b] रससम्पन्ना सय्यथापि[c] नाम[d] क्षुद्रं[e] मध्वनेडकं[f] एवमास्वादो सय्यथापि[g] नाम क्षारसन्तानं[h] वा सर्पिसन्तानं वा एवं वर्णप्रतिभासो। 15

अथ खलु भिक्षवो अन्यतरः[i] सत्वः चपलो लोलुपजातीयो तं पृथिवीरसं अङ्गु-लीये आस्वादेसि। तस्य तं स्वादयति[j] वर्णेनापि गन्धेनापि रसेनापि। अन्ये[k] पि सत्वा[l] तस्य सत्वस्य दृष्ट्वानुकृतिमापद्यन्ते। ते पि पृथिवीरसमंगुल्यास्वादयेन्सुः[m]। तेषामपि तं स्वादयति[o] यावत्[p] रसेनापि। अथ खलु भिक्षवः[q] सो सत्वो अपरकालेन तं पृथिवी-रसं आलोपकारमाहारं आहारेसि। अन्ये पि सत्वा तस्य सत्वस्य दृष्ट्वानुकृतिमाप- ८
द्यन्ते[r]। ते पि तं पृथिवीरसं आलोपकारकमाहारमाहारेन्सुः[s][t]। यतो[u] च भिक्षवस्ते सत्वा तं पृथिवीरसमालोपकारकमाहारमाहरेन्सुः[v][w]। अथ तेषां काये गुरुत्वं च खरत्वं[x] च

कक्खटत्वं च उपनिपते । यापि[a] चाभूत्[b]पूव[c] सानं स्वयंप्रभता[d] अन्तरीक्षचरता मनोमय-
कायता प्रीतिभक्षता सुखस्थायिता येनकामंगमता सा अन्तरहाये[e] ।

Sen. 340 स्वयंप्रभताये अन्तरीक्षचरताये[f] मनोमयताये प्रीतिभक्षताये[g] येन कामंगमताये
अन्तर्हिताये[h] चन्द्रसूर्या लोके प्रज्ञायेन्सु । चन्द्रमसूर्येहि[i] लोके प्रज्ञायन्तेहि तारकरूपा
5 लोके[j] प्रज्ञायेन्सु । तारकरूपेहि लोके प्रज्ञायन्तेहि[k] नक्षत्रपथा लोके प्रज्ञायेन्सु ।
नक्षत्रपथेहि लोके प्रज्ञायन्तेहि[l] रात्रिंदिवा लोके प्रज्ञायन्ते । रात्रिंदिवसेहि लोके
प्रज्ञायन्तेहि मासार्धमासा[m] लोके प्रज्ञायन्ते[n] । मासाधमासेहि प्रज्ञायन्तेहि ऋतुसंवत्सरा[o]
लोके प्रज्ञायेन्सु[p] ।

अथ खलु भिक्षवस्ते सत्वा तं पृथिवीरसमाहारमाहरन्ता[r] तंवर्णा तंभक्षा
10 तदाहारा चिरं दीर्घमध्वानं तिष्ठेन्सुः[s] । ये[t] सानं बहु आहारमाहारेन्सु[u] ते अभून्सु
दुर्वर्णाः ये अल्पमाहारमाहारेन्सुः[v][w] वर्णवन्ता । ये अभून्सुः[x] वर्णवन्ताते[y] दुर्वर्णा
सत्वा अवजानेन्सुः । वयमस्म[z] वर्णवन्तो सत्वा इमे भवन्ति दुर्वर्णा । तेषां वर्णा-
भिवर्णप्रत्ययानां मानाभिमानजातायानां विहरतां[b] पृथिवारसा अन्तरहाये ।
भूमिपर्पटकं[c][d] प्रादुर्भवेय[e] सय्यथापि नाम[f] च्छात्रकं एवं वर्णप्रतिभासो । सो च अभूद्वर्ण-[g]
15 सम्पन्नो च गन्धसंपन्नो च सय्यथापि नाम क्षुद्रो मधु अनेडको एवमास्वादो ।

अथ खलु भिक्षवो ते सत्वा अस्मिं पृथिवीरसे अन्तरहिते इमं उदानमुदानयेन्सु[h] ।
अहो रसो अहो रसेति । सय्यथापि नाम भिक्षव[i] एतरहि मनुष्या सुभोजनखादिता
सुखिता भुक्ताविनो[k] इमं उदानमुदानेन्तीति[l] । अहो रसो अहा[m] रसो[n] ति । तमेव पौराण-
मक्षरमग्रिन्यं उपनिपते अर्थं[o] चास्य न विभावयेन्सु ।

20 Sen. 341 अथ खलु भिक्षवस्ते सत्वास्तं भूमिपपटकं[p] आहारं आहरन्ता तद्वर्णा तद्भक्षास्तदाहारा[q][r]
चिरं दीर्घमध्वानं तिष्ठेन्सु[s] । ये[t] सानं बहुं आहारं आहारेन्सु[u] अभून्सु दुर्वर्णा[v] ये अल्पं
आहारं आहारेन्सु[w] ते अभून्सु वर्णवन्तो[x] । ये सुवर्णवन्तो[y] त्रे दुर्वर्णा सत्वां अवजानेन्सुः ।

[a]वयमस्म [b]वर्णवन्ता [c]इमे भवन्ति सत्वा दुर्वर्णा । तेषां [d]वर्णाभिवर्ण[e]प्रत्ययानां [f]मानाभि-
[g]मानजातीयानां विहरतां [h]भूमिपर्पटकमन्तरहाये वनलताप्रादुर्भूता[i] । [j]सय्यथापि नाम
[k]कलम्बुका एवं वर्णप्रतिभासापि [l]अभूवर्णसम्पन्नापि गन्धसम्पन्नापि रससम्पन्नापि
तद्यथापि नाम क्षुद्रं [m]मधुमनेडकं [n]एवमास्वादा । अथ खलु भिक्षवो ते सत्वा
[o]भूमिपर्पटके अन्तर्हिते अनुस्तनयेन्सु । अहो वदि अहो वदीति । तद्यथापि नाम 5
भिक्षव एतरहिं सत्वा केनचिदेवं दुःखधर्मेण [p]स्पृष्टा [q]अनुस्तनयेन्सु अहो [r]वदि अहो
[s]वदीति तमेव पौराणमक्षरमग्निन्यां उपनिपते [t]अर्थं च न विभावयेन्सुः । [u]एवमेव
भिक्षवस्ते सत्वास्तस्मि[v] भूमिपर्पटके अन्तर्हिते [w]अनुस्तनयेन्सुः । अहो वदि अहो
वदीति ।

अथ खलु भिक्षवस्ते सत्वास्तस्मि[x] भूमिपर्पटके अन्तर्हिते [y]वनलतां आहार- 10
माहरन्ता[z] तं[a]वर्णा तं[b]भक्षा तदाहारा चिरं दीर्घ[c]मध्वानं तिष्ठेन्सु । [d]ये सानं [e]बहुं आहारं
[f]आहारेन्सुः ते [g]अभून्सुः दुर्वर्णा ये अल्पा[h]हारं[i] [j]आहारेन्सु अभून्सु वर्ण[k]वन्तो । [l]ते तां
[m]दुर्वर्णां सत्वा [n]अवजानेन्सु । [o]वयमस्म वर्णवन्तो इमे भवन्ति सत्वा दुर्वर्णा । तेषां
[p]वर्णाभिवर्णप्रत्ययानां मानाभिमानजातीयानां वनलता अन्तरहाये । शालि [q]अकणो Sen. 342
अतुषः सुर[r]भितण्डुलः [s]प्रादुर्भवेया सायं लूनो सो काल्यं भवति जातो पक्को विरूढो 15
अवदानं पि से न प्रज्ञायति । सो पि काल्यं[u] लूनो[v] सायं भवति जातो पक्वो विरूढो
अवदानं चास्य न प्रज्ञायति । अथ खलु भिक्षवो ते सत्वा[w] तस्मि वनलते अन्तर्हिते अनु-
[x]स्तनयेन्सुः । अहो वदे अहो वदे ति । तद्यथापि नाम भिक्षवो एतरहिं सत्वा केनचिदेवं
दुःखधर्मेण स्पृष्टा अनुस्तनयेन्सु । [y]तमेव पौराणमक्षरमग्निन्यां उप[z]निपते[a] अर्थं चास्य
न विभावयेन्सु । अथ खलु भिक्षवस्ते [b]सत्वा तस्मि वनलते अन्तर्हिते तं [c]शालिं 20
[d]अकणं [e]अतुषं सुरभितण्डुलफलं [f]आहारमाहरन्ता चिरं दीर्घमध्वानं तिष्ठेन्सु । यतो
च भिक्षवस्ते सत्वास्तं शालिं अकणं [g]अतुषं सुरभितण्डुलफलं [h]आहार[i]माहा[j]रेन्सु । अथ

सानं स्त्रीणां स्त्रीव्यंजनानि प्रादुर्भवे[a]न्सुः पुरुषाणां पुरुषव्यंजनानि प्रादुर्भवेन्सुः । अतिवेलं
रक्तचित्ता अन्योन्यं उपनि[b]ध्यायेन्सु । अन्योन्यं रक्तचित्ता अन्योन्यं उपनिध्याय ते अन्य-
मन्यं सं[c]रज्जेन्सु अन्यमन्यं संरक्ता अन्यमन्यं दू[d]षयेन्सुः। ये खलु पुनर्भि[e]क्षवः सत्वा[f]न्पश्येन्सु
[g]दूष्यमाणां ते तत्र दण्डं[h] पि क्षि[i]पेन्सु लेष्टुं[j] पि क्षिपेन्सु पांशु[k] पि क्षिपेन्सु । अधर्मो भवन्तो
लोके प्रादुर्भूतो असद्धर्मो [l]भवन्तो लोके प्रादुर्भूतः यत्र हि नाम सत्वो सत्वं दूषयति ।
तद्यथापि नाम भिक्षवः एतरहिं दारिकाये[m] वुह्यन्तीये[n] दण्डं निक्षिपन्ति लेष्टुं पि निक्षि-
पन्ति तं एव पौराणमक्षरमग्निन्यं उपनिपते अर्थं चास्य न विभावयेन्सु । तदा खलु
पुनस्तं भिक्षवः[o] ; अधर्मसंमतं अयज्ञ[p]संमतं च अविनयसंमतं च । एतरहिं खलु पुनस्तं[q]
भिक्षवः, धर्मसंमतं च यज्ञसंमतं विनयसंमतं च । अथ खलु भिक्षवस्ते सत्वा ते[r]न
Sen.343 10 अधर्मेण अर्ती[s]यन्ता वि[t]जिगुप्सिता एकाहं पि विप्रवसेन्सु द्व्यहं पि विप्रवसेन्सु त्र्यहं पि
[u]विप्रवसेन्सु चतुरहं पि वि[v]प्रवसेन्सु पंचाहं पि पक्षं पि मासं पि विप्र[w]वसेन्सु गृहकर्मान्ता
पि का[x]रयेन्सु यावदेव तस्यैव अधर्मस्य प्रतिच्छ[y]दनार्थं ।

अथ खलु भिक्षव, अन्यतरस्य[z] सत्वस्य शालिहारकं गतस्य एतदभवत् । किमस्य
नाम अहं[a] किलमामि ? कथं पुराहं किलमामि, सायं सायमासाय प्रातं प्रा[b]तरासाय ?
15 यं नूनाहं स[c]कृदेव दैवसं सायंप्रातिकं शालिं हरेयं । आहरे खलु भिक्षवो सो
सत्वो सकृदेव दैवसं सायंप्रातिकं शालिं । अथ खलु भिक्षवः अन्यतरो सत्वो तं
सत्वमेतदुवाच । एहि भो सत्व [d]शालिहा[e]रं गमिष्यामः । एवमुक्त भिक्षवः सो
सत्वो तं सत्वमेतदुवाच । गच्छ तुवं सत्व आनीतो मया सकृदेव सायंप्रातिको शालिः ।
अथ खलु भिक्षवस्त[f]स्यापि सत्वस्य एतदभवत् । एवं पि क्रियमाणं शोभनं भवति । यं
नूनाहं पि सकृदेव द्व्यहिकं त्रीहिकं तं [g]शालिं हरेयं । आहरे खलु भिक्षवः सो पि सत्वो
20 सकृदेव द्वीहिकं त्रीहिकं शालिं । अथ खलु भिक्षवः अन्यतरो सत्वो तं सत्वमेत-
दुवाच । एहि भो सत्व [h]शालि[i]हारं गमिष्या[j]मः । एवमुक्ते सो[k] सत्वो तं सत्व-
मेतदुवाच । गच्छ त्वं भो स[l]त्व आनीतो मया[m] सकृदेव द्वीहिको त्रीहिको शालिः ।

अथ खलु भिक्षवस्तस्यापि सत्वस्य एतदभवत्। एवं पि दानि क्रियमाणं[a] शोभनं[b] भवति। यं नूनाहं पि चतुरहिकं पंचाहिकं शालिमाहरेयं[c]। आहरे खलु भिक्षवो[d] सो पि सत्वो सकृदेव चतुरहिकं[e] पंचाहिकं शालिं। यतो च भिक्षवः[f] ते सत्वा[g] तं शालिं अकणं अतुषं सुरभि[h]तण्डुलफलं[i] संनिधिकारं परिभुंजेन्सु अथ खलु तस्य शालिस्य कणो च तुषो च प्रादुर्भवति। सो पि सायं[j] लूनो काल्यं न जातो भवति न[k] पक्को न विरूढो अवदानं चास्य प्रज्ञायति। 5

अथ खलु भिक्षवस्ते सत्वा[l] संधावेन्सुः संधावित्वा संनिपतित्वा मन्त्रां[m] मन्त्रयेन्सुः[n]। वयं भवन्तो[o] स्वयंप्रभा अन्तरीक्षचरा मनोमया प्रीतिभक्षा[p] सुखस्थायिनो येनकामंगमाः[q]। तेषामस्माकं स्वयंप्रभाणामन्तरीक्षचराणां मनोमयानां प्रीतिभक्षाणां सुखस्थायिनां येनकामंगमानां[r] चन्द्रम[s]सूर्या[t] लोके न प्रज्ञायेन्सु। चन्द्रमसूर्येहि लोके 10 अप्रज्ञायन्तेहि[u] तारकरूपा न प्रज्ञायन्ते[v]। तारकरूपेहि[w] लोके अप्रज्ञायन्तेहि नक्षत्रपथा[x] लोके[y] न प्रज्ञायन्ते[z][a]। नक्षत्रपथेहि लोके अप्रज्ञायन्तेहि रात्रिदिवा[b] न प्रज्ञायेन्सु। रात्रि-दिवेहि अप्रज्ञायन्तेहि मासार्धमासा न प्रज्ञायेन्सु[c]। मासार्धमासेहि अप्रज्ञायन्तेहि ऋतु-संवत्सरा न प्रज्ञायेन्सु। अयमपि महापृथिवी उदकह्लदं विय समुदागच्छति। तद्य-थापि नाम सर्पिसन्तानं वा क्षीरसन्तानं वा एवं वर्ण प्रतिभासा[d] अभूषि वर्णसंपन्ना[e] च 15 गन्धसंपन्ना च रससम्पन्ना च तद्यथापि नाम क्षुद्रो मधु अनेलको[f] एवमास्वादो। अथ खलु भवन्तो[g] अन्यतरो[h] सत्वो चपलो[i] लोलुपजातीयो तं पृथिवीरसं अंगुलीये आस्वा-दयते। तस्य तमास्वादयति[j] वर्णेनापि गन्धेनापि रसेनापि। अथ खलु भवन्तो[k] सो सत्वो तं पृथिवीरसमग्र[l]कालेन आलोपकारकमाहारं[m] आहारेसि। वयं तस्य सत्वस्य दृष्ट्वानुकृतिमापद्यन्ता तं पृथिवीरसं आलोपकारकमाहारं[n] आहरेम[o]। यतो च वयं 20 भवन्तो पृथिवीरसमालोप[p]कारकमाहारं[q] आहरेम[r] अथास्माकं काये[s] गुरुत्वं च खरत्वं च कक्खटत्वं च उपनिपते। यापि सा पूर्वं[t] अभूषि स्वयंप्रभता अन्तरीक्षचरता मनोमय-

Sen. 344

कायता प्रीतिभक्षता[a] सुखस्थायिता[b] येनकामंगमता सा अन्तरहायि। तेषां[c] भवन्तो
स्वयंप्रभताये अन्तरीक्षचरताये[d] मनोमयकायताये[e] प्रीतिभक्षताये सुखस्थायिताये[f]
येनकामंगमताये अन्तरहिताये चन्द्रमसूर्या[g] लोके प्रज्ञायेन्सुः। चन्द्रमसूर्येहि लोके[h]
Sen. 345 प्रज्ञायन्तेहि तारकरूपा प्रज्ञायेन्सुः। तारकरूपेहि प्रज्ञायन्तेहि[i] नक्षत्रपथा[j] प्रज्ञायेन्सुः।
5 नक्षत्रपथेहि[k] प्रज्ञायन्तेहि रात्रिंदिवा[l] प्रज्ञायेन्सुः। रात्रिंदिवेहि प्रज्ञायन्तेहि मासार्ध-[m]
मासा प्रज्ञायेन्सुः। मासार्धमासेहि प्रज्ञायन्तेहि[n] ऋतुसंवत्सरा प्रज्ञायेन्सुः। ते
वयं[o] भवन्तो तं पृथिवीरसमाहारमाहरन्ता[p] तंवर्णा[q] तंभक्षा तदाहारा[r] चिरं दीर्घमध्वानं[s]
तिष्ठेम। यतो[t] च सानं केचित्पापका अकुशला धर्मा[u] प्रज्ञायेन्सुः[v] यतो च मो
केचिद्भवन्तो पापका अकुशला धर्माः प्रज्ञायेन्सुः। अथ सो पृथिवीरसो[w] अन्तर्हायि
10 भूमिपर्पटकं[x] प्रादुर्भवे[y]। तद्यथा[z] छात्रकं एवं वर्णप्रतिभासो[a] पि अभूषि वर्णसम्पन्नो च
गंधसम्पन्नो[b] च। तद्यथापि नाम क्षुद्रमधु अनेडको एवमास्वादो। ते वयं भवन्तो
भूमिपपटकं[c] आहारमाहरन्ता[d] तंवर्णा[e] तंभक्षा तदाहारा चिरं दीर्घमध्वानं तिष्ठेम।
यतो[f] च सानं केचित्पापका[g] अकुशला धर्मा प्रज्ञायेन्सु अथ सो भूमिपर्पटकं[h] अन्तरहाये
वनलता प्रादुर्भवेत्। तद्यथापि नाम कलम्बुका एवं वर्णप्रतिभासा[i] सापि अभूषि[j] वर्ण-
15 सम्पन्ना च गन्धसम्पन्ना च रससम्पन्ना च। सय्यथापि[k] नाम क्षुद्रो मधु अनेडका
एवमास्वादः। ते वयं भवन्तो,[l] तां वनलतामाहारमाहरन्ता[m] तंवर्णा तंभक्षा तदाहारा
दीघमध्वानं तिष्ठेम। यतो च सानं केचित्पापका अकुशला धर्मा प्रज्ञायेन्सुः[n] यतो च
मो भवन्तो केचित्पापका अकुशला धर्मा[o] प्रज्ञापयेन्सुः। अथ सा वनलता अन्तरहाये।
शालि अकणं अतुषं सुरभितण्डुलफलं[p] प्रादुर्भवेया। सायं[q] लूनो सो काल्यं भवति जातो
20 पक्वो विरूढो अवदानं पि च से न प्रज्ञायति। ते वयं भवन्तो[r] तं शालि[s] अकणं अतुषं
Sen. 346 सुरभितण्डुलफलं आहारमाहरन्ता[t] तंवर्णा[u] तंभक्षा तदाहारा चिरं दीर्घमध्वानं हि
तिष्ठेम। यतो च सानं केचित्पापका[v] अकुशला धर्मा[w] प्रज्ञायेन्सुः[x]। अथ से शालिस्य

कणो च तुषो च पर्[a]यवनहे। यो च सायं [b]लूनो सो काल्यं न जातो न पक्वो न विरूढो अवदानं पि च से प्रज्ञा[d]यति। यो [c]पि काल्यं लूनो सो सायं न जातो न पक्वो न विरूढो अवदा[f]नं पि च से प्रज्ञायति। यं [g]नूनं वयं शालिक्षेत्राणि वि[h]भजेम सीमां [i]नयेम:। इमं [j]भवन्तानां शालिक्षेत्रं इममस्माकं मापयेम:। अथ खलु भिक्षवस्ते सत्वा: शालिक्षेत्रा[k]णां सीमा नयेन्सु:। इमं भवन्तानां शालि[l]क्षेत्रं [m]इममस्माकं।

अथ खलु भि[n]क्षव: अन्यतरस्य सत्वस्य शालिहारं गतस्य एतदभवत्। [o]किं स्य नाम अहं भविष्यं। केन स्य नाम [p]जीवितं कल्पेष्यं स्वके शालिभागे [q]क्षीणे। यं नूनाहं अदिन्नं अन्यातकं शालि[r]मादि[s]येयं।

अथ खलु भिक्षवो, सो सत्वो स्वकं शालिभागं परिरक्षन्तो अदिन्नमन्यातकं शालिभागमादियेय। अद्राक्षीद्भि[t]क्षवोऽन्यतर: सत्वो तं सत्वमदिन्नमन्यातकं शालि[u] आदियन्तं दृष्ट्वा च [v]पुनर्येन सो सत्वो तेनोपसंक्रमित्वा तं सत्वमेतदवोचत्। अपि नाम त्वं भो सत्व। अदिन्नमन्[w]यातकं [x]शालिमादियसि। एवमुक्ते भिक्ष[y]व: सो सत्वस्तं सत्वमेतदवोचत। तेन हि [z]भो सत्व न पुनरेवं भविष्यति। द्वितीयं पि भिक्षवस्तस्य सत्वस्य शालिहार गतस्य एतदभवत्।

किं स्य नाम अहं भविष्यं। केन स्य नाम अहं [a]जीविकां कल्पेष्यं स्वके शालिभागे क्षीणे।

यं नूनाहं [b]अदिन्नमन्यातकं शालिमादियेयं। द्वितीयं पि भिक्षव: सो सत्वो स्वकं शालि[c]भागं प[d]रिरक्षन्तो [e]अदिन्नमन्यातकं शालिमादियेत्। अद्राक्षीद्भिक्षव: सो [f]सत्वस्तं सत्वं द्वितीयकं पि अदिन्नमन्यातकं शालि[g]मादियन्तं। दृष्ट्वा च पुनर्येन [h]सो सत्वो तेनोपसंक्रमित्वा तं सत्वमेतदवोचत्। अस्ति नाम त्वं भो सत्व यावद्वितीयकं पि अदिन्नमन्यातकं शालिमादियसि। द्वितीयं पि भिक्षव: सो सत्वो तं सत्वमेतद- Sen, 347

